३

## कुलपरिशुद्धिपरिवर्तस्तृतीयः ।

इति हि भिक्षवो बोधिसत्त्व एवं धर्मकालसंचोदितः संस्ततो महाविमानान्निष्क्रम्य
धर्मोच्चयो नाम महाप्रासादो यत्र निषद्य बोधिसत्त्वस्तुषितेभ्यो देवेभ्यो धर्मं देशयति स्म, तं
बोधिसत्त्वोऽभिरोहति स्म, अभिरुह्य च सुधर्मे सिंहासने निषीदति स्म । अथ ये देवपुत्रा
बोधिसत्त्वस्य सभागाः समयानसंप्रस्थितास्तेऽपि तमेव प्रासादमभिरोहन्ति स्म । ये च दश-
दिक्संनिपतिता बोधिसत्त्वाः सभागचरिता बोधिसत्त्वस्य देवपुत्राश्च, तेऽपि तं प्रासादमभिरुह्य यथा-
प्रत्यर्हेषु सिंहासनेषु स्वकस्वकेषु निषीदन्ति स्म अपगताप्सरोगणा अपगतप्राकृतदेवपुत्राः R 15
समानाध्याशयपरिवारा अष्टषष्टिकोटिसहस्रपरिवाराः[1] ॥

इति हि भिक्षवो द्वादशभिर्वर्षैर्बोधिसत्त्वो मातुः कुक्षिमवक्रमिष्यतीति ॥

अथ शुद्धावासकायिका देवपुत्रा जम्बुद्वीपमागत्य दिव्यं वर्णमन्तर्धाप्य[2] ब्राह्मणवेषेण
ब्राह्मणान् वेदानध्यापयन्ति स्म । यस्यैवरूपा[3] गर्भावक्रान्तिर्भवति, स द्वात्रिंशता महापुरुषलक्षणैः L 14
समन्वागतो भवति । यैः समन्वागतस्य द्वे गती भवतो न तृतीया । सचेदगारमध्यावसति, राजा
भवति चक्रवर्ती चतुरङ्गो विजितवान् धार्मिको धर्मराजः सप्तरत्नसमन्वागतः । तस्येमानि
सप्त रत्नानि भवन्ति । तद्यथा—चक्ररत्नं हस्तिरत्नं अश्वरत्नं स्त्रीरत्नं मणिरत्नं गृहपतिरत्नं
परिणायकरत्नमेव सप्तमम् ॥

कथंरूपेण राजा चक्रवर्ती चक्ररत्नेन समन्वागतो भवति ? इह राज्ञः क्षत्रियस्य मूर्धा-
भिषिक्तस्य तदेव पोषधेयं च[4] पञ्चदश्यां शिरःस्नातस्योपवासोषितस्योपरिप्रासादतलगतस्य
स्त्र्यागारपरिवृतस्य पूर्वस्यां दिशि दिव्यं चक्ररत्नं प्रादुर्भवति । सहस्रारं सनेमिकं सनाभिकं
सुवर्णवर्णकर्मालंकृतं[5] सप्ततालमुच्चैः समन्ताद् दृष्ट्वान्तःपुरं राज्ञः क्षत्रियस्य मूर्धाभिषिक्तस्य तद्दिव्यं
चक्ररत्नमेवं[6] भवति । श्रुतं खलु मया यस्य किल राज्ञः क्षत्रियस्य मूर्धाभिषिक्तस्य तदेव पोषधेयं
पञ्चदश्यां शिरःस्नातस्योपवासोषितस्योपरिप्रासादतलगतस्य स्त्र्यागारपरिवृतस्य पूर्वस्यां दिशि दिव्यं
चक्ररत्नं प्रादुर्भवति, स भवति राजा चक्रवर्ती । नूनमहं राजा चक्रवर्ती यन्न्वहं[7] दिव्यं चक्ररत्नं R 16
मीमांसयेयम् । अथ राजा क्षत्रियो मूर्धाभिषिक्त एकांसमुत्तरासङ्गं कृत्वा दक्षिणजानुमण्डलं
पृथिव्यां प्रतिष्ठाप्य दक्षिणेन पाणिना तद्दिव्यं चक्ररत्नं प्रार्थयेदेवं चावेदयेत्—प्रवर्तयस्व भट्ट[8] दिव्यं
चक्ररत्नं धर्मेण माधर्मेण । अथ तद्दिव्यं चक्ररत्नं राज्ञा क्षत्रियेण मूर्धाभिषिक्तेन प्रवर्तितं सम्यगेव
ऋद्धौ[9] विहायसा पूर्वेण व्रजति । अन्वेति राजा चक्रवर्ती सार्धं चतुरङ्गेण बलकायेन । यत्र च[10]
पृथिवीप्रदेशे तद्दिव्यं चक्ररत्नं संतिष्ठते, तत्र राजा क्षत्रियो मूर्धाभिषिक्तो वासं कल्पयति सार्धं L 15
चतुरङ्गेण बलकायेन । अथ ये[11] ते भवन्ति पूर्वस्यां दिशि राजानो मण्डलिनः, ते रूप्यपात्रीं वा[12]

---

१ R °परिवारा इति for °वाराः. २ R अन्तर्धाय for °धाप्य. ३ R एवंरूपा for एवरूपा. ४ R om. च. ५ R °वर्णे for °वर्ण°. ६ R °मेवं for °मेव. ७ R योन्वहं for यन्न्वहं. ८ R भर्तः for भट्ट. ९ R ऋद्धयै for ऋद्धौ. १० R om. च. ११ R ये ये for ये ते. १२ R om. वा.

सुवर्णचूर्णपरिपूर्णामादाय स्वर्णपात्रीं वा रूप्यचूर्णपरिपूर्णामादाय राजानं चक्रवर्तिनं प्रत्युत्तिष्ठन्ति-एहि देव स्वागतं देवाय, इदं देवस्य राज्यमृद्धं च स्फीतं च क्षेमं च सुभिक्षं च रमणीयं चाकीर्णबहुजनमनुष्यं च। अध्यावसतु देव स्वकं विजितमनुप्राप्तम्। एवमुक्ते राजा क्षत्रियो मूर्धाभिषिक्तस्त्राता तान्[1] राज्ञो मण्डलिन एतदवोचत्—कारयन्तु भवन्तः स्वकानि राज्यानि धर्मेण। हन्त भवन्तो मा प्राणिनं घातयिष्यथ, मादत्तादास्यथ[2], मा कामेषु मिथ्या चरिष्यथ, मा मृषा[3] वक्ष्यथ, यावन्मा मे विजिते अधर्ममुत्पद्यते, माधर्मचारिणो रोचेथं[4]। एवं खलु राजा क्षत्रियो मूर्धाभिषिक्तः पूर्वां दिशं विजयति। पूर्वां दिशं विजितः[5] पूर्वं समुद्रमवगाह्य पूर्वं समुद्रमवतरति। पूर्वं समुद्रमवतीर्य
R 17 सम्यगेव ऋद्धया विहायसा दक्षिणेन व्रजति। अन्वेति राजा चक्रवर्ती सार्धं चतुरङ्गेण बलकायेन। पूर्ववदेवं दक्षिणां दिशं विजयति। यथा दक्षिणामेवं[6] पश्चिमामुत्तरां दिशं विजयति। उत्तरां दिशं विजित्य उत्तरसमुद्रमवगाहते। अवगाह्योत्तरात्समुद्रात्प्रत्युत्तरति। प्रत्युत्तीर्य सम्यगेव ऋद्धया विहायसा राजधानीमागत्योपरि अन्तःपुरद्वारेऽक्षतमेवास्थात्। एवंरूपेण राजा क्षत्रियो मूर्धाभिषिक्तश्चक्ररत्नेन समन्वागतो भवति॥

कथंरूपेण राजा चक्रवर्ती हस्तिरत्नेन समन्वागतो भवति? इह राज्ञः क्षत्रियस्य मूर्धा-
L 16 भिषिक्तस्य पूर्ववद्धस्तिरत्नमुत्पद्यते। सर्वश्वेतं सप्ताङ्गसुप्रतिष्ठितं[7] स्वर्णचूडकं स्वर्णध्वजं स्वर्णालंकारं[8] हेमजालप्रतिच्छन्नं ऋद्धिमन्तं विहायसा गामिनं विकुर्वणाधर्मिणं[9] यदुत बोधिर्नाम नागराजो[10]। यदा च राजा क्षत्रियो मूर्धाभिषिक्तस्तद्धस्तिरत्नं मीमांसितुकामो भवति, अथ सूर्यस्याभ्युद्गमनवेलायां तद्धस्तिरत्नमभिरुह्य इमामेव महापृथिवीं समुद्रपरिखां समुद्रपर्यन्तां समन्ततोऽन्वाहिण्ड्य राजधानी[11]मागत्य प्रशासनरतिः प्रत्यनुभवति। एवंरूपेण राजा चक्रवर्ती हस्तिरत्नेन समन्वागतो भवति॥

कथंरूपेण राजा चक्रवर्ती अश्वरत्नेन समन्वागतो भवति? अथ राज्ञः क्षत्रियस्य मूर्धाभिषिक्तस्य पूर्ववदश्वरत्नमुत्पद्यते। सर्वनीलं[12] कृष्णाशिरसं मुञ्जकेशमाद्दतवदनं स्वर्णध्वजं स्वर्णालंकारं हेमजालप्रतिच्छन्नं ऋद्धिमन्तं विहायसा गामिनं विकुर्वणाधर्मिणं[13] यदुत
R 18 बालाहको[14] नामाश्वराजम्। यदा च[15] राजा क्षत्रियो मूर्धाभिषिक्तोऽश्वरत्नं मीमांसितुकामो भवति, अथ सूर्यस्याभ्युद्गमनवेलायामश्वरत्नमभिरुह्य[16] इमामेव महापृथ्वीं समुद्रपरिखां समुद्रपर्यन्तां समन्तन्तोऽन्वाहिण्ड्य राजधानीमागत्य प्रशासनरतिः प्रत्यनुभवति। एवंरूपेण राजा चक्रवर्ती अश्वरत्नेन समन्वागतो भवति॥

कथंरूपेण राजा चक्रवर्ती मणिरत्नेन समन्वागतो भवति? इह राज्ञः क्षत्रियस्य मूर्धाभिषिक्तस्य पूर्ववन्मणिरत्नमुत्पद्यते शुद्धनीलवैडूर्य[17]मष्टांशं सुपरिकर्मकृतम्। तस्य खलु पुनर्मणिरत्नस्याभया सर्वमन्तःपुरमवभास्येन[18] स्फुटं भवति। यदा च राजा क्षत्रियो मूर्धाभिषिक्तस्तं

---

१ R om. तान्. २ R मा दत्ता दास्यथ for मादत्तादास्यथ. ३ L मृषां for मृषा. ४ R रोचथ for रोचेथ. ५ R विजित्य for विजितः. ६ R दक्षिणमिव for दक्षिणामेव. ७ R सप्ताङ्ग. for सप्ताङ्ग°. ८ R° लंकारहेम° for °लंकारं हेम°. ९ R विकुर्वाणधर्मिणं for विकुर्वणा°. १० R नागराजो. ११ R स्वराज° for राज°. १२ R नील° for नीलं. १३ R विकुर्वाणा° for विकुर्वणा°. १४ R बालाहकं for बालाहको. १५ R om. च. १६ R सूर्यस्यात्युद्गमन° for सूर्यस्याभ्युद्गमन°. १७ R वैदूर्य° for वैडूर्य°. १८ R अवभास्येव for अवभास्येन.

मणिरत्नं मीमांसितुकामो भवति, अथ रात्र्यामर्धरात्रसमयेऽन्धकारतमिस्रायां तं मणिरत्नं ध्वजाग्रे [1]उच्छ्रापयित्वा उद्यानभूमिं निर्याति सुभूमिदर्शनाय । [2]तस्य खलु पुनर्मणिरत्नस्याभया L 17 सर्वावन्तं चतुरङ्गबलकायमवभासेन स्फुटीभवति सामन्तेन योजनम् । ये खलु [3]पुनस्तस्य मणिरत्नस्य सामन्तके मनुष्याः प्रतिवसन्ति, ते तेनावभासेन[4]आस्फुटं समाना अन्योन्यं संजानन्ति, अन्योन्यं पश्यन्ति, अन्योन्यमाहुः—उत्तिष्ठ भद्रमुखाः कर्मान्तानि कारयत, आपणानि प्रसारयत, दिवा मन्यामहे सूर्यमभ्युद्गतम् । [5]एवंरूपेण राजा क्षत्रियो मूर्धाभिषिक्तो मणिरत्नेन समन्वागतो भवति ॥

कथंरूपेण राजा चक्रवर्ती स्त्रीरत्नेन समन्वागतो भवति ? इह राज्ञः क्षत्रियस्य मूर्धाभिषिक्तस्य पूर्ववत्स्त्रीरत्नमुत्पद्यते । सदृशी क्षत्रिया नातिदीर्घा नातिह्रस्वा नातिस्थूला नातिकृशा नातिगौरी नातिकृष्णा अभिरूपा प्रासादिका दर्शनीया । तस्याः सर्वरोमकूपेभ्यश्चन्दनगन्धं प्रवाति, R 19 मुखाच्चोत्पलगन्धं प्रवाति । काचिलिन्दिकसुखसंस्पर्शा । शीतलकाले चास्या उष्णसंस्पर्शानि गात्राणि भवन्ति, उष्णकाले च शीतसंस्पर्शानि । सा राजानं चक्रवर्तिनं मुक्त्वा नान्यस्मिन् मनसापि रागं करोति किं पुनः कायेन । एवंरूपेण राजा चक्रवर्ती स्त्रीरत्नेन समन्वागतो भवति ॥

कथंरूपेण राजा चक्रवर्ती गृहपतिरत्नेन समन्वागतो भवति ? इह राज्ञः क्षत्रियस्य मूर्धाभिषिक्तस्य पूर्ववद् गृहपतिरत्नमुत्पद्यते पण्डितो व्यक्तो मेधावी दिव्यचक्षुः । स तेन दिव्यचक्षुषा सामन्तेन योजनं सस्वामिकानि निधानानि पश्यति, [6]अस्वामिकानि [7]निधानानि पश्यति । स यानि तानि भवन्ति अस्वामिकानि, तै राज्ञश्चक्रवर्तिनो धनेन करणीयं करोति । एवंरूपेण राजा चक्रवर्ती गृहपतिरत्नेन समन्वागतो भवति ॥

कथंरूपेण राजा चक्रवर्ती परिणायकरत्नेन समन्वागतो भवति ? इह राज्ञः क्षत्रियस्य L 18 मूर्धाषिभिक्तस्य पूर्ववत्परिणायकरत्नमुत्पद्यते [8]पण्डितो व्यक्तो मेधावी । राज्ञचक्रवर्तिनश्चिन्तित[9]मात्रेण उद्योजयितव्यं सेनामुद्योजयति स्म । एवंरूपेण राजा चक्रवर्ती परिणायकरत्नेन समन्वागतो भवति । एभिः सप्तरत्नैः समन्वागतो भविष्यति । [10]भवंति चास्य पुत्रसहस्रं शूराणां वीराणां वराङ्गरूपिणां परसैन्यप्रमर्दकानाम् । स इमां [11]महीपृथिवीं ससागरपर्यन्तामखिलामकण्टकामदण्डेनाशस्त्रेणाभिनिर्जित्याध्यासयति । सचेदगारादनगारिकां प्रव्रजिष्यति, वान्तछन्दरागो नेता अनन्य- R 20 देवः शास्ता देवानां च मनुष्याणां चेति ॥

[12]तथा अन्येऽपि देवपुत्रा जम्बुद्वीपमागत्य प्रत्येकबुद्धेभ्य आरोचयन्ति स्म — रिञ्चत मार्षा बुद्धक्षेत्रम् । इतो द्वादशवत्सरे बोधिसत्त्वो मातुः कुक्षिमवक्रमिष्यति ॥

तेन खलु पुनर्भिक्षवः समयेन राजगृहे महानगरे [13]गोलाङ्गुलपरिवर्तने पर्वते मातङ्गो नाम प्रत्येकबुद्धो विहरति स्म । स तं शब्दं श्रुत्वा कर्दम इव शिलायां [14]प्रस्थाय विहायसा सप्ततालमात्रमत्युद्गम्य च तेजोधातुं समापद्योल्केव [15]परिनिर्वाणोऽयम् । यत्तस्य पित्तश्लेष्मस्नाय्वस्थिमांस-

---

१ R उत्थाप° for उच्छ्राप°. २ R तस्य twice. ३ R om. पुनस्. ४ R आस्फुटं भास° for आस्फुट समाना. ५ R om. °रूपेण. ६ R सस्वामिकानि for अस्वा°. ७ R om. from निधानानि upto अस्वामिकानि. ८ R om. पण्डितो. ९ R °मात्रेणोद्योजयितव्यां for °मात्रेण उद्योजयितव्यं. १० R om. भवति. ११ R महापृथ्वीं. १२ R अथान्ये for तथान्ये. १३ R गोलीगुल° for गोलाङ्गुल°. १४ R प्रास्थाय. १५ R परिनिर्वाति स्म for परिनिर्वाणोऽयम्.

रुधिरं चासीत्, तत्सर्वं तेजसा पर्यवदानमगच्छत्। शुद्धशरीराण्येव भूमौ प्रापतन्। अद्यापि च तानि ऋषिपदान्येव संज्ञायन्ते ॥

तेन खलु पुनर्भिक्षवः समयेन वाराणस्यां[1] ऋषिपतने[2] मृगदावे पञ्च प्रत्येकबुद्धशतानि विहरन्ति स्म। तेऽपि तं शब्दं श्रुत्वा विहायसा सप्ततालमात्रमत्युद्गम्य तेजोधातुं समापद्योल्केव
L 19 परिनिर्वान्ति[3] स्म। यत्तेषां पित्तश्लेष्ममांसास्थिस्नायुरुधिरं चाभूत्, तत्सर्वं तेजसा पर्यवदानमगच्छत्। शुद्धशरीराण्येव[4] भूमौ प्रापतन्। अस्मिन्[5]नृषयः पतिता इति तस्मात्प्रभृति ऋषिपतन[6]संज्ञोदपादि[7]। अभयदत्ताश्च तस्मिन् मृगाः प्रतिवसन्ति इति तदग्रेण मृगदावस्य मृगदाव[8] इति संज्ञोदपादि ॥

R 21 इति हि भिक्षवो बोधिसत्त्वस्तुषितवरभवनस्थितश्चत्वारि महाविलोकितानि विलोकयति स्म। कतमानि चत्वारि ? तद्यथा—कालविलोकितं द्वीपविलोकितं देशविलोकितं कुलविलोकितम्[9] ॥

किं कारणं[10] भिक्षवो बोधिसत्त्वः कालविलोकितं विलोकयति स्म ? न बोधिसत्त्व आदिप्रवृत्ते लोके सत्त्वसंवर्तनीकालसमये मातुः कुक्षिमवक्रामति, अथ तर्हि यदा व्यक्तो लोकः सुस्थितो भवति, जाति प्रज्ञायते, जरा प्रज्ञायते, व्याधि प्रज्ञायते, मरणं प्रज्ञायते, तदा बोधिसत्त्वो मातुः कुक्षिमवक्रामति ॥

किं कारणं बोधिसत्त्वो द्वीपविलोकितं विलोकयति स्म ? न बोधिसत्त्वा प्रत्यन्तद्वीपा[11] उपपद्यन्ते, न पूर्वविदेहे, नापरगोदानीये, न चोत्तरकुरौ। अथ तर्हि जम्बुद्वीप एवोपपद्यन्ते ॥

किं कारणं भिक्षवो बोधिसत्त्वो देशविलोकितं विलोकयति स्म ? न बोधिसत्त्वाः प्रत्यन्तजनपदेषूपपद्यन्ते[12], येषु मनुष्या[13] अन्धजात्या जडा एडमूकजातीया अभव्याः सुभाषितदुर्भाषितानामर्थं ज्ञातुम्। अथ तर्हि बोधिसत्त्वा मध्यमेष्वेव जनपदेषूपपद्यन्ते ॥

L 20 किं कारणं[14] भिक्षवो बोधिसत्त्वः कुलविलोकितं विलोकयति स्म ? न बोधिसत्त्वा हीनकुलेषूपपद्यन्ते चण्डालकुलेषु वा वेणुकारकुले वा रथकारकुले वा पुष्कस[15]कुले वा। अथ तर्हि कुलद्वये एवोपपद्यन्ते ब्राह्मणकुले क्षत्रियकुले च। तत्र यदा ब्राह्मणगुरुको लोको भवति, तदा ब्राह्मणकुले उपपद्यन्ते। यदा क्षत्रियगुरुको लोको भवति, तदा क्षत्रियकुले उपपद्यन्ते। एतर्हि
R 22 भिक्षवः क्षत्रियगुरुको लोकः[16]। तस्माद्बोधिसत्त्वाः क्षत्रियकुले उपपद्यन्ते। तमर्थं[17] च संप्रतीत्य बोधिसत्त्वस्तुषितवरभवनस्थश्चत्वारि महाविलोकितानि विलोकयति स्म ॥

एवं चावलोक्य तूष्णीमभूत्। इति हि भिक्षवस्ते देवपुत्राः बोधिसत्त्वस्यान्योन्यं परिपृच्छन्ति स्म—कतमस्मिन् कुलरत्ने कियद्रूपायां जनन्यां बोधिसत्त्वः प्रतिष्ठेतेति। तत्र केचिदाहुः—इदं वैदेहीकुलं मगधेषु जनपदेषु ऋद्धं च स्फीतं[18] च क्षेमं सुभिक्षं च। इदं प्रतिरूपमस्य बोधिसत्त्वस्य गर्भस्थानम्। अपरे त्वाहुः—न तत्प्रतिरूपम्। तत्कस्मात् ? तथा हि—तन्न

---

१ R वाराणस्या. २ R ऋषिपत्तने for °पतने. ३ R परिनिर्य्यान्ति for परिनिर्वान्ति. ४ R °च्छुद्धबुद्ध for °च्छुद्ध°. ५ R प्रापतन् तस्मिन् for प्रापतन् अस्मिन्. ६ R °पत्तन for °पतन. ७ R °संज्ञोत्पादिता for °संज्ञोदपादि. ८ R मृगदावो twice. ९ After °विलोकितम् R adds च. १० R किं कारणं हि. ११ R प्रत्यन्तद्वीपेषु for °द्वीपा. १२ R om. उपपद्यन्ते। येषु. १३ L मनुष्यान्धत्वा for मनुष्या अन्धजात्या. १४ R किं कारणं हि. १५ R पुक्कस° for पुष्कस°. १६ R om. लोकः. १७ L समर्थं for तमर्थं. १८ R स्फीतक्षेमं.

मातृशुद्धं पितृशुद्धं अप्लुतं[1] चञ्चलमनवस्थितं परित्त[2]पुण्याभिष्यन्दितं न विपुलपुण्याभिषिक्तं सत्कुलप्रदेशोपचारं नोद्यानसरस्तडागाकीर्णं कर्वटमिव[3] प्रत्यन्तवासम्। तेन न तत्प्रतिरूपम्॥

अपरे त्वाहुः—इदं पुनः कौशलकुलं महावाहनं च महापरिवारं च महाधनं च। तत्प्रतिरूपमस्य बोधिसत्त्वस्य गर्भप्रतिसंस्थानायेति। अपरे[4]ऽप्याहुः—तदप्यप्रतिरूपम्। तत्कस्माद्धेतोः? तथा हि—कौशलकुलं मातङ्गच्युत्युपपन्नं न मातृपितृशुद्धम्। हीनाधिमुक्तिकं न च कुलोदितं न चापरिमितधनरत्ननिधिसमुत्थितम्। तेन न तत्प्रतिरूपम्॥

अपरे त्वाहुः[5]—इदं वंशराजकुलं ऋद्धं च स्फीतं च क्षेमं च सुभिक्षं च। इदं प्रतिरूपमस्य L 21
बोधिसत्त्वस्य गर्भस्थानमिति। अपर एवमाहुः—इदमप्यप्रतिरूपम्। किं कारणम्? तथाहि— R 23
वंशराजकुलं प्राकृतं च चण्डं च न चोज्ज्वलिततेजसं परपुरुषजन्मावृतं च न मातृपितृस्वतेजः-कर्मा[6]भिनिर्वृत्तं च। उच्छेदवादी च तत्र राजा। तेन तदप्यप्रतिरूपम्॥

अपरे[7]ऽप्याहुः—इयं वैशाली महानगरी ऋद्धा च स्फीता च क्षेमा च सुभिक्षा च रमणीया चाकीर्णबहुजनमनुष्या च वितर्दिनिर्यूहतोरणगवाक्षहर्म्यकूटागारप्रासादतलसमलंकृता च पुष्पवाटिकावनराजिसंकुसुमिता च अमरभवनपुरप्रकाश्या। सा प्रतिरूपास्य बोधिसत्त्वस्य गर्भप्रतिसंस्थानायेति। अपर आहुः—साप्यप्रतिरूपा। किं कारणम्? तथा हि—तेषां नास्ति परस्परन्यायवादिता, नास्ति धर्माचरणम्, नोत्तमध्यवृद्धज्येष्ठानुपालिता। एकैक एव मन्यते—अहं राजा, अहं राजेति। न च कस्यचिच्छिष्यत्वमभ्युपगच्छति न धर्मत्वम्। तेन साप्यप्रतिरूपा॥

अपरे त्वेवमाहुः—इदं प्रद्योत[8]कुलं महाबलं च महावाहनं च परचमूशिरसि विजयलब्धं च। तत्प्रतिरूपमस्य बोधिसत्त्वस्य गर्भप्रतिसंस्थानायेति। अपरे त्वेवमाहुः—तदप्यप्रतिरूपम्। किं कारणम्? तथा हि—ते चण्डाश्च चपलाश्च रौद्राश्च परुषाश्च साहसिकाश्च, न च कर्म[9]दर्शिनः। तेन तदप्यप्रतिरूपमस्य बोधिसत्त्वस्य गर्भप्रतिसंस्थानायेति॥

अपर एवमाहुः—इयं मथुरा नगरी ऋद्धा च स्फीता च क्षेमा च सुभिक्षा चाकीर्णबहुजनमनुष्या च। राज्ञः सुबाहोः कंसकु[10]लस्य शूरसेनेश्वरस्य राजधानिः। सा प्रतिरूपास्य L 22
बोधिसत्त्वस्य गर्भप्रतिसंस्थानायेति। अपरे त्वाहुः—साप्यप्रतिरूपा। किं कारणम्? तथाहि—
स राजा मिथ्यादृष्टिकुलवंशप्रसूतो दस्यु[11]राजा। न युज्यते चरमभविकस्य बोधिसत्त्वस्य R 24
मिथ्यादृष्टिकुले उपपत्तुम्। तेन साप्यप्रतिरूपा॥

अपरे[12]ऽप्याहुः—अयं हस्तिनापुरे महानगरे राजा पाण्डवकुलवंश[13]प्रसूतः शूरो वीर्यवान् वराङ्गरूपसंपन्नः परसैन्यप्रमर्दकानां तत्कुलं प्रतिरूपमस्य बोधिसत्त्वस्य गर्भप्रतिसंस्थानायेति। अपरेऽप्याहुः—तदप्यप्रतिरूपम्। किं कारणम्? तथा हि—पाण्डवकुलप्रसूतैः कुलवंशोऽति-

१ R अपुत्रं for अप्लुतं. २ R परिशुष्यत्पुण्यकं for परित्तपुण्याभिष्यन्दितं. ३ R कर्पटमिव. ४ R अपरे त्वाहुः. ५ R अपरेऽप्याहुः°. ६ R °कर्माभिनिवृत्तं for °निर्वृत्तं. ७ R अपरे त्वाहुः. ८ R प्रद्योतनकुलं for प्रद्योतकुलं. ९ R कर्मादर्शिनः. १० R सूरकंसकुलस्य for कंसकुलस्य शूरसेनेश्वरस्य. ११ R दस्यू राजा. १२ R पुनरन्ये त्वाहुः. १३ R om. °वंश°.

व्याकुलीकृतो युधिष्ठिरो धर्मस्य पुत्र इति कथयति, भीमसेनो वायोः, अर्जुन इन्द्रस्य, नकुलसहदेवावश्विनोरिति। तेन तदपि कुलमप्रतिरूपमस्य बोधिसत्त्वस्य गर्भसंस्थानायेति ॥

अपर आहुः—इयं मिथिला नगरी अतीव रमणीया मैथिलस्य राज्ञः सुमित्रस्य निवासभूमिः। स राजा प्रभूतहस्त्यश्वरथपदातिबलकायसमन्वितः प्रभूतहिरण्यसुवर्णमणिमुक्तावैडूर्यशङ्खशिलाप्रवालजातरूपरजतवित्तोपकरणः सर्वसामन्तराजाभीतबलपराक्रमो मित्रवान् धर्मवत्सलः। तत्कुलं प्रतिरूपमस्य बोधिसत्त्वस्य गर्भप्रतिसंस्थानायेति। अन्य ऊचुः—तदप्यप्रतिरूपम्[1]। अस्त्यसौ राजा सुमित्र एवंगुणयुक्तः, किं त्वतिवृद्धो न समर्थः प्रजामुत्पादयितुमतिबहुपुत्रश्च। तस्मात्तदपि कुलमप्रतिरूपमस्य बोधिसत्त्वस्य गर्भप्रतिसंस्थानायेति ॥

एवं भिक्षवस्ते बोधिसत्त्वा देवपुत्राश्च सर्वस्मिन् जम्बुद्वीपे षोडशजानपदेषु यानि कानिचिदुच्चोच्चानि राजकुलानि, तानि सर्वाणि[2] व्यवलोकयन्तः (तानि) सर्वाणि सदोषाण्यद्राक्षुः। तेषां
L 23 R 25 चिन्तामनस्कारप्रयुक्तानां ज्ञानकेतुध्वजो नाम देवपुत्रोऽवैवर्तिको बोधाय कृतनिश्चयोऽस्मिन्महायाने। स तां महतीं बोधिसत्त्वदेवपर्षदमेतदवोचत्—एतन्मार्षा एतमेव बोधिसत्त्वमुपसंक्रम्य परिप्रक्ष्यामः[3]—कीदृग्गुणसंपन्ने कुले चरमभविको बोधिसत्त्वः प्रत्याजायत इति। साध्विति ते सर्वे कृताञ्जलिपुटा बोधिसत्त्वमुपसंक्रम्य पर्यप्राक्षुः—कीदृग्गुणसंपन्ने सत्पुरुषकुलरत्ने चरमभविको बोधिसत्त्वः प्रत्याजायत इति ॥

ततो बोधिसत्त्वस्तं महान्तं बोधिसत्त्वगणं देवगणं च व्यवलोक्य एतदवोचत्—चतुष्षष्ट्याकारैर्मार्षाः[4] संपन्नकुलं[5] भवति यत्र चरमभविको बोधिसत्त्वः प्रत्याजायते। कतमैश्चतुष्षष्ट्याकारैः? तद्यथा। अभिज्ञातं[6] च तत्कुलं भवति। अक्षुद्रानुपघाति च तत्कुलं भवति। जातिसंपन्नं च तत्कुलं भवति। गोत्रसंपन्नं[7] च तत्कुलं भवति। पूर्वपुरुषयुगसंपन्नं च तत्कुलं भवति। अभिजातपुरुषयुगसंपन्नं च तत्कुलं भवति। अभिलक्षितपुरुषयुगसंपन्नं च तत्कुलं भवति। महेशाख्यपुरुषयुगसंपन्नं च तत्कुलं भवति। बहुस्त्रीकं च तत्कुलं भवति। बहुपुरुषं च तत्कुलं भवति। अभीतं च तत्कुलं भवति। अदीनालीनं च तत्कुलं भवति। अलुब्धं च तत्कुलं भवति। शीलवच्च तत्कुलं भवति। प्रज्ञावच्च[8] तत्कुलं भवति। अमात्यावेक्षितं च तत्कुलं भवति भोगान्[9] परिभुनक्ति। अवन्ध्यशिल्पनिवेशनं[10][11] च तत्कुलं भवति भोगान् परिभुनक्ति।
R 26 L 24 दृढमित्रं च तत्कुलं भवति। तिर्यग्योनिगतप्राणानुपरोधकरं च तत्कुलं भवति। कृतज्ञं च कृतवेदितं[12] च तत्कुलं भवति। अच्छन्दगामिनं[13] च तत्कुलं भवति। अदोषगामिनं च तत्कुलं भवति। अमोहगामिनं च तत्कुलं भवति। अभयगामिनं च तत्कुलं भवति। अनवद्यभीरु[14] च तत्कुलं भवति। अमोहविहारि च तत्कुलं भवति। स्थूलभिक्षं च तत्कुलं भवति। क्रियाधिमुक्तं च तत्कुलं भवति। त्यागाधिमुक्तं च तत्कुलं भवति। दानाधिमुक्तं च तत्कुलं भवति। पुरुषकारमति च तत्कुलं

१ R °प्रतिरूपमस्ति। असौ. २ R om. सर्वाणि. ३ R प्रच्छामः for परिप्रक्ष्यामः. ४ R मार्षैः for मार्षाः. ५ R संपन्नं for संपन्न°. ६ R अतिज्ञातं for अभि°. ७ R om. गोत्रसंपन्नं च तत्कुलं भवति. ८ R व्रतवच्च for प्रज्ञावच्च. ९ R om. भोगान् परिभुनक्ति. १० L अवध्य for अवन्ध्य°. ११ R °निवेशितं for °निवेशनं. १२ R om. कृतवेदितं च. १३ R स्वच्छन्द° for अच्छन्द°. १४ R °भिक्षु for °भीरु.

भवति । दृढविक्रमं च तत्कुलं भवति । बलविक्रमं च तत्कुलं भवति । श्रेष्ठविक्रमं च तत्कुलं
भवति । ऋषिपूजकं च तत्कुलं भवति । देवतापूजकं च तत्कुलं भवति । चैत्यपूजकं च तत्कुलं
भवति । पूर्वप्रेतपूजकं च तत्कुलं भवति । अप्रतिबद्धवैरं च तत्कुलं भवति । दशदिग्विघुष्टशब्दं
च तत्कुलं भवति । महापरिवारं च तत्कुलं भवति । अभेद्यपरिवारं च तत्कुलं भवति । अनुत्तर-
परिवारं च तत्कुलं भवति । कुलज्येष्ठं च तत्कुलं भवति । कुलश्रेष्ठं च तत्कुलं भवति । कुल-
वशिताप्राप्तं च तत्कुलं भवति । महेशाख्यं च तत्कुलं भवति । मातृज्ञं च तत्कुलं भवति ।
पितृज्ञं च तत्कुलं भवति । श्रामण्यं च तत्कुलं भवति । ब्राह्मण्यं च तत्कुलं भवति । प्रभूत-
धनधान्यकोषकोष्ठागारं च तत्कुलं भवति । प्रभूतहिरण्यसुवर्णमणिमुक्ताजातरूपरजतवित्तोपकरणं च
तत्कुलं भवति । प्रभूतहस्त्यश्वोष्ट्रगवेडकं च तत्कुलं भवति । प्रभूतदासीदासकर्मकरपौरुषेयं च R 27
तत्कुलं भवति । दुष्प्रधर्षं च तत्कुलं भवति । सर्वार्थसिद्धं च तत्कुलं भवति । चक्रवर्तिकुलं च
तत्कुलं भवति । पूर्वकुशलमूलसहायोपचितं च तत्कुलं भवति । बोधिसत्त्वकुलकुलोदितं च L 25
तत्कुलं भवति । अनवद्यं च तत्कुलं भवति सर्वजातिवाददोषैः सदेवके लोके समारके सब्रह्मके
सश्रमणब्राह्मणिकायां प्रजायाम् । एभिर्मार्षाश्चतुष्षष्ट्याकारैः समन्वागतं च तत्कुलं भवति यस्मिंश्चरम-
भविको बोधिसत्त्व उत्पद्यते ॥

द्वात्रिंशता मार्षा[1] गुणाकारैः समन्वागता सा स्त्री भवति यस्याः[2] स्त्रियाश्चरमभविको
बोधिसत्त्वः कुक्षाववक्रामति । कतमैर्द्वात्रिंशता ? यदुत अभिज्ञा[3]तायां स्त्रियां कुक्षौ चरमभविको
बोधिसत्त्वोऽवक्रामति । अभिलक्षि[4]ताया अच्छिद्रोपचाराया जातिसंपन्नायाः कुलसंपन्नाया रूपसंपन्नाया
नामसंपन्नाया आरोहपरिणाहसंपन्नाया अप्रसूतायाः शीलसंपन्नायाः त्यागसंपन्नायाः स्मि[5]तमुखायाः
प्रदक्षिणग्राहिण्या व्यक्ताया विनीताया विशा[6]रदाया बहुश्रुतायाः पण्डिताया अशठाया
अमायाविन्या अक्रोधनाया अपगतेर्ष्याया अमत्सराया अचञ्चलाया अचपलाया अमुखरायाः
क्षान्तिसौरभ्यसंपन्नाया ह्र्यपत्राप्यसंपन्नाया मन्दरागद्वेषमोहाया अपगतमातृग्रामदोषायाः पतिव्रतायाः
सर्वाकारगुणसंपन्नायाः स्त्रियाः कुक्षौ चरमभविको बोधिसत्त्वोऽवक्रामति । एभिर्मार्षा द्वात्रिंशताकारैः
समन्वागता सा स्त्री यस्याः स्त्रियाः कुक्षौ चरमभविको बोधिसत्त्वोऽवक्रामति ॥

न खलु पुनर्मार्षाः कृष्णपक्षे बोधिसत्त्वो मातुः कुक्षाववक्रामति, अपि तु शुक्लपक्षे । एवं R 28
पञ्चदश्यां पूर्णायां पूर्णिमायां पुष्यनक्षत्रयोगे पोषधपरिगृहीताया मातुः कुक्षौ चरमभविको
बोधिसत्त्वोऽवक्रामति ॥

अथ खलु ते बोधिसत्त्वास्ते च[7] देवपुत्रा बोधिसत्त्वस्यान्तिकादिमामेवरूपां कुलपरिशुद्धिं L 26
मातृपरिशुद्धिं च श्रुत्वा चिन्तामनस्कारा अभूवन् । कतमं कुलं एवंगुणसमन्वागतं भवेद्यावद्विध-
मनेन सत्पुरुषेण निर्दिष्टम् ? तेषां चिन्तामनस्कारप्रयुक्तानामेतदभूत् — इदं खल्वपि शाक्यकुलं ऋद्धं
च स्फीतं च क्षेमं च सुभिक्षं च रमणीयं चाकीर्णबहुजनमनुष्यं च । राजा शुद्धोदनो मातृशुद्धः

१ R मार्षैः for मार्षाः. २ R यस्यां for यस्मिन्. ३ R अभिज्ञातायाः स्त्रियाः. ४ R अभिलषिताया
for अभिलक्षि°. ५ R स्मितमुख्याः for मुखायाः. ६ L विशालदायाः. ७ R om. च.
ल. ३

पितृशुद्धः [1]पत्नीशुद्धोऽपरिकृष्टसंपन्नायाः स्वाकारसुविज्ञापकः पुण्यतेजस्तेजितो [2]महासंमतकुले
प्रसूतश्चक्रवर्तिवंशकुलकुलोदितोऽपरिमितधननिधिरत्नसमन्वागतः कर्मदृक्च विगतपापदृष्टिकश्च।
सर्वशाक्यविषये चैक[3]राजा पूजितो मानितः श्रेष्ठिगृहपत्यमात्यपारिषद्यानां प्रासादिको दर्शनीयो
नातिवृद्धो नातितरुणो[4]ऽभिरूपः सर्वगुणोपेतः शिल्पज्ञः कालज्ञ आत्मज्ञो धर्मज्ञस्तत्त्वज्ञो लोकज्ञो
लक्षणज्ञो धर्मराजो धर्मेणानुशास्ता अवरोपितकुशलमूलानां च सत्त्वानां कपिलवस्तुमहानिलयः।
येऽपि तत्रोपपन्नास्तेऽपि तत्स्वभावा एव। राज्ञश्च शुद्धोदनस्य [5]मायाँ नाम देवी सुप्रबुद्धस्य शाक्याधि-
पतेर्दुहिता नवतरुणी रूपयौवनसंपन्ना अप्रसूता अपगतपुत्रदुहितृका सुरूपा सलेख्यविचित्रेव
R 29 दर्शनीया देवकन्येव सर्वालंकारभूषिता अपगतमातृग्रामदोषा सत्यवादिन्यकर्कशा अपरुषा अचपला-
नवद्या कोकिलस्वरा अप्रलापिनी मधुराप्रियवादिनी व्यपगताखिलक्रोधमदमानदर्पप्रतिघा अनीर्षुका
कालवादिनी त्यागसंपन्ना शीलवती पतिसंतुष्टा पतिव्रता परपुरुषचिन्तामनस्कारापगता [6]समसंहत-
L 27 शिरःकर्णनासा भ्रमरवरसदृशकेशी सुललाटी सुभ्रूर्व्यपगतभ्रुकुटिका स्मितमुखी पूर्वाभिलापिनी
श्लक्ष्णमधुरवचना प्रदक्षिणग्राहिणी ऋज्वी अकुटिला अशठा अमायाविनी ह्र्यपत्राप्यसंपन्ना अचपला
अचञ्चला अमुखरा अविकीर्णवचना मन्दरागद्वेषमोहा क्षान्तिसौरभ्यसंपन्ना करचरणनयन-
स्वारक्षितबुद्धिः मृदुतरुणहस्तपादा काँचिलिन्दिकसुखसंस्पर्शा नवनलिनेन्दीवरपत्रसुविशुद्ध-
नयना [8]रक्ततुङ्गनासा सुप्रतिष्ठिताङ्गी सेन्द्रायुधमिव यष्टिः सुविनीता सुविभक्ताङ्गप्रत्यङ्गा
अनिन्दिताङ्गी बिम्बोष्ठी चारुदशना अनुपूर्वग्रीवा स्वलंकृता सुमना वार्षिकी सुविशुद्धदर्शना
सुविनीतांसा अनुपूर्वसुजातबाहुश्चापोदरी अनुपहतपार्श्वा गम्भीरनाभिमण्डला वृत्तसुविस्तीर्णश्लक्ष्ण-
कठिनकटिर्वज्रसंहननकल्पसदृशमात्रा गजभुजसमसमाहितसदृशोरू ऐणेयमृगसदृश[9]जङ्घा
लाक्षारससदृशपाणिपादा जगति [10]नयनाभिरम्या अप्रतिहतचक्षुरिन्द्रिया मनापप्रियदर्शना
R 30 स्त्रीरत्नरूपप्रतिविशिष्टा मायानिर्मितमिव बिम्बं [11]मायाँनामसंकेता कलाविचक्षणा नन्दन इवाप्सरः-
प्रकाशा शुद्धोदनस्य महाराजस्यान्तःपुरमध्यगता। सा प्रतिरूपा बोधिसत्त्वस्य जननी। या चेयं
कुलपरिशुद्धिर्बोधिसत्त्वेनोदाहृता, सा शाक्यकुल एव [12]संदृश्यते॥ तत्रेदमुच्यते—

प्रासादि [13]धर्मोच्चयि शुद्धसत्त्वः
सुधर्मसिंहासनि संनिषण्णः।
सभागदेवैः परिवारितो ऋषिः
संबोधिसत्त्वेभि महायशोभिः॥ १॥

[14]तत्रोपविष्टानेँ अभूषि चिन्ता
कतमत्कुलं शुद्धसुसंप्रजानम्।

---

१ R परिशुद्धो for पत्नीशुद्धो. २ R महत्संमत° for महासंमत°. ३ R चैको राजा. ४ R इतिरूपः for अभिरूपः. ५ R मायादेवी for माया नाम देवी. ६ L समसहित° for समसंहत°. ७ R काचचिल्चिक° for काचिलिन्दक°. ८ R रक्तोत्तुङ्ग° for रक्ततुङ्ग°. ९ R om. °जङ्घा लाक्षारस°. १० R नयनातिरम्या. ११ R मायानामसंकथिता for °संकेता. १२ R दृश्यते for संदृ°. १३ R धर्मोच्चय for °च्चयि. १४ R तत्रोपविष्टस्य अभूद्धि चिन्ता for the line.

यद्बोधिसत्त्वे प्रतिरूपजन्मे
माता पिता कुत्र च शुद्धभावाः ॥ २ ॥
व्यवलोकयन्तः खलु जम्बुसाह्वयं
यः क्षत्रियो राजकुलो महात्मा ।
सर्वान् सदोषाननुचिन्तयन्तः
शाक्यं कुलं चार्दृशु[1] वीतदोषम् ॥ ३ ॥

शुद्धोदनो राजकुले कुलीनो
नरेन्द्रवंशे[2] सुविशुद्धगात्रः । L 28
ऋद्धं च स्फीतं च निराकुलं च
सगौरवं[3] सज्जनधार्मिकं च ॥ ४ ॥

अन्येऽपि सत्त्वाः कपिलाह्वये पुरे
सर्वे सुशुद्धाशय धर्मयुक्ताः ।
उद्यानआरामविहारमण्डिता
कपिलाह्वये शोभति जन्मभूमिः ॥ ५ ॥

सर्वे महानग्न बलैरुपेता
वि[4]स्तीर्णहस्ती नवरत्नवन्ति ।
इष्वस्त्रशिक्षासु[5] च पारमिं[6] गता
न चापरं हिंसिषु[7] जीवितार्थम् ॥ ६ ॥

शुद्धोदनस्य प्रमदा प्रधाना
नारीसहस्रेषु हि साग्रप्राप्ता ।
मनोरमा मायकृतेव बिम्बं
नामेन सा उच्यति मायादेवी ॥ ७ ॥

सुरूपरूपा य[8]थ देवकन्या
सुविभक्तगात्रा शुभनिर्मलाङ्गी ।
न सोऽस्ति देवो न च मानुषो वा
यो माय दृष्ट्वाथ लभेत तृप्तिम् ॥ ८ ॥

न रागरक्ता न च दोषदुष्टा
श्लक्ष्णा मृदू सा ऋजुस्निग्धवाक्या ।

---

१ L चादृसु for चादृशु. २ R नरेन्द्रवंशः. ३ L सगौरवां. ४ R विस्तीर्णहस्ता नवरत्नवन्तः for the line. ५ L °शिष्येषु for °शिक्षासु. ६ R पारगमिनो for पारमिं गता. ७ R हंसी स्वजीवितार्थम् for हिंसिषु जीवितार्थम्. ८ R अथ for यथ.

R 31 अकर्कशा चापरुषा च सौम्या
स्मितीमुखा सा भ्रुकुटीप्रहीणा ॥ ९ ॥

हीमा[1] व्यपत्रापिणी धर्मचारिणी
निर्माण अस्तब्ध अचञ्चला च ।
अनीर्षुका चाप्यशठा अमाया
त्यागानुरक्ता सहमैत्रचित्ता ॥ १० ॥

कर्मेक्षिणी मिथ्यप्रयोगहीना
सत्ये स्थिता कायमनःसुसंवृता ।
स्त्रीदोषजालं भुवि यत्प्रभूतं
सर्वं ततोऽस्याः खलु नैव विद्यते ॥ ११ ॥

न विद्यते कन्य मनुष्यलोके
गन्धर्वलोकेऽथ च देवलोके ।
मायाय देवीय समा कुतोऽन्तरी
प्रतिरूप सा वै जननी महर्षेः ॥ १२ ॥

जातीशतां पञ्चमनूनकारि
सा बोधिसत्त्वस्य बभूव माता ।
पिता च शुद्धोदनु तत्र तत्र
प्रतिरूप तस्माज्जननी गुणान्विता ॥ १३ ॥

व्रतेस्थ[2] सा तिष्ठति तापसीव
व्रतानुचारी सहधर्मचारिणी ।
राज्ञाभ्यनुज्ञात वरप्रलब्धा
द्वात्रिंश मासामव[3] काम सेवहि ॥ १४ ॥

L 29 यत्र प्रदेशे स्थिहते निषीदते
शय्यागता च[4] क्रमणं च तस्याः ।
ओभासितो[5] भोति सदेवभागो
आभाय तस्याः शुभकर्मनिष्ठया ॥ १५ ॥

न सोऽस्ति देवासुर मानुषो वा
यो रागचित्तेन समर्थ प्रेक्षितुम् ।

---

१ R ह्रीणा for हीमा. २ R व्रते स्थिता for व्रतस्थ सा. ३ R मासा न काम सेवति for मासामव काम सेवहि. ४ R चंक्रमणं for च क्रमणं. ५ R आभासितो भाति for ओभासितो भोति.

पश्यन्ति मातां दुहितां च सर्वे
ईर्यापथेष्टार्यगुणोपपेता ॥ १६ ॥

मायाय देव्याः शुभकर्महेतुना
विवर्धते राजकुलं विशालम्।
प्रदेशराज्ञामपि चा[1]प्रचारो
विवर्धते कीर्ति यशश्च पार्थिवे ॥ १७ ॥

यथा च माया प्रतिरूपभाजनं R 32
यथार्थसत्त्वः परमं विराजते।
पश्येत एवा[2]वधिकं गुणान्विता
द[3]र्या सुता सा जननी च माया ॥ १८ ॥

जम्बुध्वजेऽन्या न हि सास्ति नारी
यस्या समर्था धरितुं नरो[4]त्तमः।
अन्यत्र देव्यातिगुणान्विताया
दश[5]नागसाहस्रबलं हि यस्याः ॥ १९ ॥

एवं हि ते देवसुता महात्मा
संबोधिसत्त्वाश्च विशालप्रज्ञा।
वर्णन्ति मायां जननीं गुणान्वितां
प्रतिरूप सा[6] शाक्यकुलनन्दनस्य ॥ २० ॥ इति ॥

इति श्रीललितविस्तरे कुलपरिशुद्धिपरिवर्तो नाम तृ[7]तीयोऽध्यायः ॥

---

१ R चापचारो for चाप्रचारो. २ R एका अधिकं for एवावधिकं. ३ R दायान्विता सा जननी च या स्यात् for the line. ४ R नरोत्तमं. ५ R °सहस्रप्रबलं for °साहस्रबलं. ६ R om. सा. ७ R तृतीयः सर्गः for °योऽध्यायः.

# ४

## धर्मालोकमुखपरिवर्तश्चतुर्थः ।

इति हि भिक्षवो बोधिसत्त्वो जन्मकुलं व्यवलोक्य उच्चध्वजं नाम तुषितालये महाविमानं
चतुःषष्टियोजनान्यायाम[1]विस्तारेण यस्मिन् बोधिसत्त्वः संनिषद्य तुषितेभ्यो देवेभ्यो धर्मं देशयति स्म,
तं महाविमानं बोधिसत्त्वोऽभिरोहति स्म । अभिरुह्य च[2] सर्वान् तुषितकायिकान् देवपुत्रानामन्त्रयते
स्म – संनिपतन्तु भवन्तः च्युत्याकारप्रयोगं नाम धर्मानुस्मृति[3]चर्यानुशासनीं पश्चिमं[4] बोधिसत्त्वस्या-
L 30 R 33 न्तिकाद्धर्मश्रवणं श्रोष्यथेति । इदं खल्वपि वचनं श्रुत्वा सर्वे तुषितकायिका देवपुत्राः साप्सरोगणा-
स्तस्मिन् विमाने संनिपतन्ति स्म ॥

तत्र बोधिसत्त्वेन[5] चतुर्महाद्वीपके[6] लोकधातुविस्तरप्रमाणो मण्डलमात्राधिष्ठितोऽभूत्, तावच्चित्रस्तावद्दर्शनीयस्तावत्स्वलंकृतस्तावत्सुरुचिरो यावत्सर्वे कामावचरा देवा रूपावचराश्च देवपुत्राः स्वेषु[7] भवनव्यूहेषु श्मशानसंज्ञामुत्पादयामासुः ॥

तत्र बोधिसत्त्वः स्वपुण्यविपाकनिष्यन्दपरिमण्डिते सिंहासने निषीदति स्म अनेकमणिरत्नपादप्रत्युप्ते अनेकपुष्पसंस्तरसंस्कृते अनेकदिव्यगन्धवासोपवासिते अनेकसारवरगन्धनिर्धूपिते अनेकवर्णदिव्यपुष्पगन्धसंस्तरसंस्कृते अनेकमणिरत्नकृतशत[8]सहस्रप्रभोज्ज्वालित[9]तेजसि अनेकमणिरत्नजालसंछन्ने अनेककिंकिणीजालसमीरिताभिनादिते अनेकरत्नघण्टाशतसहस्ररणितनिर्घोषे अनेकरत्नजालशतसहस्रपरिस्फुटे अनेकरत्नगणशतसहस्रसंछादिते अनेकपट्टशतसहस्राभिप्रलम्बिते अनेकपट्टदाममाल्य[10]शतसहस्रसमलंकृते अनेकाप्सरःशतसहस्रनृत्यगीतवादित[11]परिगीते अनेकगुणशतसहस्रवर्णिते अनेकलोकपालशतसहस्रानुपालिते अनेकशक्र[12]शतसहस्रनमस्कृते अनेकब्रह्मशतसहस्रप्रणते अनेकबोधिसत्त्वकोटी[13]नियुतशतसहस्रपरिगृहीते दशदिगनेकबुद्धकोटीनियुतशतसहस्रसमन्वाहृते अपरिमितकल्पकोटीनियुतशतसहस्रपारमितासंभारपुण्यविपाकनिष्यन्दसमुद्गते । इति हि भिक्षव एवंगुणसमन्वागते सिंहासने निषद्य बोधिसत्त्वस्तां महतीं
देवपर्षदमामन्त्रयते स्म – व्यवलोकयत मार्षा बोधिसत्त्वस्य कायं शतपुण्यलक्षणसमलंकृतम् ।
L 31 R 34 व्यवलोकयत पूर्वदक्षिणपश्चिमोत्तरास्वध ऊर्ध्वं समन्ताद्दशदिक्षु अप्रमेयासंख्येयागणनासमतिक्रान्तान्
बोधिसत्त्वान्, ये तुषितवरभवनस्थाः सर्वे चरमभवाभिमुखा देवगणपरिवृताश्च्यवनाकारं[14] देवतासंहर्षणं धर्मालोकमुखं संप्रकाशयन्ति[15] । अद्राक्षीत् सा सर्वा देवपर्षद् बोधिसत्त्वाधिस्थानेन तान् बोधिसत्त्वान् । दृष्ट्वा च[16] पुनर्येन बोधिसत्त्वस्तेन[17] साञ्जलिं प्रणम्य पञ्चमण्डलैर्नमस्यन्ति स्म । एवं चोदान-

---

१ R °योजनायाम° for °योजनान्यायाम°. २ R om. च. ३ R तेर्ह्यानुस्मृति° for धर्मानुस्मृतिं°. ४ R पश्चिम° for पश्चिमं. ५ R बोधिसत्त्वश्च for बोधिसत्त्वेन. ६ R °महाद्वीपलोक° for °महाद्वीपके लोक°. ७ R स्वेषु स्वेषु for स्वेषु. ८ R om. °शत°. ९ R °प्रभोज्ज्वलित° for °ज्ज्वालित°. १० R om. °माल्य°. ११ R °वादित्र° for °वादित°. १२ R om. °शक्र°. १३ R om. °कोटीनियुत°. १४ R च्यवनकालं for च्यवनाकारं. १५ R °प्रकाशयतोऽद्राक्षुः for °प्रकाशयन्ति । अद्राक्षीत्. १६ R om. च. १७ R °स्तेनाञ्जलिं for °स्तेन साञ्जलिं.

मुदानयन्ति स्म – साधु अचिन्त्यमिदं बोधिसत्त्वाधिस्थानं यत्र हि नाम वयं व्यवलोकितमात्रेणेयन्तो बोधिसत्त्वान् पश्याम इति ॥

अथ बोधिसत्त्वः पुनरपि तां महतीं देवपर्षदमामन्त्र्यैवमाह – तेन हि मार्षाः शृणुत
च्युत्याकारं देवतासंहर्षणं धर्मालोकमुखं यदेते बोधिसत्त्वा एभ्यो देवपुत्रेभ्यो भाषन्ते ।
अष्टोत्तरमिदं मार्षा धर्मालोकमुखं शतं यदवश्यं बोधिसत्त्वेन च्यवनकालसमये देवपर्षदि
संप्रकाशयितव्यम्[1] । कतमत्तदष्टोत्तरशतम् ? यदुत श्रद्धा मार्षा धर्मालोकमुखमभेद्याशयतायै
संवर्तते । प्रसादो धर्मालोकमुखमाविलचित्तप्रसादनतायै संवर्तते । प्रामोद्यं धर्मालोक-
मुखं प्रसिद्ध्यै संवर्तते । प्रीति धर्मालोकमुखं चित्तविशुद्ध्यै संवर्तते । कायसंवरो धर्मालोकमुखं
त्रिकायपरिशुद्ध्यै संवर्तते । वाक्संवरो धर्मालोकमुखं चतुर्वाग्दोषपरिवर्जनतायै संवर्तते । मनःसंवरो
धर्मालोकमुखमभिध्या[2]व्यापादमिथ्यादृष्टिप्रहाणाय संवर्तते । बुद्धानुस्मृतिधर्मालोकमुखं बुद्ध[3]दर्शनविशुद्ध्यै
संवर्तते । धर्मानुस्मृति धर्मालोकमुखं धर्मदेशनाविशुद्ध्यै संवर्तते । संघानुस्मृति धर्मालोकमुखं
न्याया[4]क्रमणतायै संवर्तते । त्यागानुस्मृति धर्मालोकमुखं सर्वो[5]पधिप्रतिनिःसर्गायै संवर्तते । R 35
शीलानुस्मृति धर्मालोकमुखं प्रणिधानपरिपूर्त्यै संवर्तते । देवतानुस्मृति धर्मालोकमुखमुदारचित्ततायै
संवर्तते । मैत्री धर्मालोकमुखं सर्वोपधिकपुण्यक्रियावस्त्वभिभावनतायै संवर्तते । करुणा L 32
धर्मालोकमुखम[6]विहिंसापरमतायै संवर्तते । मुदिता धर्मालोकमुखं सर्वारत्यपकर्षणतायै
संवर्तते । उपेक्षा धर्मालोकमुखं कामजुगुप्सनतायै संवर्तते । अनित्यप्रत्यवेक्षा धर्मालोकमुखं
कामरूप्यारूप्यरागसमतिक्रमाय संवर्तते । दुःखप्रत्यवेक्षा धर्मालोकमुखं प्रणिधानसमुच्छेदाय संवर्तते ।
अनात्मप्रत्यवेक्षा धर्मालोकमुखमात्मानभिनिवेशनतायै संवर्तते । शान्तप्रत्यवेक्षा धर्मालोकमुख-
मनुनयासंधुक्ष[7]णतायै संवर्तते । ह्री धर्मालोकमुखमध्यात्मोपशमाय संवर्तते । अपत्राप्यं
धर्मालोकमुखं [8]बहिर्धाप्रशमाय संवर्तते । सत्यं धर्मालोकमुखं देवमनुष्याविसंवादनतायै संवर्तते ।
भूतं धर्मालोकमुखमात्माविसंवादनतायै संवर्तते । धर्मचरणं धर्मालोकमुखं धर्मप्रतिशरणतायै
संवर्तते । त्रिशरणगमनं धर्मालोकमुखं त्र्यपायसमतिक्रमाय संवर्तते । कृतज्ञता धर्मालोकमुखं
कृतकुशलमूलाविप्रणाशाय संवर्तते । कृतवेदिता धर्मालोकमुखं पराभिमन्यतायै संवर्तते ।
आत्मज्ञता धर्मालोकमुखमात्मानुत्[9]कर्षणतायै संवर्तते । सत्त्वज्ञता धर्मालोकमुखं परा[10]पत्समानतायै
संवर्तते । धर्मज्ञता धर्मालोकमुखं धर्मानुधर्मप्रतिपत्त्यै संवर्तते । कालज्ञता धर्मालोकमुखममोघदर्शनतायै
संवर्तते । निहतमानता धर्मालोकमुखं ज्ञानतापरिपूर्त्यै संवर्तते । अप्रतिहतचित्तता R 36
धर्मालोकमुखमात्मपरानुरक्षणतायै संवर्तते । अनुपनाहो धर्मालोकमुखमकौकृत्याय संवर्तते ।
अधि[11]मुक्ति धर्मालोकमुखमविचिकित्सापरमतायै संवर्तते । अशुभप्रत्यवेक्षा धर्मालोकमुखं
कामवितर्कप्रहाणाय संवर्तते । अव्यापादो धर्मालोकमुखं व्यापादवितर्कप्रहाणाय संवर्तते ।

---

१ R संप्रकाशितं for संप्रकाशयितव्यम्. २ R अभिधातव्या for °अभिध्या°. ३ R om. °बुद्ध°. ४ R न्यायावक्रम° for न्यायाक्रम°. ५ R सर्वोपाधि° for सर्वोपधि°. ६ R° महिंसा° for °मविहिंसा°. ७ R °संनूहन° for °संधुक्षण°. ८ R बहिःप्रशमाय for बहिर्धाप्रशमाय. ९ R °नुकर्षण° for °नुत्कर्षण°. १० R परापत्समतायै. ११ R अधिमुक्तिधर्मा° for अधिमुक्ति धर्मा°.

L 33 अमोहो धर्मालोकमुखं सर्वाज्ञानविधमनतायै संवर्तते । धर्मार्थिकता धर्मालोकमुखमर्थप्रतिशरणतायै संवर्तते । धर्मकामता धर्मालोकमुखं लोकप्रतिलम्भाय संवर्तते । श्रुतपर्येष्टि धर्मालोकमुखं योनिशोधर्म[1]प्रत्यवेक्षणतायै संवर्तते । सम्यक्प्रयोगो धर्मालोकमुखं सम्यक्प्रतिपत्त्यै संवर्तते । नामरूपपरिज्ञा[2] धर्मालोकमुखं सर्वसङ्गसमतिक्रमाय संवर्तते । हेतुदृष्टिसमुद्घातो धर्मालोकमुखं
R 37 विद्याधिमुक्तिप्रतिलम्भाय संवर्तते । अनुनयप्रतिघप्रहाणं धर्मालोकमुखम[3]नुन्नामावनामनतायै संवर्तते । स्कन्धकौशल्यं धर्मालोकमुखं दुःखपरिज्ञानतायै संवर्तते । धातुसमता धर्मालोकमुखं समुदयप्रहाणाय संवर्तते । आयतनापकर्षणं धर्मालोकमुखं मार्गभावनतायै संवर्तते । अनुत्पादक्षान्ति धर्मालोकमुखं निरोधसाक्षात्क्रियायै संवर्तते । कायगतानुस्मृति धर्मालोकमुखं कायविवेकतायै संवर्तते । वेदनागतानुस्मृतिं धर्मालोकमुखं सर्ववेदित[4]प्रतिप्रश्रब्ध्यै संवर्तते । चित्तगतानुस्मृति धर्मालोकमुखं मायोपमचित्तप्रत्यवेक्षणतायै संवर्तते । धर्मगतानुस्मृति धर्मालोकमुखं वितिमिरज्ञानतायै संवर्तते । चत्वारि सम्यक्प्रहाणानि धर्मालोकमुखं सर्वाकुशलधर्मप्रहाणाय सर्वकुशलधर्मपरिपूर्यै संवर्तते । चत्वार ऋद्धिपादा धर्मालोकमुखं कायचित्तलघुत्वाय संवर्तते । श्रद्धेन्द्रियं धर्मालोकमुखमपरप्रणेयतायै संवर्तते । वीर्येन्द्रियं धर्मालोकमुखं सुविचिन्तितज्ञानतायै संवर्तते । स्मृतीन्द्रियं धर्मालोकमुखं सुकृतकर्मतायै संवर्तते । समाधीन्द्रियं धर्मालोकमुखं चित्तविमुक्त्यै संवर्तते । प्रज्ञेन्द्रियं धर्मालोकमुखं प्रत्यवेक्षणज्ञानतायै संवर्तते । श्रद्धाबलं धर्मालोकमुखं मारबलसमतिक्रमाय संवर्तते । वीर्यबलं
L 34 धर्मालोकमुखमवैवर्तिकतायै संवर्तते । स्मृतिबलं धर्मालोकमुखमसंहार्यतायै संवर्तते । समाधिबलं धर्मालोकमुखं सर्ववितर्कप्रहाणाय संवर्तते । प्रज्ञाबलं धर्मालोकमुखमनवमूढ्य[5]तायै संवर्तते । स्मृतिसंबोध्यङ्गं धर्मालोकमुखं यथावद्धर्मप्रजानतायै संवर्तते । धर्मप्रविचयसंबोध्यङ्गं धर्मालोकमुखं सर्वधर्मपरि[6]पूर्त्यै संवर्तते । वीर्यसंबोध्यङ्गं धर्मालोकमुखं सुविचित्रबुद्धितायै संवर्तते । प्रीतिसंबोध्यङ्गं धर्मालोकमुखं समाध्यायिकतायै संवर्तते । प्रश्रब्धिसंबोध्यङ्गं धर्मालोकमुखं कृतकरणीयतायै संवर्तते । समाधिसंबोध्यङ्गं धर्मालोकमुखं समतानुबोधाय संवर्तते । उपेक्षासंबोध्यङ्गं धर्मालोकमुखं सर्वोपपत्तिजुगुप्सनतायै संवर्तते । सम्यग्दृष्टि धर्मालोकमुखं न्यायाक्रमणतायै[7] संवर्तते । सम्य-
R 38 क्संकल्पो धर्मालोकमुखं सर्वकल्पविकल्पपरिकल्पप्रहाणाय संवर्तते । सम्यग्वाग्[8] धर्मालोकमुखं सर्वाक्षररुतघोषवाक्यपथप्रतिश्रुत्कासमतानुबोधनतायै संवर्तते । सम्यक्कर्मान्तो धर्मालोकमुखमकर्मविपाकतायै संवर्तते । सम्यगाजीवो धर्मालोकमुखं सर्वैषण[9]प्रतिप्रश्रब्ध्यै संवर्तते । सम्यग्व्यायामो धर्मालोकमुखं परतीरगमनाय संवर्तते । सम्यक्स्मृति धर्मालोकमुखम[10]स्मृत्यमनसिकारतायै संवर्तते । सम्यक्समाधि धर्मालोकमुखमकोप्यचेतःसमाधिप्रतिलम्भाय संवर्तते । बोधिचित्तं धर्मालोकमुखं त्रिरत्न[11]वंशानुपच्छेदाय संवर्तते । आशयो धर्मालोकमुखं हीनयानास्पृहणतायै संवर्तते । अध्या[12]शयो धर्मालोक-

---

१ R योनिशोधनधर्म° for योनिशोधर्म°. २ R °परिज्ञानं for °परिज्ञा. ३ R अनुत्पन्नतानामनवता° for अनुन्नामावनामता°. ४ R सर्वावदित° for सर्ववेदित°. ५ R °मनवमृद्य° for °मनवमूढ्य.° ६ R °प्रति for °परि°. ७ R न्यायावक्रम° for न्यायाक्रम.° ८ R °वाक्पथधर्मो° for °वाग् धर्मा.° ९ R सर्वहर्षणं° for सर्वैषण.° १० R °मवस्मृत्यमानसिकतायै for °मस्मृत्यमनसिकारतायै. ११ R om. °रत्न°. १२ R अध्यासयोग for अध्याशयो,

मुखमुदारबुद्धधर्मावालम्बनतायै संवर्तते । प्रयोगो धर्मालोकमुखं सर्वकुशलधर्मपरिपूर्त्यै संवर्तते ।
दानपारमिता धर्मालोकमुखं लक्षणानुव्यञ्जनबुद्धक्षेत्रपरिशुद्ध्यै मत्सरिसत्त्वपरिपाचनतायै संवर्तते ।
शीलपारमिता धर्मालोकमुखं सर्वाक्षणापायसमतिक्रमाय दुःशीलसत्त्वपरिपाचनतायै संवर्तते ।
क्षान्तिपारमिता धर्मालोकमुखं सर्वव्यापादखिलदोषमानमददर्पप्रहाणाय व्यापन्नचित्तसत्त्वपरिपाचन- L 35
तायै संवर्तते । वीर्यपारमिता धर्मालोकमुखं सर्वकुशलमूलधर्मारम्भोत्तारणाय कुशीदसत्त्वपरिपाचन-
तायै संवर्तते । ध्यानपारमिता धर्मालोकमुखं सर्वज्ञानाभिज्ञोत्पादाय विक्षिप्तचित्तसत्त्वपरिपाचन-
तायै संवर्तते । प्रज्ञापारमिता धर्मालोकमुखमविद्यामोहतमोन्धकारोपलम्भदृष्टिप्रहाणाय दुष्प्रज्ञ-
सत्त्वपरिपाचनतायै संवर्तते । उपायकौशलं धर्मालोकमुखं यथाधिमुक्तसत्त्वेर्यापथसंदर्शनाय सर्वबुद्ध-
धर्माविधमनतायै संवर्तते । चत्वारि संग्रहवस्तूनि धर्मालोकमुखं सत्त्वसंग्रहाय संबोधिप्राप्तस्य च धर्म- R 39
संप्रत्यवेक्षणतायै संवर्तते । सत्त्वपरिपाको धर्मालोकमुखंमात्मसुखानध्यवसानायापरिखेदतायै संवर्तते ।
सद्धर्मपरिग्रहो धर्मालोकमुखं सर्वसत्त्वसंक्लेशप्रहाणाय संवर्तते । पुण्यसंभारो धर्मालोकमुखं
सर्वसत्त्वोपजीव्यतायै संवर्तते । ज्ञानसंभारो धर्मालोकमुखं दशबलप्रतिपूर्त्यै संवर्तते । शमर्थसंभारो
धर्मालोकमुखं तथागतसमाधिप्रतिलम्भाय संवर्तते । विदर्शनासंभारो धर्मालोकमुखं प्रज्ञाचक्षुःप्रति-
लम्भाय संवर्तते । प्रतिसंविदवतारो धर्मालोकमुखं धर्मचक्षुःप्रतिलम्भाय संवर्तते । प्रतिशरणा-
वतारो धर्मालोकमुखं बुद्धचक्षुःपरिशुद्ध्यै संवर्तते । धारणीप्रतिलम्भो धर्मालोकमुखं सर्वबुद्धभाषिता-
धारणतायै संवर्तते । प्रतिभानप्रतिलम्भो धर्मालोकमुखं सर्वसत्त्वसुभाषितसंतोषणायै संवर्तते ।
आनुलोमिकधर्मक्षान्ति धर्मालोकमुखं सर्वबुद्धधर्मानुलोमनतायै संवर्तते । अनुत्पत्तिकधर्मक्षान्ति
धर्मालोकमुखं व्याकरणप्रतिलम्भाय संवर्तते । अवैवर्तिकभूमि धर्मालोकमुखं सर्वबुद्धधर्मप्रतिपूर्त्यै
संवर्तते । भूमेर्भूमिसंक्रान्तिज्ञानं धर्मालोकमुखं सर्वज्ञज्ञानाभिषेकतायै संवर्तते । अभिषेकभूमि L 36
धर्मालोकमुखमवक्रमणजन्माभिनिष्क्रमणदुष्करचर्याबोधिमण्डोपसंक्रमणमारध्वंसनबोधिविबोधनधर्म-
चक्रप्रवर्तनमहापरिनिर्वाणसंदर्शनतायै संवर्तते । इदं तन्मार्षा अष्टोत्तरं धर्मालोकमुखशतं यदवश्यं
बोधिसत्त्वेन च्यवनकालसमये देवपर्षदि संप्रकाशयितव्यम् ॥

अस्मिन् खलु पुनर्भिक्षवो धर्मालोकमुखपरिवर्ते बोधिसत्त्वेन निर्दिश्यमाने तस्यां R 40
देवपर्षदि चतुरशीतेर्देवपुत्रसहस्राणामनुत्तरायां सम्यक्संबोधौ चित्तान्युत्पद्यन्ते । द्वात्रिंशतेश्च देवपुत्र-
सहस्राणां पूर्वपरिकर्मकृतानामनुत्पत्तिकेषु धर्मेषु क्षान्तिप्रतिलम्भोऽभूत् । षट्त्रिंशतेश्च
देवपुत्रनयुतानां विरजो विगतमलं धर्मेषु धर्मचक्षुर्विशुद्धम् । सर्वावच्च तुषितवरभवनं जानुमात्रं
दिव्यैः पुष्पैः संछादितमभूत् ॥

इति हि भिक्षवो बोधिसत्त्वस्तस्या देवपर्षदो भूयस्या मात्रया संहर्षणार्थं तस्यां वेलायामिमां गाथामभाषत —

---

१ R °धर्मावलम्बन° for धर्माद्यालम्बन°. २ R बुद्धक्षेत्र° for बुद्धक्षत्र°. ३ R सर्वक्षणा° for सर्वाक्षणा°. ४ R °व्यापादाखिल° for °व्यापादखिल°. ५ R °सत्त्वोपायपथ° for °सत्त्वेर्यापथ°. ६ R °प्राप्तेश्च for प्राप्तस्य. ७ R °मुखमनात्म° for °मुखमात्म°. ८ R समर्थ° for शमथ°. ९ R संहर्षणं for संहर्षणार्थं.

L 33 अमोहो धर्मालोकमुखं सर्वाज्ञानविधमनतायै संवर्तते। धर्मार्थिकता धर्मालोकमुखमर्थप्रतिशरणतायै संवर्तते। धर्मकामता धर्मालोकमुखं लोकप्रतिलम्भाय संवर्तते। श्रुतपर्येष्टि धर्मालोकमुखं योनिशोधर्म[1]प्रत्यवेक्षणतायै संवर्तते। सम्यक्प्रयोगो धर्मालोकमुखं सम्यक्प्रतिपत्त्यै संवर्तते। नामरूपपरिज्ञा[2] धर्मालोकमुखं सर्वसङ्गसमतिक्रमाय संवर्तते। हेतुदृष्टिसमुद्घातो धर्मालोकमुखं
R 37 विद्याविमुक्तिप्रतिलम्भाय संवर्तते। अनुनयप्रतिघप्रहाणं धर्मालोकमुखमनुन्नामावनामनतायै[3] संवर्तते। स्कन्धकौशल्यं धर्मालोकमुखं दुःखपरिज्ञानतायै संवर्तते। धातुसमता धर्मालोकमुखं समुदयप्रहाणाय संवर्तते। आयतनापकर्षणं धर्मालोकमुखं मार्गभावनतायै संवर्तते। अनुत्पादक्षान्ति धर्मालोकमुखं निरोधसाक्षात्क्रियायै संवर्तते। कायगतानुस्मृति धर्मालोकमुखं कायविवेकतायै संवर्तते। वेदनागतानुस्मृति धर्मालोकमुखं सर्ववेदित[4]प्रतिप्रश्रब्ध्यै संवर्तते। चित्तगतानुस्मृति धर्मालोकमुखं मायोपमचित्तप्रत्यवेक्षणतायै संवर्तते। धर्मगतानुस्मृति धर्मालोकमुखं वितिमिरज्ञानतायै संवर्तते। चत्वारि सम्यक्प्रहाणानि धर्मालोकमुखं सर्वाकुशलधर्मप्रहाणाय सर्वकुशलधर्मपरिपूर्यै संवर्तते। चत्वार ऋद्धिपादा धर्मालोकमुखं कायचित्तलघुत्वाय संवर्तते। श्रद्धेन्द्रियं धर्मालोकमुखमपरप्रणेयतायै संवर्तते। वीर्येन्द्रियं धर्मालोकमुखं सुविचिन्तितज्ञानतायै संवर्तते। स्मृतीन्द्रियं धर्मालोकमुखं सुकृतकर्मतायै संवर्तते। समाधीन्द्रियं धर्मालोकमुखं चित्तविमुक्त्यै संवर्तते। प्रज्ञेन्द्रियं धर्मालोकमुखं प्रत्यवेक्षणज्ञानतायै संवर्तते। श्रद्धाबलं धर्मालोकमुखं मारबलसमतिक्रमाय संवर्तते। वीर्यबलं
L 34 धर्मालोकमुखमवैवर्तिकतायै संवर्तते। स्मृतिबलं धर्मालोकमुखमसंहार्यतायै संवर्तते। समाधिबलं धर्मालोकमुखं सर्ववितर्कप्रहाणाय संवर्तते। प्रज्ञाबलं धर्मालोकमुखमनवमूढ्यतायै[5] संवर्तते। स्मृतिसंबोध्यङ्गं धर्मालोकमुखं यथावद्धर्मप्रजाननतायै संवर्तते। धर्मप्रविचयसंबोध्यङ्गं धर्मालोकमुखं सर्वधर्मपरिपूर्त्यै[6] संवर्तते। वीर्यसंबोध्यङ्गं धर्मालोकमुखं सुविचित्रबुद्धितायै संवर्तते। प्रीतिसंबोध्यङ्गं धर्मालोकमुखं समाध्यायिकतायै संवर्तते। प्रश्रब्धिसंबोध्यङ्गं धर्मालोकमुखं कृतकरणीयतायै संवर्तते। समाधिसंबोध्यङ्गं धर्मालोकमुखं समतानुबोधाय संवर्तते। उपेक्षासंबोध्यङ्गं धर्मालोकमुखं सर्वोपपत्तिजुगुप्सनतायै संवर्तते। सम्यग्दृष्टि धर्मालोकमुखं न्यायाक्रमणतायै[7] संवर्तते। सम्य-
R 38 क्संकल्पो धर्मालोकमुखं सर्वकल्पविकल्पपरिकल्पप्रहाणाय संवर्तते। सम्यग्वाग्[8] धर्मालोकमुखं सर्वाक्षररुतघोषवाक्यपथप्रतिश्रुत्कासमतानुबोधनतायै संवर्तते। सम्यक्कर्मान्तो धर्मालोकमुखमकर्माविपाकतायै संवर्तते। सम्यगाजीवो धर्मालोकमुखं सर्वेषण[9]प्रतिप्रश्रब्ध्यै संवर्तते। सम्यग्व्यायामो धर्मालोकमुखं परतीरगमनाय संवर्तते। सम्यक्स्मृति धर्मालोकमुखमस्मृत्यमनसिकारतायै[10] संवर्तते। सम्यक्समाधि धर्मालोकमुखमकोप्यचेतःसमाधिप्रतिलम्भाय संवर्तते। बोधिचित्तं धर्मालोकमुखं त्रिरत्न[11]वंशानुपच्छेदाय संवर्तते। आशयो धर्मालोकमुखं हीनयानास्पृहणतायै संवर्तते। अध्याशयो[12] धर्मालोक-

---

१ R योनिशोधनधर्म° for योनिशोधर्म°. २ R °परिज्ञानं for °परिज्ञा. ३ R अनुत्पन्नतानामनवता° for अनुन्नामावनामता°. ४ R सर्वाविदित° for सर्ववेदित°. ५ R °मनवमृद्य° for °मनवमूढ्य.° ६ R °प्रति for °परि°. ७ R न्यायावक्रम° for न्यायाक्रम.° ८ R °वाक्पथधर्मा° for °वाग् धर्मा.° ९ R सर्वहर्षण° for सर्वेषण.° १० R °मवस्मृत्यमानसिकतायै for °मस्मृत्यमनसिकारतायै. ११ R om. °रत्न°. १२ R अध्यासयोग for अध्याशयो.

मुखमुदारबुद्धधर्माद्यालम्बनतायै[1] संवर्तते । प्रयोगो धर्मालोकमुखं सर्वकुशलधर्मपरिपूर्त्यै संवर्तते । दानपारमिता धर्मालोकमुखं लक्षणानुव्यञ्जनबुद्धक्षेत्र[2]परिशुद्ध्यै मत्सरिसत्त्वपरिपाचनतायै संवर्तते । शीलपारमिता धर्मालोकमुखं सर्वाक्षणा[3]पायसमतिक्रमाय दुःशीलसत्त्वपरिपाचनतायै संवर्तते । क्षान्तिपारमिता धर्मालोकमुखं सर्वव्यापादखिल[4]दोषमानमददर्पप्रहाणाय व्यापन्नचित्तसत्त्वपरिपाचनतायै संवर्तते । वीर्यपारमिता धर्मालोकमुखं सर्वकुशलमूलधर्मारङ्गोत्तारणाय कुशीदसत्त्वपरिपाचनतायै संवर्तते । ध्यानपारमिता धर्मालोकमुखं सर्वज्ञानाभिज्ञोत्पादाय विक्षिप्तचित्तसत्त्वपरिपाचनतायै संवर्तते । प्रज्ञापारमिता धर्मालोकमुखमविद्यामोहतमोन्धकारोपलम्भदृष्टिप्रहाणाय दुष्प्रज्ञसत्त्वपरिपाचनतायै संवर्तते । उपायकौशलं धर्मालोकमुखं यथाधिमुक्तसत्त्वेर्यापथ[5]संदर्शनाय सर्वबुद्धधर्माविधमनतायै संवर्तते । चत्वारि संग्रहवस्तूनि धर्मालोकमुखं सत्त्वसंग्रहाय संबोधिप्राप्तस्य[6] च धर्मसंप्रत्यवेक्षणतायै संवर्तते । सत्त्वपरिपाको धर्मालोकमुखँमात्मसुखान[7]व्यवसानायापरिखेदतायै संवर्तते । सद्धर्मपरिग्रहो धर्मालोकमुखं सर्वसत्त्वसंक्लेशप्रहाणाय संवर्तते । पुण्यसंभारो धर्मालोकमुखं सर्वसत्त्वोपजीव्यतायै संवर्तते । ज्ञानसंभारो धर्मालोकमुखं दशबलप्रतिपूर्त्यै संवर्तते । शमथ[8]संभारो धर्मालोकमुखं तथागतसमाधिप्रतिलम्भाय संवर्तते । विदर्शनासंभारो धर्मालोकमुखं प्रज्ञाचक्षुःप्रतिलम्भाय संवर्तते । प्रतिसंविदवतारो धर्मालोकमुखं धर्मचक्षुःप्रतिलम्भाय संवर्तते । प्रतिशरणावतारो धर्मालोकमुखं बुद्धचक्षुःपरिशुद्ध्यै संवर्तते । धारणीप्रतिलम्भो धर्मालोकमुखं सर्वबुद्धभाषिताधारणतायै संवर्तते । प्रतिभानप्रतिलम्भो धर्मालोकमुखं सर्वसत्त्वसुभाषितसंतोषणायै संवर्तते । आनुलोमिकधर्मक्षान्ति धर्मालोकमुखं सर्वबुद्धधर्मानुलोमनतायै संवर्तते । अनुत्पत्तिकधर्मक्षान्ति धर्मालोकमुखं व्याकरणप्रतिलम्भाय संवर्तते । अवैवर्तिकभूमि धर्मालोकमुखं सर्वबुद्धधर्मप्रतिपूर्त्यै संवर्तते । भूमेर्भूमिसंक्रान्तिज्ञानं धर्मालोकमुखं सर्वज्ञज्ञानाभिषेकतायै संवर्तते । अभिषेकभूमि धर्मालोकमुखमवक्रमणजन्माभिनिष्क्रमणदुष्करचर्याबोधिमण्डोपसंक्रमणमारध्वंसनबोधिविबोधनधर्मचक्रप्रवर्तनमहापरिनिर्वाणसंदर्शनतायै संवर्तते । इदं तन्मार्षा अष्टोत्तरं धर्मालोकमुखशतं यदवश्यं बोधिसत्त्वेन च्यवनकालसमये देवपर्षदि संप्रकाशयितव्यम् ॥

L 35 R 39 L 36

अस्मिन् खलु पुनर्भिक्षवो धर्मालोकमुखपरिवर्ते बोधिसत्त्वेन निर्दिश्यमाने तस्यां देवपर्षदि चतुरशीतेर्देवपुत्रसहस्राणामनुत्तरायां सम्यक्संबोधौ चित्तान्युत्पद्यन्ते । द्वात्रिंशतेश्च देवपुत्रसहस्राणां पूर्वपरिकर्मकृतानामनुत्पत्तिकेषु धर्मेषु क्षान्तिप्रतिलम्भोऽभूत् । षट्त्रिंशतेश्च देवपुत्रनयुतानां विरजो विगतमलं धर्मेषु धर्मचक्षुर्विशुद्धम् । सर्वावच्च तुषितवरभवनं जानुमात्रं दिव्यैः पुष्पैः संछादितमभूत् ॥ R 40

इति हि भिक्षवो बोधिसत्त्वस्तस्या देवपर्षदो भूयस्या मात्रया संहर्षणार्थं[9] तस्यां वेलायामिमां गाथामभाषत —

---

१ R °धर्मावलम्बन° for धर्माद्यालम्बन°. २ R बुद्धक्षेत्र° for बुद्धक्षत्र°. ३ R सर्वक्षणा° for सर्वाक्षणा°. ४ R °व्यापादाखिल° for °व्यापादखिल°. ५ R °सत्त्वोपायपथ° for °सत्त्वेर्यापथ°. ६ R °प्राप्तेश्च for प्राप्तस्य. ७ R °मुखमनात्म° for °सुखमात्म°. ८ R समर्थ° for शमथ°. ९ R संहर्षणं for संहर्षणार्थं.

तुषितवरभवननिलयाद्यदा च्यवति नायकः पुरुषसिंहः ।
आमन्त्रयते देवान् प्रमादमखिलं विसर्जयत ॥ १ ॥
या काचि रतिवियूहा दिव्या मनसा विचिन्तिता श्रीमान् ।
सर्वशुभकर्महेतोः फलमिदं शृणुरस्य[1] कर्मस्य ॥ २ ॥
तस्माद्भवत कृतज्ञा अपूर्वशुभसंचयं क्षपित्वेह ।
मा गच्छत पुनरपायानसाध्वसुखवेदना यत्र ॥ ३ ॥
धर्मश्च यः श्रुतोऽयं ममान्तिके गौरवमुपजनित्वा ।
तत्र प्रतिपद्यथा प्राप्स्यथ नियतं सुखमनन्तम् ॥ ४ ॥
सर्वमनित्य कामा अध्रुवं[2] न च शाश्वता अपि न कल्पाः ।
L 37 मायामरीचिसदृशा विद्युत्फेनोपमा चपलाः ॥ ५ ॥
न च कामगुणरतीभिः तृप्तिर्लवणोदकं यथा पीत्वा ।
R 41 ते तृप्त येष प्रज्ञा आर्या लोकोत्तरा विरजा ॥ ६ ॥
न तरङ्गतुल्यकल्पाः संगीति च अप्सरोभि संवासः ।
अन्योन्यगम[3]युक्ता यथैव सामायि कामं च ॥ ७ ॥
न च संस्कृते सहाया न मित्र ज्ञातीजनो च परिवाराः ।
अन्यत्र कर्म सुकृताद्नुबन्धति पृष्ठतो याति ॥ ८ ॥
तस्मात्सहितसमग्रा अन्योन्यं मैत्रचित्त हितचित्ताः ।
धर्मचरणं चरेथाः सुचरितचरणा न तप्यन्ते ॥ ९ ॥
बुद्धमनुस्मरेथा धर्मं[4] संघं तथाप्रमादं च ।
श्रुतशीलदाननिरता क्षान्त्या सौरभ्यसंपन्नाः ॥ १० ॥
दुःखमनित्यमनात्मा निरीक्षथा योनिशो इमा धर्मा ।
हेतुप्रत्ययुक्ता वर्तन्तेऽस्वामिका जडाबुद्धया ॥ ११ ॥
या काचि ऋद्धि मह्यं पश्यत प्रतिभां च ज्ञानगुणतां च ।
सर्वशुभकर्महेतोः शीलेन श्रुतेन चाप्रमादेन ॥ १२ ॥
अनुशिष्यध्वं मह्यं शीलेन श्रुतेन चाप्रमादेन ।
दानै[5]दमसंयमेना सत्त्वार्थ हितार्थ मित्रार्थः ॥ १३ ॥
न च वाक्यरुतरवेणा शक्याः संपादितुं कुशलधर्मान् ।
प्रतिपत्तिमारभेथा यथा च वदथा तथ करोथा ॥ १४ ॥
मा खलु परावकाशं स्वयं यतध्वं सदा प्रयत्नेन ।
न च कश्चि कृत्व ददते न चाप्यकृत्वा भवति सिद्धिः ॥ १५ ॥

---

१ R शृणुतास्य for शृणुरस्य. २ R अध्रुवा for अध्रुवं. ३ R °गमन for °गम°. ४ R इमं धर्मं for इमे धर्मा. ५ R दानदमं° for दानदम°.

समनुस्मरथा पूर्वे[1] यद्दुःखं संसारे[2] चिरमनुभूतम् । R 42
न च निर्वृती विरागो समनुगतो मिथ्य नियतैव ॥ १६ ॥ L 38

तस्माल्लक्षणं लभित्वा मित्रं प्रतिरूप देशवासं च ।
श्रेष्ठं च धर्मश्रवणं शमेथ[3] रागादिकान् क्लेशान् ॥ १७ ॥

मानमदर्पविगताः सदार्जवामन्दवाश्च[4] अशठाश्च ।
निर्वाणगतिपरायण युज्यत मार्गाभिसमयाय ॥ १८ ॥

मोहकलुषान्धकारं प्रज्ञाप्रदीपेन विधमथा सर्वम् ।
सानुशयदोषजालं विदारयत ज्ञानवज्रेण ॥ १९ ॥

किमपि[5] सुबहु वदेयं धर्मं युष्माकमर्थसंयुक्तम् ।
न च तत्रवतिष्ठेथा न तत्र[6] धर्मस्य अपराधः ॥ २० ॥

बोधिर्यथा मि प्राप्ता (स्याद्) धर्मं च प्रवर्षयेदमृतगामिम्[7] ।
पुनरपि विशुद्धचित्ता उपेथ वरधर्मश्रवणाय ॥ २१ ॥ इति ॥

इति श्रीललितविस्तरे धर्मालोकमुखपरिवर्तो नाम चतुर्थोऽध्यायः[8] ।

---

१ R पूर्वे for पूर्वे. २ L संसारगिर° for संसारे चिर°. ३ L ह्रमेथ ; R श्रमेथ for शमेथ. ४ R °मन्दवाचश्च for °मन्दवाश्च. ५ R किमति for किमपि. ६ R यत्र for तत्र. ७ R प्रवर्षयता for प्रवर्षये°. ८ R om. अध्यायः.

## प्रचलपरिवर्तः पञ्चमः ।

इति हि भिक्षवो बोधिसत्त्वस्तां महतीं देवपर्षदमनया धर्म्यया कथया[1] संदर्श्य[2] समादाप्य
समुत्तेज्य संप्रहर्ष्य क्षमापयित्वा मङ्गल्यां देवपर्षदमामन्त्रयते स्म – गमिष्याम्यहं मार्षा जम्बुद्वीपम्।
मया पूर्व[3]बोधिसत्त्वचर्यां चरता सत्त्वाश्चतुर्भिः संग्रहवस्तुभिर्निमन्त्रिता दानेन प्रियवचेना[4]र्थक्रियया
R 43 समानार्थतया च । तदयुक्तमेतन्मार्षा मम भवेदकृतज्ञता च, यदहमनुत्तरायां सम्यक्संबोधौ
नाभिसंबुद्धेयम् ॥

अथ ते तुषितकायिका देवपुत्रा रुदन्तो बोधिसत्त्वस्य चरणौ परिगृह्यैवमाहुः –
L 39 इदं खलु सत्पुरुष तुषितभवनं त्वया विहीनं न भ्राजिष्यते । अथ बोधिसत्त्वस्तां महती देवपर्षद-
मेवमाह – अयं[5] मैत्रेयो बोधिसत्त्वो युष्माकं धर्मं देशयिष्यति । अथ बोधिसत्त्वः स्वकाच्छिरसः
पट्टमौलं चावतार्य मैत्रेयस्य बोधिसत्त्वस्य शिरसि प्रतिष्ठापयामास । एवं चावोचत् – ममान्तरेण त्वं
सत्पुरुष अनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यसे ॥

अथ बोधिसत्त्वो मैत्रेयं बोधिसत्त्वं तुषितभवनेऽभिनिषद्य पुनरपि तां महतीं देवपर्षद-
मामन्त्रयते स्म – कीदृशेनाहं मार्षा रूपेण मातुः कुक्षाववक्रामेयम् ? तत्र केचिदाहुः – मार्षा
मानवक[6]रूपेण । केचिदाहुः – शक्ररूपेण । केचिदाहुः – ब्रह्मरूपेण । केचिदाहुः –
महाराजिकरूपेण । केचिदाहुः – वैश्रवणरूपेण । केचिदाहुः – गन्धर्वरूपेण । केचिदाहुः –
किन्नररूपेण । केचिदाहुः – महोरगरूपेण । केचिदाहुः – महेश्वररूपेण । केचिदाहुः – चन्द्ररूपेण ।
केचिदाहुः – सूर्यरूपेण । केचिदाहुः – गरुडरूपेण । तत्रोग्रतेजो नाम ब्रह्मकायिको देवपुत्रः पूर्वर्षि-
जन्मच्युतोऽवैवर्तिकोऽनुत्तरायाः सम्यक्संबोधेः, स एवमाह – यथा ब्राह्मणानां मन्त्रवेदशास्त्र-
पाठेष्वागच्छति, तादृशेनैव रूपेण बोधिसत्त्वो मातुः कुक्षाववक्रामितव्यः । तत्पुनः कीदृशम्[7] ?
R 44 गजवरमहाप्रमाणः षड्दन्तो हेमजालसंकाशः सुरुचिरः सुरक्तशीर्षः स्फुटितगलितरूपवान् ।
एतच्छ्रुत्वा रूपं ब्राह्मणवेदशास्त्रतत्त्वज्ञो व्याकर्षितश्च[8] । इतो वै भावी द्वात्रिंशल्लक्षणोपेतः ॥

इति हि भिक्षवो बोधिसत्त्वो जन्मकालमवलोक्य तुषितवरभवनस्थः एवं राज्ञः शुद्धोदनस्य
गृहवरे अष्टौ पूर्वनिमित्तान्युपदर्शयति स्म । कतमान्यष्टौ ? तद्यथा – व्यपगततृण[9]खाणुकण्टक-
L 40 शर्करकठल्य[10]निर्मलं सुषिक्तं सुशोधित[11]मनाकुलवाततमोरजोविगतदंशकमक्षिका[12]पतङ्गसरीसृपापगत-
मवकीर्णकुसुमं समं पाणितलजातं तद्गृहं संस्थितमभूत् । इदं प्रथमं पूर्वनिमित्तं प्रादुरभूत् ॥

ये च हिमवत्पर्वतराजनिवासिनः पत्रगुप्तशुकसारिकाकोकिलहंसक्रौञ्चमयूरचक्रवाककुणाल-
कलविङ्कजीवंजीवकादयो विचित्ररुचिरपक्षा मनोज्ञप्रियभाषिणः शकुनिगणाः, ते आगत्य राज्ञः

१ R गाथया for कथया. २ L संदर्श्यमादाप्य for संदर्श्य समा°. ३ R पूर्वं for पूर्व°. ४ R प्रियवचनेन for °वचेन. ५ R अयं बोधिसत्त्वो मैत्रेयं बोधिसत्त्वं यौवराज्ये प्रतिष्ठाप्य स्वकाच्छिरसः for अयं मैत्रेयो…स्वका°. ६ R मानव° for मानवक°. ७ R कीदृशः. ८ R व्याकर्षितश्चाग्रभावी° for व्याक…वै भावी. ९ R °रेणु° for °तृण°. १० R °काढिन्यं for °कढल्य°. ११ R सुशोभित° for सुशोधित°. १२ R °मशक° for °मक्षिका°.

शुद्धोदनस्य गृहवरे वितर्दिनिर्यूहतोरणगवाक्षहर्म्यकूटागारप्रासादतलेषु स्थित्वा प्रमुदिताः प्रीतिसौमनस्यजाताः स्वकस्वकानि रुतान्युदाहरन्ति स्म। इति द्वितीयं पूर्वनिमित्तं प्रादुरभूत्॥

ये च राज्ञः शुद्धोदनस्यारामरमणीयेषु वनरमणीयेषु[1] चोद्यानरमणीयेषु नानापुष्पफलवृक्षा नानर्तुकारिकाः[2], ते सर्वे संपुष्पिताः संकुसुमिता अभूवन्। इदं तृतीयं पूर्वनिमित्तं प्रादुरभूत्॥

याश्च राज्ञः शुद्धोदनस्य पुष्करिण्यो जलपरिभोग्यस्थाः, ताः सर्वाः शकटचक्रप्रमाणैरनेककोटीनियुतशतसहस्रपत्रैः पद्मैः संछादिता अभूवन्। इदं चतुर्थं पूर्वनिमित्तं प्रादुरभूत्॥ R 45

ये च राज्ञः शुद्धोदनस्य गृहवरे भाजनविषये सर्पिस्तैलमधुफाणितशर्कराद्यानां ते परिभुज्यमानाः[3] क्षयं न गच्छन्ति स्म। परिपूर्णा एव संदृश्यन्ते स्म। इदं पञ्चमं पूर्वनिमित्तं प्रादुरभूत्॥

ये च राज्ञः शुद्धोदनस्य गृहवरप्रधाने महत्यन्तःपुरे भेरीमृदङ्गपणवतूणव[4]वीणावेणुवल्लकीसंपताडप्रभृतयस्तूर्यभाण्डाः, ते सर्वे स्वयमघट्टिता एव[5] मनोज्ञशब्दं मुञ्चन्ति[6] स्म। इदं षष्ठं पूर्वनिमित्तं प्रादुरभूत्॥ L 41

यानि च राज्ञः शुद्धोदनस्य गृहवरप्रधाने सुवर्णरूप्यमणिमुक्तावैडूर्य[7]शङ्खशिलाप्रवालादीनां रत्नानां भाजनानि, तानि सर्वाणि निरवशेषं विवृतविमलविशुद्धपरिपूर्णान्येवं विरोचन्ते स्म। इदं सप्तमं पूर्वनिमित्तं प्रादुरभूत्॥

विमलविशुद्धया चन्द्रसूर्यजिह्मीकरणया प्रभया कायचित्तोद्बिल्यसंजनन्या तद्गृहं समन्तादवभासितमभूत्। इदमष्टमं पूर्वनिमित्तं प्रादुरभूत्।

माया च देवी स्नातानुलिप्तगात्रा विविधाभरणविष्कम्भितभुजा सुश्लक्ष्णसुलीलवस्त्रवरधारिणी प्रीतिप्रामोद्यप्रसादप्रतिलब्धा सार्धं दशभिः स्त्रीसहस्रैः परिवृता पुरस्कृता राज्ञः शुद्धोदनस्य संगीतिप्रासादे सुखोपविष्टस्यान्तिकमुपसंक्रम्य दक्षिणे पार्श्वे रत्नजालप्रत्युप्ते भद्रासने निषद्य स्मितमुखी व्यपगतभृकुटिका प्रहसितवदना राजानं शुद्धोदनमाभिर्गाथाभिरभाषत्[8]— R 46

साधो शृणुष्व मम पार्थिव भूमिपाल[9]
याचामि ते नृपतिरद्य[10] वरं प्रयच्छ।
अभिप्रायु[11] मह्य यथ चित्तमनःप्रहर्षं
तन्मे शृणुष्व भव प्रीतमना उदग्रः॥ १॥

गृह्णामि देव व्रतशीलवरोपवासं
अष्टाङ्गपोषधमहं जगि[12] मैत्रचित्ता।
प्राणेषु हिंसविरता सद[13] शुद्धभावा
प्रेमं यथात्मनि परेषु तथा करोमि॥ २॥

---

१ R om. वनरमणीयेषु. २ R °कालिका° for °कारिका°. ३ R परिभोजपथाः for परिभुज्यमानाः. ४ R °तुण° for °तूणव°. ५ R स्वयमेवाद्य for स्वयमघट्टिता एव. ६ R प्रमुञ्चन्ति for मुञ्चन्ति. ७ R °वैदूर्य° for °वैडूर्य°. ८ R अभाषत for °षत्. ९ R धर्मपाल for भूमिपाल. १० R नृपतेऽद्य for नृपतिरद्य. ११ R °प्रायमप्यथ चित्त° for °प्रायु मह्य यथ चित्त°. १२ R जगति for जगि. १३ R सदा for सद.

L 42 स्तैन्या[1]द्विवर्जितमना मदलोभहीना
कामेषु मिथ्य[2]े नृपते न समाचरिष्ये ।
सत्ये स्थिता अपिशुना परुषप्रहीणा
संधिप्रलापमशुभं न समाचरिष्ये ॥ ३ ॥

व्यापाददोषखिलमोहमदप्रहीणा
सर्वा अभिध्य[3]ें विगता स्वधनेन तुष्टा ।
सम्यक्प्रयुक्त अकु[4]हानिलया अ[5]निर्ष्यु
कर्मा यथा दश इमे कुशला चरिष्ये ॥ ४ ॥

मा त्वं नरेन्द्र मयि कामतृषां कुरुष्व
शीलव्रतेष्वभिरता[6]य सुसंवृताय ।
R 47 मा ते अपुण्य नृपते भवि दीर्घरात्र-
मनुमोदया हि मम शीलव्रतोपवासम् ॥ ५ ॥

छन्दो ममेष नृपते प्रविशाद्य शीघ्रं
प्रासादहर्म्यशिखरे स्थित धार्तराष्ट्रे ।
सखिभिः सदा परिवृता सुख मोदयेयं
पुष्पाभिकीर्णशयने मृदुके सुगन्धे ॥ ६ ॥

न च काञ्चुकीय पुरुषा न[7] पि दारकाश्च
न च इस्त्रि प्राकृत ममा पु[8]रतः स्थिहेया ।
नो चामनाप मम रूप न शब्दगन्धान्
नान्यत्र इष्टमधुरा शृणुया सुशब्दान् ॥ ७ ॥

ये रोधबन्धनगताः परिमुञ्च सर्वान्
द्रव्याम्बरा[9]ंश्च पुरुषान्धनिनः कुरुष्व ।
L 43 वस्त्रान्नपान रथयु[10]ग्य तथाश्वयानं
दद सप्तरात्रिकमिदं जगतः सुखार्थम् ॥ ८ ॥

नो चो विवादकलहा न च रोषवाक्या
चान्योन्यमैत्रमनसो हितसौम्यचित्ता ।
अस्मिन् पुरे पुरुष[11] इष्टिक दारकाश्च
देवाश्च नन्दनगता सहिता रमन्ती[12]म् ॥ ९ ॥

---

१ R त्रैण्या° for स्तैन्या°. २ R मिथ्या for मिथ्य. ३ R अविद्य for अभिध्य°. ४ R अगुहा° for अकुहा°. ५ R अनीर्ष्या for अनिर्ष्यु. ६ R °रता यशःसंवृता च for °रताय सुसंवृताय. ७ R न वि for न पि. ८ R पुरतोऽस्ति हेयाः for पुरतः स्थिहेया. ९ R द्रव्याम्बरांश्च. १० R रथयुग्म for °युग्य. ११ R पुरुषेष्टिक. १२ L रमन्तान्.

न च राजदण्डनभटा न तथा कुदण्डा
नोत्पीडना न पि च तर्जनताडना वा ।
सर्वान् प्रसन्नमनसो हितमैत्रचित्ता R 48
वीक्षस्व देव जनतां यथ एकपुत्रम् ॥ १० ॥

श्रुत्वैव राज वचनं परमं उदग्रं
प्राहास्तु सर्वमिदमेव यथा तवेच्छा ।
अभिप्रायु तुभ्य मनसा[1] स्वनुचिन्तितानि
यद्याचसे[2] तव वरं तदहं ददामि ॥ ११ ॥

आज्ञाप्य पार्थिववरः स्वकपारिषद्यां
प्रासादश्रेष्ठशिखरे प्रकरोथ ऋद्धिम् ।
पुष्पाभिकीर्णरुचिरं[3] वरधूपगन्धं[4]
छत्रापताकसमलंकृततालपंक्तिम् ॥ १२ ॥

विंशत्सहस्र रणशोण्ड विचित्रवर्मा
नाराचशूलशरशक्तिगृहीतखड्गाः ।
परिवारयाथ धृतराज्य[5]मनोज्ञघोषं
देव्याऽभयार्थं करुणास्थित रक्षमाणा ॥ १३ ॥

स्त्रीभिस्तु सा परिवृता यथ देवकन्या L 44
स्नातानुलिप्तप्रवराम्बरभूषिताङ्गी ।
तूर्यैः सहस्रमनुगीतमनोज्ञघोषैः
आरुह्य देव्युपविवेश मरुत्स्नुषेव ॥ १४ ॥

दिव्यैर्महार्घसु[6]विचित्रसुरत्नपादैः
स्वास्तीर्णपुष्पविविधैः शयने मनोज्ञे ।
शयने स्थिता विगलिता मणिरत्नचूडा R 49
यथ मिश्रकावनगता खलु देवकन्या ॥ १५ ॥

अथ खलु भिक्षवश्चत्वारो महाराजानः शक्रश्च देवानामिन्द्रः सुयाँम[7]श्च देवपुत्रः संतुषितश्च सुनिर्मितश्च परनिर्मितवशवर्ती च सार्थवाहश्च मारपुत्रब्रह्मा[8] च सहांपति[9]र्ब्रह्मोत्तरश्च पुरोहितः सुब्रह्मा च पुरोहितः प्रभाव्यूहाभास्वरश्च महेश्वरश्च शुद्धावासकायिका निष्ठागतैश्चाक[10]निष्ठश्च एतानि चान्यानि चानेकानि देवशतसहस्राणि संनिपत्य अन्योन्यमेवाहुः – अयुक्तमेतन्मार्षा अस्माकं स्यादकृतज्ञता चै[11], यद्वयमेकाकिनमद्वितीयं बोधिसत्त्वमुत्सृजेम। कोऽस्माकं मार्षा उत्सहते

---

१ R om. मनसा. २ R यद्याच तुभ्यं for यद्याचसे तव. ३ R °रुचिरां. ४ R °गन्धां. ५ R °राष्ट्र° for °राज्य°. ६ R °सुविचित्रितरत्नपादे. ७ R सुयमश्च. ८ R °पुत्रो ब्रह्मा for °पुत्रब्रह्मा. ९ R सहपतिः. १० R °गताश्चैक° for °गतैश्चाक°. ११ R [illegible] for च यद्वयं.

बोधिसत्त्वं सततसमितं[1]मनुबद्धुमवक्रमणगर्भस्थानजन्मयौवनभूमिदारकक्रीडान्तःपुरनाटकसंदर्शनाभिनिष्क्रमणदुष्करचर्याबोधि[2]मण्डोपसंक्रमणमारधर्षणबोध्यभिसंबोधनधर्मचक्रप्रवर्तनं यावन्महापरिनिर्वाणा[3]द्धितचित्ततया स्निग्धचित्ततया प्रियचित्ततया मैत्रचित्ततया सौम्यचित्ततया ? तस्यां वेलायामिमां गाथामभाषत —

L 45 को वोत्सहेत वररूपधरम्
अनुबन्धयितुं सततं प्रीति[4]मनाः ।
कः पुण्यतेज यशसा वचसा
स्वयमात्मनेच्छति विबद्धयितुम् ॥ १६ ॥

यस्येप्सितं त्रिदशदेवपुरे
दिव्यैः सुखैर्हि रमितुं सततम् ।
परमाप्सरोभिरिह कामगुणैः
अनुबद्धितां विमलचन्द्रमुखम् ॥ १७ ॥

R 50 तथ मिश्रके वनवरे रुचिरे
दिव्याकरे रमितु देवपुरे ।
पुष्पोत्करे कनकचूर्णनिभे
अनुबन्धतां विमलतेजधरम् ॥ १८ ॥

यस्येप्सितं रमितु चित्ररथे
तथ नन्दने सुरवधूसहितः ।
मान्दारवैः कुसुमपत्रचिते
अनुबन्धतामिमुं[5] महापुरुषम् ॥ १९ ॥

यामा[6]धिपत्यमथ वा तुषितै-
रथ वापि प्रार्थयति चेश्वरताम् ।
पूजारहो भवितु सर्वजगे
अनुबन्धतामिमु अनन्तयशम् ॥ २० ॥

यो इच्छति निर्मितपुरे रुचिरे
वशवर्तिदेवभवने रमितुम् ।
मनसैव सर्वमनु[7]भोक्तिक्रिया
अनुबन्धतामिमु गुणाग्रधरम् ॥ २१ ॥

---

१ R °शमित°. २ R °बोधिमण्डलो° for बोधिमण्डो°. ३ R °निर्वाणाहित° for °निर्वाणाद्धित°. ४ R प्रीतिमनाः. ५ R इमं for इमु. ६ R यामया° for यामा°. ७ R °मनुभूतक्रियमनुबन्धतु इमं for °मनुभोक्ति ... मिमु.

मारेश्वरो[1] न च प्रदुष्टमना
[2]सर्वविधैश्वर्यपारगतः ।
कामेश्वरो वशितपारगतो
गच्छत्वसौ हितकरेण सह ॥ २२ ॥

तथ कामधातु समतिक्रमितुं
मति यस्य ब्रह्मपुरमावसितुम् ।
चतुरप्रमाण[3]प्रभतेजधरः
सो[4]ऽध्यानुबद्धतु महापुरुषम् ॥ २३ ॥

अथ वापि यस्य मनुजेषु मति
वरचक्रवर्तिविषये विपुले ।
रत्नाकरमभयसौख्य[5]ददम्
अनुबन्धतां विपुलपुण्यधरम् ॥ २४ ॥

पृथिवीश्वरस्तथ पि श्रेष्ठि[6]सुतो
आढ्यो महाधनु महानिचयः ।
परिवारवान्निहतशत्रुगणो
गच्छत्वसौ हितकरेण सह ॥ २५ ॥

रूपं च भोगमपि चेश्वरता
कीर्तिर्यशश्च बलता गुणवती ।
आदेयवाक्य[7] भवि ग्राह्यरुतो
ब्रह्मेश्वरं समुपयातु विदुम् ॥ २६ ॥

ये दिव्य काम तथ मानुष[8]कां L 46 R 51
यो इच्छती त्रिभवि सर्वसुखम् ।
ध्याने सुखं च प्रविवेकसुखं
धर्मेश्वरं समनुबन्धयताम् ॥ २७ ॥

रागप्रहाणु तथ दोषमपी
यो इच्छते तथ किलेशजहम् ।
शान्त प्रशान्त उपशान्त[9]मना
सो दान्तचित्तमनुयातु लघुम् ॥ २८ ॥

शैक्षा अशैक्ष तथ प्रत्येकजिना
सर्वज्ञज्ञानम[10]नुप्रापुरितुम् ।

---

१ R महेश्वरो for मारेश्वरो. २ R सर्वविद्यास्वतिपारगतः for the line. ३ R om. °प्रभ°. ४ R सोद्धायितुं महापुरुषः for the line. ५ R सौख्यप्रदम्. ६ R श्रेष्ठसुतो. ७ R °वाक्यैर्भुवि for °वाक्य भवि. ८ R मानुषकीयं. ९ R °मनस for °मना. १० R °मनुप्रापयितुं for °मनुप्रापुरितुम्.

दशभिर्बलैर्नदितु सिंह इव
गुणसागरः समनुयातु[1] विदुम् ॥ २९ ॥
पिथितुं[2] अपायपथ येषु[3] मतिर्
विवृतुं च षड्गतिपथं ह्यमृतम् ।
अष्टाङ्गमार्गगमनेन गतिम्
अनुबन्धतां गतिपथान्तकरम् ॥ ३० ॥
यो इच्छते सुगत पूजयितुं
धर्मं च तेषु श्रुतिकारुणिके ।
प्राप्तो[4] गुणानपि च संघगतान्
गुणसागरं समनुयातु इमम् ॥ ३१ ॥
जातिजरामरणदुःखक्षये
संसारबन्धन विमोक्षयितुम् ।
चरितुं विशुद्धगमनान्तसमं
सो[5] शुद्धसत्त्वमनुबन्धयताम् ॥ ३२ ॥
इष्टो[6] मनाप प्रियु सर्वजगे
वरलक्षणो वरगुणोपचितः ।
आत्मा परं च तथ मोचयितुं
प्रियदर्शनं समुपयातु विदुम् ॥ ३३ ॥
शीलं समाधि तथ प्रज्ञमयी[7]
गम्भीरदुर्दशदुरोपगमम् ।
R 52 यो इच्छते विदु विमुक्ति लभे
सो वैद्यराजमनुयातु लघुम् ॥ ३४ ॥
एते च अन्य गुण नैकविधा
उपपत्ति सौख्य तथ निर्वृतिये[8] ।
सर्वैर्गुणेभि प्रतिपूर्ण सिद्धये
सिद्धव्रतं समनुयातु विदुम् ॥ ३५ ॥ इति ॥

इदं खलु वचनं श्रुत्वा चतुरशीतिसहस्राणि चातुर्महाराजिकानां देवानां शतसहस्रं त्रयत्रिंशानां शतसहस्रं यामानां शतसहस्रं तुषितानां शतसहस्रं निर्माणरतीनां[9] शतसहस्रं पर-
L 47 निर्मितवशवर्तीनां देवानां षष्टिसहस्राणि मारकायिकानां पूर्वशुभकर्मनिर्यातानां अष्टषष्टिसहस्राणि ब्रह्मकायिकानां बहूनि शतसहस्राणि यावदकनिष्ठानां देवानां संनिपतितान्यभूवन् । अन्ये च

१ R समनुयाचत for °यातु. २ R प्रथितुं for पिथितुं. ३ R यथामतिर्. ४ R प्राप्तुं for प्राप्तो. ५ R तं शुद्ध° for सो शुद्ध°. ६ R इष्टा for इष्टो. ७ R प्रज्ञमयं. ८ R निर्वृतये. ९ R निर्माणरता for °रतीनां.

भूयः पूर्वदक्षिणपश्चिमोत्तरेभ्यो[1] दिग्भ्यो बहूनि देवशतसहस्राणि संनिपतितान्यभूवन् । तेभ्यो ये उदारतमा देवपुत्रास्ते तां महतीं देवपर्षदं गाथाभिरभ्यभाषन्त —

हन्त शृणोथ वचनं अमरेश्वराहो
अस्मिन् विधानमति यादृशतत्वभूता ।
त्यक्तार्थिकामरति ध्यानसुखं प्रणीतम्
अनुबन्धयाम इममुत्तमशुद्धसत्त्वम् ॥ ३६ ॥

ओक्रान्त[2]पाद तथ गर्भस्थितं महात्मं
पूजारहं अतिशयमभिपूजयामः ।
पुण्यैः सुरक्षितमृषिं परिर[3]क्षिसन्तो R 53
यस्यावतार लभते न मनः प्रदुष्टम् ॥ ३७ ॥

संगीतितूर्यरचितैश्च सुवाद्यकैश्च
वर्णा[4]गुणां कथयतो गुणसागरस्य ।
कुर्वाम देवमनुजान प्रहर्षणीयं
यं श्रुत्व बोधिवरचित्त जने[5] जनेर्या ॥ ३८ ॥

पुष्पाभिकीर्ण नृपतेश्च करोम गेहं
कालागुरूत्तमसुधूपितसौम्यगन्धम् ।
यं घ्रात्व देवमनुजाश्च भवन्त्युदग्रा
विगतज्वराश्च सुखिनश्च भवन्त्यरोगाः ॥ ३९ ॥

मान्दारवैश्च कुसुमैस्तथ पारिजातै-
श्चन्द्रैः सुचन्द्र तथ स्थाल[6]विरोचमानैः ।
पुष्पाभिकीर्ण कपिलाह्वय तं करोम
पूजार्थ पूर्वशुभकर्मसमुद्गतस्य ॥ ४० ॥

यावच्च गर्भि वसते त्रिमलैरलिप्तो
यावज्जरामरण चान्तकरः प्रसूतः ।
तावत्प्रसन्नमनसो अनुबन्धयाम
एषा मतिर्मतिधरस्य करोम पूजाम् ॥ ४१ ॥

लाभा सुलब्ध विपुलाः सुरमानुषाणां L 48 R 54
द्रक्ष्यन्ति जानु इमु सप्तपदां क्रमन्तम् ।
शक्रैश्च ब्रह्मणकरैः[7] परिगृह्यमानं
गन्धोदकैः स्नपियमानि सुशुद्धसत्त्वम् ॥ ४२ ॥

---

१ R पश्चिमोत्तराभ्यो. २ R आक्रान्त° for ओक्रान्त°. ३ R पर रक्षयन्तं for परिरक्षिसन्तो. ४ R वर्णान् गुणान्. ५ R जनेज्जनेष्यां for जने जनेर्या. ६ R स्फार° for स्थाल°. ७ R ब्रह्मनिकरैः.

यावच्च लोकि[1] अनुवर्तनतां करोति
अन्तःपुरे वसति कामकिलेशघाती ।
यावच्च निष्क्रमति राज्यमे[2]पास्य सर्वं
तावत्प्रसन्नमनसो अनुबन्धयामः ॥ ४३ ॥
यावदुपैति महिमण्डि तृणां गृहीत्वा
यावच्च बोधि स्पृशते विनिहत्य मारम् ।
अध्येष्टु ब्राह्मणयुतेभि प्रवर्ति चक्रं
तावत्करोम विपुलां सुगतस्य पूजाम् ॥ ४४ ॥
यद[3] बुद्धकार्यु कृतु भेष्यति त्रिसहस्रे
सत्त्वान कोटिनयुता अमृते विनीता ।
निर्वाणमार्गमुपयास्यति शीतिभावं
तावन्महाशयमृषिं न जहाम सर्वे ॥ ४५ ॥ इति ॥

अथ खलु[4] भिक्षवः कामधात्वीश्वराणां देवकन्यानां बोधिसत्त्वस्य रूपकायपरिनिष्पत्तिं दृष्ट्वा एतदभवत्—कीदृशी त्वसौ कन्या भविष्यति या इमं वरप्रवरशुद्धसत्त्वं धारयिष्यति । ताः
R 55 कौतूहलजाता वरप्रवरपुष्पधूपदीपगन्धमाल्यविलेपनचूर्णचीवरपरिगृहीता दिव्यमनोमयात्मभावप्रतिलब्धाः पुण्यविपाकाधिस्थानाधिस्थिताः तस्मिन् क्षणेऽमरपुरभवनादन्तर्हिताः कपिलाह्वये
L 49 महापुरवरे उद्यानशतसहस्रपरिमण्डिते राज्ञः शुद्धोदनस्य गृहे धृतराष्ट्रे महाप्रासादे अमर[5]भवनप्रकाशे विगलिताम्बरधारिण्यः शुभविमलतेजप्रतिमण्डिता दिव्याभरणस्तम्भितभुजाः शयनवरगतां मायादेवीमेकाङ्गुलिकयोपदर्शयन्त्यो गगनतलगताः परस्परं गाथाभिरभ्यभाषन्त—

अमरपुरगतान अप्सराणां
रूप मनोरम दृष्ट्व बोधिसत्त्वे ।
मतिरियमभवत्तदा हि तासां
प्रमद नु कीदृश बोधिसत्त्वमाता ॥ ४६ ॥
ताश्च सहितपुष्पमाल्यहस्ता
उपगमि वेश्म नृपस्य जातकाङ्क्षा ।
पुष्प तथ विलेपनां गृहीत्वा
दशनखअञ्जलिभिर्नमस्यमानाः ॥ ४७ ॥
विगलितवसनाः सलीलरूपाः
करतल दक्षिणि अङ्गुलीं प्रणम्य ।
शयनगत विदर्शि मायदेवीं
साधु निरीक्षथ रूप मानुषीणाम् ॥ ४८ ॥

१ R लोक. २ L अपास्य for अपास्य. ३ R यो for यद. ४ R om. खलु. ५ R अमल° for अमर°.

वयमिह अभिमन्ययाम अन्ये R 56
परममनोरम सुरूप अप्सराणाम् ।
इम नृपतिवधूं निरीक्षमाणा
जिह्वि[1] विपश्यथ दिव्य आत्मभावाम् ॥ ४९ ॥
रतिरिव सदृशी गुणान्विता च
जननिरियं प्रवराग्रपुद्गलस्य ।
मणिरतन यथा सुभाजनस्थ
तथ इव भाजन देवि देवदेवे[2] ॥ ५० ॥
करचरणतलेभि यावदूर्ध्वे
अङ्ग मनोरम दिव्य आतिरेकाः[3] ।
प्रेक्षितु[4] नयनान्न चास्ति तृप्तिं
भूय प्रहर्षति चित्त मानसं च ॥ ५१ ॥
शशिरिव गगने विराजतेऽस्या
वदनु वरं च विराजे[5] गात्रभासा ।
रविरिव विमला शशीव दीप्ता
तथ प्रभ निश्चरतेऽस्य आत्मभावात् ॥ ५२ ॥
कनकमिव सुजातजातरूपा
वर्ण विरोचति देवियेतथैव ।
भ्रमरवरनिकाश कुन्तलानी
मृदुकसुगन्धश्रवास्य मूर्धजानि ॥ ५३ ॥
कमलदलनिभे तथास्य नेत्रे
दशनविशुद्ध नभेव ज्योतिषाणि ।
चाप इव तनूदरी विशाला
पार्श्व समुद्गत मांसि[6] नास्ति संधिः ॥ ५४ ॥
गजभुजसदृशोऽस्य ऊरुजङ्घे L 50 R 57
जानु[7] सुजात्वनुपूर्वमुद्गतास्य ।
करतल[8]चरणा समा सुरक्ता
व्यक्तमियं खलु देवकन्य नान्या ॥ ५५ ॥
एव बहुविधं निरीक्ष्य देवीं
कुसुम क्षिपित्वे[9] प्रदक्षिणं च कृत्वा ।

---

१ R जिह्मि. २ R देवदेव. ३ R अतिरेकं for आतिरेकाः. ४ R प्रेक्षितु. ५ R विराजति for विराज. ६ R om. मांसि. ७ R om. जानु. ८ R करचरणतलं समं सुरक्तं for the line. ९ R क्षिप्त for क्षिपित्व.

[1]सुंपिय यशवती जिनस्य माता
पुनरपि देवपुरं गता क्षणेन ॥ ५६ ॥
अथ चतुरि चतुर्दिशासु पालाः
शक्र सुयाम तथैव निर्मिताश्च ।
देवगण कुम्भाण्ड राक्षसाश्च
असुर महोरग किन्नराश्च वोचन् ॥ ५७ ॥
गच्छत पुरतो नरोत्तमस्य
पुरुषवरस्य करोथ रक्ष[2]गुप्तिम् ।
मा कुरुत जगे मनःप्रदोषं
मा च करोत विहेठ मानुषाणाम् ॥ ५८ ॥
यत्र गृहव[3]रस्मि मायदेवी
तत्र समग्र सपारिषद्य सर्वे ।
असिधनुशरशक्तिखड्गहस्ता
गगनत[4]लस्मि स्थिता निरीक्षयाथ ॥ ५९ ॥
ज्ञात्व च्यवनकाल देवपुत्रा
उपगमि मायसकाश हृष्टचित्ता ।
पुष्प तथ विलेपनां गृहीत्वा
दशनखअञ्जलिभिर्नमस्यमानाः ॥ ६० ॥
च्यव च्यव हि नरेन्द्र शुद्धसत्त्वा
अयु समयो भवतोऽद्य वादिसिंह ।
कृपकरुण जनित्व सर्वलोके
अ[5]स्मि अध्येषम धर्मदानहेतोः ॥ ६१ ॥ इति ॥

R 58 अथ खलु भिक्षवो बोधिसत्त्वस्य च्यवनकालसमये पूर्वस्या दिशो बहूनि बोधिसत्त्वशतसहस्राणि सर्वे एकजातिप्रतिबद्धास्तुषितवरभवनवासिनो येन बोधिसत्त्वस्तेनोपसंक्रामन् बोधिसत्त्वस्य पूजाकर्मणे । [6]एवं दशभ्यो दिग्भ्यो एकैकस्या दिशो बहूनि बोधिसत्त्वशतसहस्राणि सर्वे एकजातिप्रतिबद्धास्तुषितवरभवनवासिनो येन बोधिसत्त्वस्तेनोपसंक्रामन्
L 51 बोधिसत्त्वस्य पूजाकर्मणे । चातुर्महाराजकायिकेभ्यो देवेभ्यश्चतुरशीत्यप्सरःशतसहस्राण्येवं त्रयत्रिंशतो यामेभ्यस्तुषितेभ्यो निर्माणरतिभ्यः परनिर्मितवशवर्तिभ्यो देवेभ्यश्चतुरशीत्यप्सरःशतसहस्राणि नानातूर्यसंगीतिवादितेन येन बोधिसत्त्वस्तेनोपसंक्रामन् बोधिसत्त्वस्य पूजाकर्मणे ॥

अथ खलु बोधिसत्त्वः श्रीगर्भसिंहासने सर्वपुण्यसमुद्गते सर्वदेवनागसंदर्शने महाकूटागारे निषद्य सार्धं बोधिसत्त्वैर्देवनागयक्षकोटिनियुतशतसहस्रैः परिवृतः पुरस्कृतस्तुषित-

१ R सुप्रिय वसतिं जिनस्य माता for the line. २ R रथगुप्तिम् for रक्ष°. ३ R गृहवरेऽस्ति for °वरस्मि. ४ R °तलस्थिता for °तलस्मि स्थिता. ५ R अस्मिन्नध्यस. ६ R om. the whole sentence from एवं ... कर्मणे.

वरभवनात् प्रचलति स्म । प्रचलता च भिक्षवो बोधिसत्त्वेन तथारूपा कायात् प्रभा मुक्ता[1]भूद् यया प्रभया अयं त्रिसाहस्रमहासाहस्रो लोकधातुरेवं विपुलविस्तीर्णो[2] महतोदारेण सुप्रचलितपूर्वेण दिव्यप्रभासमतिक्रान्तेनावभासेन परिस्फुटोऽभूत् । या अपि ता लोकान्तरिका अघा[3] अघस्फुटा अन्धकारास्तमिस्रा यत्रेमौ चन्द्रसूर्यावेवं महर्द्धिकावेवं महानुभावावेवं महेशाख्यौ आभया आभां वर्णेन वर्णं तेजसा तेजो नाभितपतो नाभिविरोचतः, तत्र ये सत्त्वा उपपन्नास्ते स्वकानपि बाहुप्रसारितान्न पश्यन्ति । तथापि तस्मिन् समये महत उदारस्यावभासस्य प्रादुर्भावोऽभूत् । ये च तत्र सत्त्वा उपपन्नास्ते तेनैवावभासेन स्फुटाः समाना अन्योन्यं सम्यक् पश्यन्ति स्म । अन्योन्यं संजानन्ते स्म । एवं चाहुः — अन्येऽपि किल भोः सत्त्वा इहोपपन्नाः किल भो इति ॥

अयं च त्रिसाहस्रमहासाहस्रो लोकधातुः[4] षड्विकारमष्टादशमहानिमित्तमभूत् । अकम्पत् R 59
प्राकम्पत् संप्राकम्पत् । अवेधत् प्रावेधत् संप्रावेधत् । अचलत् प्राचलत् संप्राचलत् । अक्षुभ्यत्
प्राक्षुभ्यत् संप्राक्षुभ्यत् । अरणत् प्रारणत् संप्रारणत् । अगर्जत् प्रागर्जत् संप्रागर्जत् । L 52
अन्तेऽवनमति स्म, मध्ये उन्नमति स्म । मध्येऽवनमति स्म, अन्ते उन्नमति स्म । पूर्वस्यां दिश्यवनमति स्म, पश्चिमायां दिश्युन्नमति स्म । पश्चिमायां दिश्यवनमति स्म, पूर्वस्यां दिश्युन्नमति स्म । दक्षिणस्यां दिश्यवनमति स्म, उत्तरस्यां दिश्युन्नमति स्म । उत्तरस्यां दिश्यवनमति स्म, दक्षिणस्यां दिश्युन्नमति स्म । तस्मिन् समये हर्षणीयास्तोषणीयाः प्रेमणीयाः प्रसादनीया अवलोकनीयाः प्रह्लादनीया निर्वर्णनीया असेचनीया अप्रतिकूला अनुत्त्रासकराः शब्दाः श्रूयन्ते स्म । न च कस्यचित् सत्त्वस्य तस्मिन् क्षणे विहेठा वा त्रासो वा भयं वा स्तम्भितत्वं वाभूत् । न च भूयः सूर्याचन्द्रमसोर्न ब्रह्मशक्रलोकपालानां तस्मिन् क्षणे प्रभा प्रज्ञायते स्म । सर्वनरकतिर्यग्योनियमलोकोपपन्नाश्च सत्त्वास्तस्मिन् क्षणे विगतदुःखा अभूवन् सर्वसुखसमर्पिताः । न च कस्यचित् सत्त्वस्य रोगो[5] बाधते स्म, द्वेषो वा मोहो वा, ईर्ष्या वा मात्सर्यं वा, मानो वा म्रक्षो वा, मदो वा क्रोधो वा, व्यापादो वा परिदाहो वा । सर्वसत्त्वास्तस्मिन् क्षणे मैत्रचित्ता हितचित्ताः परस्परं मातापितृसञ्ज्ञिनोऽभूवन् । अघट्टितानि च दिव्यमानुष्यकाणि तूर्यकोटिनियुतशतसहस्राणि मनोज्ञघोष-
मुत्सृजन्ति स्म । देवकोटीनयुतशतसहस्राणि पाणिभिरंसैः शिरोभिस्तं महाविमानं वहन्ति स्म । R 60
तानि चाप्सरःशतसहस्राणि स्वां स्वां संगीतिं संप्रयुज्य पुरतः पृष्ठतो वामदक्षिणेन च स्थित्वा बोधिसत्त्वं संगीतिरुतस्वरेणाभिस्तुवन्ति स्म —

पूर्वकर्मशुभसंचितस्य ते
दीर्घरात्रकुशलोदितस्य ते ।
सत्यधर्मनयशोधितस्य ते
पूज अद्य विपुला प्रवर्तते ॥ ६२ ॥

---

१ R प्रमुक्ता for मुक्ता. २ R विपुलविस्तीर्णेन. ३ R अद्या अद्यास्फुटा for अघा अघस्फुटा.
४ R लोकधातुस्तत्र for लोकधातुः. ५ R रोगी for रोगो.

L 53 पूर्वि तुभ्य बहुकल्पकोटियो
दातु दत्तु प्रियपुत्रधीतरा ।
तस्य दानचरितस्य तत्फलं
येन दिव्य कुसुमाः प्रवर्षिताः ॥ ६३ ॥

आत्ममांस तुलयित्व ते विभो
सोऽभिदत्तु प्रियपक्षिकारणात् ।
तस्य दानचरितस्य तत्फलं
प्रेतलोकि लभि पानभोजनम् ॥ ६४ ॥

पूर्वि तुभ्य बहुकल्पकोटियो
शील रक्षितमखण्डनव्रतम् ।
तस्य शीलचरितस्य तत्फलं
येन अक्षण अपाय शोधिताः ॥ ६५ ॥

पूर्वि तुभ्य बहुकल्पकोटियो
क्षान्ति भावित निदानबोधये ।
तस्य क्षान्तिचरितस्य तत्फलं
मैत्रचित्त भुत देवमानुषाः ॥ ६६ ॥

पूर्वि तुभ्य बहुकल्पकोटियो
वीर्यु भावितमलीनमुत्तमम् ।
तस्य वीर्यचरितस्य तत्फलं
येन कायु यथ मेरु शोभते ॥ ६७ ॥

पूर्वि तुभ्य बहुकल्पकोटियो
ध्यान ध्यायित[1] किलेशध्येषणात् ।
तस्य ध्यानचरितस्य तत्फलं
येन क्लेश जगतो न बाधते ॥ ६८ ॥

R 61 पूर्वि तुभ्य बहुकल्पकोटियो
प्रज्ञ भावित किलेशछेदनी ।
तस्य प्रज्ञचरितस्य तत्फलं
येन आभ परमा विरोचते ॥ ६९ ॥

मैत्रवर्मित किलेशसूदना
सर्वसत्त्वकरुणाय उद्गता ।
मोदिप्राप्त परमा उपेक्षका
ब्रह्मभूत सुगता नमोऽस्तु ते ॥ ७० ॥

१ R ध्यापित for ध्यायित.

प्रज्ञ उल्कप्रभ तेजसोद्गता
सर्वदोषतममोहशोधका ।
चक्षुभूत त्रिसहस्रिनायका
मार्गदेशिक मुने नमोऽस्तु ते ॥ ७१ ॥

ऋद्धिपादवरभिज्ञकोविदा
सत्यदर्शी परमार्थि शिक्षिता ।
तीर्ण तारयसि अन्यप्राणिनो
दाशभूत सुगता नमोऽस्तु ते ॥ ७२ ॥

सर्वोपायवरभिज्ञकोविदा
दर्शयसि च्युंतिमच्युतिच्युतिम्[1] ।
लोकधर्मभवनोभिवर्तसे[2]
नो च[3] लोकि क्वचि ओपलिप्यसे ॥ ७३ ॥

लाभे[4] तेष परमा अचिन्तिया L 54
येषु दर्शन श्रवं च एष्यसे ।
किं पुनः श्रृणुय यो तिधर्मतां
श्रद्ध प्रीति विपुला जनेष्यसे ॥ ७४ ॥

जिह्म सर्व तुषितालयो भुतो
जम्बुद्वीपि पुरि यो उदागतः ।
प्राणिकोटिनयुता अचिन्तियां[5]
बोधयिष्यसि प्रसुप्त क्लेशतो ॥ ७५ ॥

ऋद्ध स्फीत पुरमद्य भेष्यती
देवकोटिनयुतैः समाकुलम् ।
अप्सरोभि तुरियैर्निनादितं R 62
राजगेहि मधुरं श्रुणिष्यति ॥ ७६ ॥

पुण्यतेजभरिता शुभकर्मणा
नारि सा परमरूपउपेता ।
यस्य पुत्र अयमेव समृद्धः
तिस्रलोकि अभिभाति शीरिये ॥ ७७ ॥

---

१ R च्युतमच्युतच्युतिम्. २ R °भवनानुवर्तसे. ३ R नैव लोकि क्वचिदेव लिप्यसे for the line. ४ R लाभदोषपरमं विचिन्तिया for the line. ५ R विचिन्तिया for अचिन्तियां.

नो भुयो पुरवरस्मि देहिनां
लोभदोषकलहा विवादका ।
सर्व मैत्रमनसः सगौरवा
भाविनो नरवरस्य तेजसा ॥ ७८ ॥

राजवंश नृपतेः प्रवर्धते
चक्रवर्तिकुलराजसंभवः ।
भेष्यते कपिलसाह्वयं पुरं
रत्नकोषभरितं सुसमृद्धम् ॥ ७९ ॥

यक्षराक्षसकुम्भाण्डगुह्यका
देवदानवगणाः सइन्द्रकाः ।
ये स्थिता नरवरस्य रक्षकाः
तेषु मोक्ष नचिरेण भेष्यते ॥ ८० ॥

पुण्युपार्जितु स्तवित्व नायकं
प्रेमगौरवमुपस्थपिस्व ना[1] ।
सर्व बोधि परिणामयामहे
क्षिप्र भोम यथ त्वं नरोत्तम ॥ ८१ ॥ इति ॥

इति श्रीललितविस्तरे प्रचलपरिवर्तो नाम पञ्चमोऽध्यायः[2] ॥

---

१ R ना for नः. २ R om. अध्यायः.

## गर्भावक्रान्तिपरिवर्तः षष्ठः ।

इति हि भिक्षवः शिशिरकाल[1]विनिर्गते वैशाखमासे विशाखानक्षत्रानुगते ऋतुप्रवरे[2]
वसन्तकालसमये तरुवरपत्राकीर्णे वरप्रवरपुष्पसंकुसुमिते शीतोष्णतमोरजोविगते मृदुशाद्वले
सुसंस्थिते त्रिभुवनज्येष्ठो लोकमहितो व्यवलोक्य ऋतुकालसमये पञ्चदश्यां पूर्णमास्यां[3] पोषध[3]- R 63 L 55
गृहीताया मातुः पुष्यनक्षत्रयोगेन बोधिसत्त्वस्तुषितवरभवनाच्च्युत्वा स्मृतः संप्रजानन् पाण्डुरो[4]
गजपोतो भूत्वा षड्दन्त इन्द्रगोपकशिराः सुवर्णराजीदन्तः सर्वाङ्गप्रत्यङ्गोऽहीनेन्द्रियो जनन्या
दक्षिणायां कुक्षाववक्रामत् । अवक्रान्त[5]श्च स दक्षिणावचरोऽभून्न जातु वामावचरः । मायादेवी
सुखशयन[6]प्रसुप्ता इमं स्वप्नमपश्यत् –

हिमरजतनिभश्च षड्विषाणः
सुचरण चारुभुजः सुरक्तशीर्षः ।
उदरमुपगतो गजप्रधानो
ललितगतिर्दृढवज्रगात्रसंधिः ॥ १ ॥
न च मम सुख जातु एवरूपं
दृष्टमपि श्रुतं नापि चानुभूतम् ।
कायसुखचित्तसौख्यभावा
यथरिव ध्यानसमाहिता अभूवम् ॥ २ ॥

अथ खलु मायादेवी आभरणविगलितवसना प्रह्लादितकायचित्ता प्रीतिप्रामोद्यप्रसाद-प्रतिलब्धा शयनवरतलादुत्थाय नारीगणपरिवृता पुरस्कृता प्रासादवरशिखरादवतीर्य येनाशोक-वनिका तेनोपजगाम । सा अशोकवनिकायां सुखोपविष्टा राज्ञः शुद्धोदनस्य दूतं प्रेषयति स्म – आगच्छतु देवो देवी ते द्रष्टुकामेति ॥

अथ स राजा शुद्धोदनस्तद्वचनं श्रुत्वा प्रहर्षितमना आकम्पितशरीरो भद्रासनादुत्थाय
अमात्यनैगमपार्षद्यबन्धुजनपरिवृतो येनाशोकवनिका तेनोपसंक्रामत्, उपसंक्रान्तश्च न शक्नोति स्म R 64
अशोकव[7]निकां प्रवेष्टुम् । गुरुतरमिवात्मानं मन्यते स्म । अशोकवनिकाद्वारे स्थितो मुहूर्तं
संचिन्त्य तस्यां वेलायामिमां गाथामभाषत–

न स्मरि रणशौण्डि मूर्धसंस्थस्य मह्यम्
एव गुरु शरीरं मन्य[9]मी यादृशोऽद्य ।
स्वकुलगृह[10]मद्य न प्रभोमि प्रवेष्टुं L 56
किमिह मम भवेऽङ्गो कान्वे[11] पृच्छेय चाहम् ॥ ३ ॥ इति ॥

---

१ R °काले निर्गते for °कालविनि°. २ R °प्रवले for °प्रवरे. ३ R पूर्णिमायां for पूर्णमास्यां. ३ R °पोषधपरिगृही° for ° पोषधगृही°. ४ R पाण्डुरगजरूपो for पाण्डुरो गजपोतो. ५ R अवक्रान्तः सन् for °क्रान्तश्च. ६ R° शयनसंसुप्ता for °प्रसुप्ता. ७ R °वनिकायां for °वनिकां. ८ R ° द्वारस्थितः for °द्वारे स्थितः. ९ R मन्यति for मन्यमी. १० R °गृहमिदमद्य for °गृहमद्य. ११ R कं नु for कान्व.

अथ खलु शुद्धावासकायिका देवपुत्रा[1] गगनतलगता अर्धकायमभिनिर्माय राजानं गाथयाध्यभाषन्त—

व्रततपगुणयुक्तस्तिस्रलोकेषु पूज्यो
मैत्रकरुणलाभी पुण्यज्ञानाभिषिक्तः ।
तुषितपुरि च्यवित्वा बोधिसत्त्वो महात्मा
नृपति तव सुतत्वं मायकुक्षौपपन्नः ॥ ४ ॥

दशनख तद कृत्वा स्वं शिरं कम्पयन्तो
नृपतिरनुप्रविष्टश्चित्रिकारानुयुक्तः ।
माय तद निरीक्ष्य मानदर्पोपनीतां
वदहि कुरुमि किं ते किं[2] प्रयोगो भणाहि ॥ ५ ॥

देव्याह—

हिमरजतनिकाशश्चन्द्रसूर्यातिरेकः
सुचरण सुविभक्तः षड्विषाणो महात्मा ।
R 65 गजवरु दृढसंधिर्वज्रकल्पः सुरूपः
उदरि मम प्रविष्टस्तस्य हेतुं श्रृणुष्व ॥ ६ ॥

वितिमिर त्रिसहस्रां पश्यमी भ्राजमानां
देवनयुत देवा ये स्तुवन्ती सयाना ।
न च मम खिलदोषो नैव रोषो न मोहो
ध्यानसुखसमङ्गी[3] जानमी शान्तचित्ता ॥ ७ ॥

L 57 साधु नृपति शीघ्रं ब्राह्मणानानयास्मिन्
वेदसुपिनपाठा ये गृहेषू विधिज्ञाः ।
सुपितु मम हि येमं व्याकरी तत्त्वयुक्तं
किमिद मम भवेया श्रेयु पापं कुलस्य ॥ ८ ॥

वचनमिमु श्रुणित्वा पार्थिवस्तत्क्षणेन
ब्राह्मण कृतवेदानानयच्छास्त्रपाठान्[4] ।
माये[5] पुरत स्थित्वा ब्राह्मणानामवोचत्
सुपिन मयि ह दृष्टस्तस्य हेतुं शृणोथ ॥ ९ ॥

---

१ R देवा for देवपुत्रा. २ R प्रिये शोभनानि for किं प्रयोगो भणाहि. ३ R °सुखमहं वै for °सुखसमङ्गी. ४ R °नानयच्छास्त्रपाठा for °नानयच्छास्त्रपाठान्. ५ R मम च for माय.

ब्राह्मणा आहुः—ब्रूहि देवि त्वया कीदृशं[1] स्वप्नं दृष्टम्। श्रुत्वा ज्ञास्यामः।

देव्याह[2]—

हिमरजतनिकाशश्चन्द्रसूर्यातिरेकः
सुचरण सुविभक्तः षड्विषाणो महात्मा।
गजवरु दृढसंधिर्वज्रकल्पः सुरूपः R 66
उदरि मम प्रविष्टस्तस्य हेतुं शृणोथ॥ १०॥

वचनमिमु श्रुणित्वा ब्राह्मणा एवमाहुः
प्रीति विपुल चिन्त्या नास्ति पापं कुलस्य।
पुत्र तव जनेसी[3] लक्षणैर्भूषिताङ्गं
राजकुलकुलीनं चक्रवर्तिं महात्मं॥ ११॥

स च पुरं[4] विजहित्वा कामराज्यं च गेहं
प्रव्रजित निरपेक्षः सर्वलोकानुकम्पी।
बुद्धो भवति एषो दक्षिणीय[5]स्त्रिलोके
अमृतरसवरेणा तर्पयेत् सर्वलोकम्॥ १२॥

व्याकरित्व गिरं सौम्यां भुक्त्वा पार्थिवभोजनम्। L 58
आच्छादनानि चोद्गृह्य प्रक्रान्ता ब्राह्मणास्ततः॥ १३॥

इति हि भिक्षवो राजा शुद्धोदनो ब्राह्मणेभ्यो लक्षणनैमित्तिक[6]वैपञ्चकेभ्यः[7] स्वप्नाध्यायीपाठकेभ्यः प्रतिश्रुत्य हृष्टस्तुष्ट उदग्र आत्तमनाः प्रमुदितः प्रीतिसौमनस्यजातस्तान् ब्राह्मणान् प्रभूतेन[8] खादनीयभोजनीयास्वादनीयेन संतर्प्य संप्रवार्याच्छादनानि च दत्वा विसर्जयति स्म। तस्यां वेलायां कपिलवस्तुनि महानगरे चतुर्षु नगरद्वारेषु सर्व[9]नगरचत्वरशृङ्गाटकेषु च दानं R 67 दापयति स्म अन्नमन्नार्थिकेभ्यः, पानं पानार्थिकेभ्यः, वस्त्राणि वस्त्रार्थिकेभ्यः, यानानि यानार्थिकेभ्यः। एवं गन्धमाल्यविलेपनशय्योपाश्रयं प्राजीविकं प्राजीविकार्थिभ्यो यावदेव बोधिसत्त्वस्य पूजा[10]कर्मणे॥

अथ खलु भिक्षवो राज्ञः शुद्धोदनस्यैतदभवत्—कतमस्मिन् गृहे मायादेवी सुखमनुपक्लिष्टा विहरेदिति। अथ तत्क्षणमेव चत्वारो महाराजानो राजानं शुद्धोदनमुपसंक्रम्यैवमाहुः—

अल्पोत्सुको देव भव सुखं तिष्ठ उपेक्षको।
वयं हि बोधिसत्त्वस्य वेश्म वै मापयामहे॥ १४॥

---

१ R कीदृशास्त्वया स्वप्नो दृष्टः for त्वया कीदृशं स्वप्नं दृष्टं. २ R देवी प्राह. ३ R जनेषी. ४ R पुन for पुर. ५ R दर्शनीयः for दक्षिणीयः. ६ R लक्षणनिमित्तं for लक्षणनैमित्तिक°. ७ R °निमित्तज्ञेभ्यः for °वैपञ्चकेभ्यः. ८ R प्रणीतेन for प्रभू°. ९ R महानगर° for सर्व°. १० R पूजाकरणे.

अथ खलु शक्रो देवानामिन्द्रो राजानं शुद्धोदनमुपसंक्रम्यैवमाह —

हीना विमा[1]ना पालानां त्रयत्रिंशानमु[2]त्तमाः ।
वैजयन्तसमं वेश्म बोधिसत्त्वस्य दाम्यहम् ॥ १५ ॥

अथ खलु सुयामो देवपुत्रो राजानं शुद्धोदनमुसंक्रम्यैवमाह —

L 59 मदीयं भवनं दृष्ट्वा विस्मिताः शक्रकोटयः ।
सुयामभवनं श्रीमद्बोधिसत्त्वस्य दाम्य[3]हम् ॥ १६ ॥

अथ खलु संतुषितो देवपुत्रो राजानं शुद्धोदनमुपसंक्रम्यैवमाह —

यत्रैव उषितः पू[4]र्वं तुषितेषु महायशाः ।
तदेव भवनं रम्यं बोधिसत्त्वस्य दाम्यहम् ॥ १७ ॥

R 68 अथ खलु सुनिर्मितो देवपुत्रो राजानं शुद्धोदनमुपसंक्रम्यैवमाह —

मनोम[5]यमहं श्रीमद्वेश्म तद्रतनामयम् ।
बोधिसत्त्वस्य पूजार्थमुपनेष्यामि पार्थिव ॥ १८ ॥

अथ खलु परनिर्मितवशवर्ती देवपुत्रो राजानं शुद्धोदनमुपसंक्रम्यैवमाह —

यावन्तः कामधातुस्था विमानाः शोभनाः क्वचित् ।
भा[6]भिस्ते मद्विमानस्य भवन्त्यभिहतप्रभाः ॥ १९ ॥

तत् प्रयच्छाम्यहं श्रीमद्वेश्म रत्नमयं शुभम् ।
बोधिसत्त्वस्य पूजार्थमानयिष्यामि पार्थिव ॥ २० ॥

दिव्यैः पुष्पैः समाकीर्णं दिव्यगन्धोपवासितम् ।
उपनामयिष्ये विपुलं यत्र देवी वसिष्यति ॥ २१ ॥

इति हि भिक्षवः सर्वैः कामावचरैर्देवेश्वरैर्बोधिसत्त्वस्य पूजार्थं कपिलाह्वये महा[7]पुरवरे स्वकस्वकानि गृहाणि मापितान्यभूवन् । राज्ञा[8] चापि शुद्धोदनेन मनुष्यातिक्रान्तं दिव्या[9]संप्राप्तं गृह[10]तरं प्र[11]तिसंस्कारितमभूत् । तत्र बोधिसत्त्वो मह[12]सत्त्वो महाव्यूहस्य समाधेरनुभावेन सर्वेषु तेषु गृहेषु मायादेवीमुपदर्शयति स्म । अभ्यन्तरगतश्च बोधिसत्त्वो मायादेव्याः कुक्षौ दक्षिणे पार्श्वे
L 60 पर्यङ्कमाभुज्य निषण्णोऽभूत् । सर्वे च ते देवेश्वरा एकै[13]कमेवं संजानीते स्म — ममैव गृहे बोधिसत्त्वमाता प्रतिवसति नान्यत्रेति ॥

---

१ R विमानपालानां for विमाना. २ R °मुत्तमं for °मुत्तमाः. ३ R दास्म्यहं for दाम्यहम्. ४ R पूर्वे. ५ R नानारत्नमयं for मनोमयमहं. ६ R तानि ते for भाभिस्ते. ७ R om. महा°. ८ R राज्ञापि. ९ R देव्यसंप्राप्तं for दिव्यासंप्राप्तं. १० R गृहं for गृहतरं. ११ R om. प्रति°. १२ R om. महासत्त्वो. १३ R क एवं for एकैकमेवं.

तत्रेदमुच्यते —

महाव्यूहाय स्थितः समाधिये
अचिन्तिया निर्मित निर्मिणित्वा ।
सर्वेष देवानभिप्राय पूरिता
नृपस्य पूर्णश्च तदा मनोरथः ॥ २२ ॥

अथ खलु तस्यां देवपर्षदि केषांचिद्देवपुत्राणामेतदभवत् — येऽपि तावच्चातुर्महाराजकायिका R 69 देवा[1]स्तेऽपि तावन्मनुष्याश्रयगतत्वेन निर्विद्यापक्रमन्ति । कः पुनर्वादो ये तदन्ये उदारतमा देवाः त्रायत्रिंशा वा यामा वा तुषिता वा । तत्कथं हि नाम सर्वलोकाभ्युद्गतो बोधिसत्त्वः शुचिर्निरामगन्धः सत्त्वरत्नः संतुषिताद्देवनिकायाच्च्युत्वा दुर्गन्धे मनुष्याश्रये दशमासान् मातुः कुक्षौ स्थित इति ॥

अथ खल्वायुष्मानानन्दो बुद्धानुभावेन भगवन्तमेतदवोचत् — आश्चर्यं भगवन् यावज्जुगुप्सनीयश्च मातृग्रामस्तथागतेनोक्तो यावद्रागचरितश्च । इदं तु भगवन् आश्चर्यतरम् । कथं हि नाम सर्वलोकाभ्युद्गतो भगवान् पूर्वं बोधिसत्त्वभूत एव तुषिताद्देवनिकायाच्च्यवित्वा मनुष्याश्रये ( दुर्गन्धे ) मातुर्दक्षिणे ( पार्श्वे ) कुक्षावुपपन्न इति । नाहं भगवन् इदमुत्सहे एवं वक्तुं यथैव पूर्वं[2] भगवता व्याकृतमिति । भगवानाह — इच्छसि त्वमानन्द रत्नव्यूहं बोधिसत्त्वपरिभोगं द्रष्टुं यो मातुः कुक्षिगतस्य बोधिसत्त्वस्य परिभोगोऽभूत् । आनन्द आह — अयमस्य भगवन् कालः, अयं सुगत समयः, यत्तथागतस्तं बोधिसत्त्वपरिभोगमुपदर्शयेद् यं दृष्ट्वा प्रीतिं वेत्स्यामः ॥

अथ खलु भगवांस्तथारूपनिमित्तमकरोत्, यद् ब्रह्मा सहापतिः[3] सार्धमष्टषष्टिब्रह्मशतसहस्रैर्ब्रह्मलोकेऽन्तर्हितो भगवतः पुरतः प्रत्यस्थात् । स भगवतः पादौ शिरसाभिवन्द्य भगवन्तं त्रिप्रदक्षिणीकृत्यैकान्तेऽस्थात् प्राञ्जलीभूतो भगवन्तं नमस्यन् । तत्र खलु भगवान् जानन्नेव ब्रह्माणं सहापतिमामन्त्रयते स्म — गृहीतस्त्वया ब्रह्मन् स बोधिसत्त्वपरिभोगो दशमासिको यो मम पूर्वं[4] बोधिसत्त्वभूतस्य मातुः कुक्षिगतस्याभूत् । ब्रह्मा[5] आह — एवमेतद्भगवन्, एवमेतत् सुगत । भगवानाह — क्व स इदानीं ब्रह्मन् ? उपदर्शय तम् । ब्रह्मा[5] चाह — ब्रह्मलोके स भगवन् । भगवानाह — तेन हि त्वं ब्रह्मन् उपदर्शय तं दशमासिकं बोधिसत्त्वपरिभोगम्, ज्ञास्यन्ति कियत्संस्कृतमिति ॥ L 61 R 70

अथ खलु ब्रह्मा सहापतिस्तान् ब्राह्मणानेतदवोचत — तिष्ठन्तु तावद्भवन्तो[6] यावद्वयं रत्नव्यूहं बोधिसत्त्वपरिभोगमानयिष्यामः ॥

अथ खलु ब्रह्मा सहापतिर्भगवतः पादौ शिरसाभिवन्दित्वा भगवतः पुरतोऽन्तर्हितस्तत्क्षणमेव ब्रह्मलोके प्रत्यस्थात् ॥

अथ खलु ब्रह्मा सहापतिः सुब्रह्माणं देवपुत्रमेतदवोचत् — गच्छ त्वं मार्षा इतो ब्रह्मलोकमुपादाय यावत्त्रायत्रिंशद्भवनम् — शब्दमुदीरय, घोषमनुश्रावय । रत्नव्यूहं बोधिसत्त्वपरिभोगं वयं तथागतस्यान्तिकमुपनामयिष्यामः । यो युष्माकं द्रष्टुकामः स शीघ्रमागच्छत्विति ॥

---

१ R देवपुत्राः for देवाः. २ R पूर्वं. ३ R सहांपतिः everywhere. ४ R om. पूर्वं. ५ R om. ब्रह्मा. ६ R भवन्तो तावत् for तावद्भवन्तो.

अथ खलु ब्रह्मा सहापतिश्चतुरशीत्या देवकोट्या[1] नयुतशतसहस्रैः सार्धं तं रत्नव्यूहं बोधिसत्त्वपरिभोगं परिगृह्य महति ब्राह्मे विमाने त्रियोजनशतिके प्रतिष्ठाप्यानेकैर्देवकोटीनयुतशतसहस्रैः समन्ततोऽनुपरिवार्य जम्बुद्वीपमवतारयति स्म ॥

L 62 तेन खलु पुनः समयेन कामावचराणां देवानां महासंनिपातोऽभूत् भगवत्सकाशे गन्तुम्। स खलु पुन रत्नव्यूहो बोधिसत्त्वपरिभोगो दिव्यैर्वस्त्रैर्दिव्यैर्माल्यैर्दिव्यैर्गन्धैर्दिव्यैः पुष्पैर्दिव्यैर्वाद्यैर्दिव्यैश्च परिभोगैरभिसंस्कृतोऽभूत्। तावन्महेशाख्यैश्च देवैः परिवृतोऽभूद् यच्छक्रो[2] देवानामिन्द्रः
R 71 सुमेरौ[3] (समुद्रे) स्थित्वा दूरत एव मुखे तालच्छत्रकं दत्त्वा शीर्षव्यवलोकनेनानुविलोकयति स्म उन्मेषैध्यायिकया[4] वा। न च शक्नोति स्म द्रष्टुम्। तत्कस्मात्? महेशाख्या हि देवा ब्राह्मणाः। इतरास्त्रायत्रिंशा यामास्तुषिता निर्माणरतयः परनिर्मितवशवर्तिनः। कः पुनर्वादः शक्रो देवानामिन्द्रः। मोहं[5] ते वै यान्ति स्म ॥

अथ खलु भगवांस्तं दिव्यं वाद्यनिर्घोषमन्तर्धापयति स्म। तत्कस्मात्? यत्सहश्रवणादेव जाम्बुद्वीपका मनुष्या उन्मादमापत्स्यन्त इति ॥

अथ खलु चत्वारो महाराजानः शक्रं देवानामिन्द्रमुपसंक्रम्यैवमाहुः—कथं देवानामिन्द्र करिष्यामो न लभामहे रत्नव्यूहं बोधिसत्त्वपरिभोगं द्रष्टुम्। स तानवोचत्—किमहं मार्षाः करिष्यामि? अहमपि न लभे द्रष्टुम्। अपि तु खलु पुनर्मार्षा भगवत्समीपमुपनीतं[6] द्रक्ष्यामः। ते तदा[7] आहुः—तेन हि देवानामिन्द्र तथा कुरु यथास्य क्षिप्रं दर्शनं भवेत्। शक्र आह—आगमयत[8] मार्षा मुहूर्तं यावदतिक्रान्तातिक्रान्ततमा देवपुत्रा भगवन्तं प्रतिसंमोदयन्ते स्म। तदेकान्ते स्थित्वा शीर्षोन्मिञ्जितकया भगवन्तमनुविलोकयन्ति स्म ॥

अथ खलु ब्रह्मा सहापतिः सार्धं तैश्चतुरशीत्या देवकोटीनयुतशतसहस्रैस्तं रत्नव्यूहं बोधि-
L 63 सत्त्वपरिभोगं गृहीत्वा येन भगवांस्तेनोपसंक्रामयति[9] स्म। स खलु पुन रत्नव्यूहो बोधिसत्त्वपरिभोगोऽ-
R 72 भिरूपः प्रासादिको दर्शनीयश्चतुरस्रश्चतुष्षूणः[10]। उपरिष्टाच्च[11] कूटागारसमलंकृतः। एवंप्रमाणः तद्यथापि नाम षण्मासजातो दारक उच्चैस्त्वेन। तस्य खलु पुनः कूटागारस्य मध्ये पर्यङ्कः प्रज्ञप्तः तद्यथापि नाम षण्मासजातस्य दारकस्य भित्तीफलकः। स खलु पुन रत्नव्यूहो बोधिसत्त्वपरिभोग एवं वर्णसंस्थानो यस्य न कश्चित् सदेवके लोके समारके सब्रह्मके सदृशोऽस्ति आकृत्या वा वर्णेन वा। देवाः खल्वपि तं दृष्ट्वा आश्चर्यप्राप्ता अभूवन्। चक्षूंषि तेषां विभ्रमन्ति स्म। स च तथागतस्यान्तिके[12] उपनीतोऽतीव भासते तपति विरोचते स्म। तद्यथापि नाम द्विर्निर्धान्तं सुवर्णं कुशलेन कर्मकारेण सुपरिनिष्ठितमपगतकाचदोषम्, एवं (तस्मिन् समये) स कूटागारो विराजते स्म। तस्मिन्[13] खलु पुनर्बोधिसत्त्वपरिभोगे पर्यङ्कः प्रज्ञप्तो यस्य सदेवके लोके नास्ति कश्चित् सदृशो वर्णेन वा संस्थानेन वा अन्यत्र कम्बुग्रीवाया

---

१ R देवकोटीनियुत°. २ R यः शक्रो. ३ R महासुमेरौ. ४ R उन्मेषाध्या°. ५ L om. this sentence. ६ R भगवतः समीपे. ७ L om. तदा. ८ R आगच्छत for आगमयत. ९ R तथागतः for भगवान्. १० R चतुष्कोणः for चतुष्षूणः. ११ R उपरि च. १२ R अन्तिकमुपनीतो. १३ R तस्मिंश्च for तस्मिन् खलु.

बोधिसत्त्वस्य। यत् खलु महाब्रह्मणा चीवरं प्रावृतमभूत्, तत्तस्य बोधिसत्त्वपर्यङ्कस्याग्रतो न भासते स्म तद्यथापि नाम वातवृष्ट्याभिहतः कृष्णकम्बलः। स खलु[1] पुनः कूटागार उरगसारचन्दनमयो यस्यैकसुवर्णधरणी साहस्रं लोकधातुं मूल्यं क्षमते, तथाविधेनोरग-सारचन्दनेन स कूटागारः समन्तादनुपलिप्तः। तादृश एव द्वितीयः कूटागारः कृतो यस्तस्मिन् प्रथमे कूटागारेऽभ्यन्तरतः असक्तोऽबद्धस्थितः। तादृश एव तृतीयोऽपि कूटागारो यस्तस्मिन् द्वितीये कूटागारेऽभ्यन्तरेऽसक्तोऽबद्धस्थितः। स च पर्यङ्कस्तस्मिन् L 64
गन्धमये तृतीये कूटागारे व्यव[2]स्थितः संप्रतिच्छन्नः। तस्य खलु पुनरुरगसारचन्दनस्यैवंरूपो वर्णः R 73
तद्यथापि नाम अभिजातस्य नीलै[3]र्वैडूर्यस्य। तस्य खलु पुनर्गन्धकूटागारस्योपरि समन्ताद्यावन्ति कानिचिद्दिव्यातिक्रान्तानि पुष्पाणि सन्ति, [4]तानि सर्वाणि तस्मिन् कूटागारे बोधिसत्त्वस्य पूर्वकुशल-मूलविपाकेनानु[5]प्राप्तान्येव जायन्ते स्म। स खलु पुन रत्नव्यूहो बोधिसत्त्वपरिभोगो दृढसारोऽभेद्यो वज्रोपमः स्पर्शेन च काचिलिन्दिकसुखसंस्पर्शः। तस्मिन् खलु पुन रत्नव्यूहे बोधिसत्त्वपरिभोगे ये केचित् कामावचराणां देवानां भवनव्यूहास्ते सर्वे तस्मिन् संदृश्यन्ते स्म॥

यामेव च रात्रिं बोधिसत्त्वो मातुः कुक्षिमवक्रान्तस्तामेव रात्रिमध आपस्कन्धमुपादाय अष्टषष्टियोजनशतसहस्राणि महापृथिवीं भित्त्वा यावद् ब्रह्मलोकं पद्ममभ्युद्गतमभूत्। न च कश्चित्तं पद्मं पश्यति स्म अन्यत्र सारथिनरोत्तमाद्दशशतसाहस्रिकाच्च महाब्रह्मणः। य[6]च्चेह त्रिसाहस्रमहासाहस्रलोकधाता[7]वोजो वा मण्डो वा रसो वा, तत्सर्वं तस्मिन् महापद्मे मधुबिन्दुः संतिष्ठते स्म॥

तमेनं महाब्रह्मा शुभे वैडूर्यभाजने प्रक्षिप्य बोधिसत्त्वस्योपनामयति स्म। तं बोधिसत्त्वः R 74
परिगृह्य भुङ्क्ते स्म महाब्रह्मणोऽनुकम्पामुपादाय। नास्ति स कश्चित् सत्त्वः सत्त्वनिकाये यस्य स ओजोबिन्दुः परिभुक्तः सम्यक् सुखेन परि[8]णामेदन्यत्र चरमभविकाद्बोधिसत्त्वात् सर्वबोधिसत्त्व-भूमिपरिपूर्णात्। कस्य च कर्मणो विपाकेन स ओजोबिन्दुर्बोधिसत्त्वस्योपतिष्ठते स्म? दीर्घरात्रं खल्वपि बोधिसत्त्वेन पूर्वं बोधिसत्त्वचर्यां चरता ग्लानेभ्यः सत्त्वेभ्यो भैषज्यं दत्तमाशात्पराणां L 65
सत्त्वानामाशाः परिपूरिताः, शरणागताश्च न परित्यक्ताः, नित्यं चाग्रपुष्पमग्रफलमग्ररसं तथागतेभ्य-स्तथाग[9]तचैत्येभ्यस्तथागतश्रावकसंघेभ्यो मातापितृभ्यश्च दत्त्वा पश्चादात्मना परिभुक्तम्। तस्य कर्मणो विपाकेन महाब्रह्मा बोधिसत्त्वस्य तं मधुबिन्दुमुपनामयति स्म॥

तस्मिन् खलु पुनः कूटागारे यानि कानिचित् सन्त्यतिक्रान्तातिक्रान्तानि मायागुणरति-क्रीडासमवसृतस्थानानि, तानि स[10]र्वाणि तस्मिन् प्रादु[11]र्भावानि संदृश्यन्ते स्म बोधिसत्त्वस्य पूर्वकर्मविपाकेन॥

तस्मिन् खलु पुन रत्नव्यूहे बोधिसत्त्वपरिभोगे शतसहस्रव्यूहं नाम वासोयुगं प्रादुर्भूतम्। [12]न स कश्चित्सत्त्वः सत्त्वनिकाये संविद्यते यस्य तत्प्रादुर्भवेदन्यत्र चरमभविकाद् बोधिसत्त्वात्।

१ R पुनर् for खलु. २ R व्यवस्थापितः for व्यवस्थितः. ३ R om. नील°. ४ R om. तानि. ५ R °नुलिप्ता° for °नुप्राप्ता°. ६ R ये चेह for यच्चेह. ७ R °धातवो ते ओजोमण्डलो वा for °धातावोजो वा मण्डो वा. ८ R परिणमेत्. ९ R om. तथागत°. १० R सत्त्वानि for सर्वाणि. ११ R प्रादुर्भूतानि for °र्भावानि. १२ R स च for न स.

न च ते केचन उदारोदारा रूपशब्दगन्धरसस्पर्शा ये तस्मिन् कूटागारे न संदृश्यन्ते स्म।
सचेत्कूटागारपरिभोग एवं सुपरिभोग एवं सुपरिनिष्पन्नः सान्तरबहिरेवं सुपरिनिष्ठित एवं
मृदुकश्च। तद्यथापि नाम काचिलिन्दिकसुखसंस्पर्शो निदर्शनमात्रेण, न तु तस्योपमा संविद्यते।
R 75 धर्मता खल्वेषा बोधिसत्त्वस्य पूर्वकेण च प्रणिधानेन इयं चेतना ऋद्धावश्यं बोधिसत्त्वेन
महासत्त्वेन[1] मनुष्यलोक उपपत्तव्यमभिनिष्क्रम्य[2] चानुत्तरां सम्यक्संबोधिमभिसंबुध्य धर्मचक्रं प्रवर्त-
यितव्यम्। यस्यां[3] मातुः कुक्षावुपपत्तिर्भवति, तस्या दक्षिणे कुक्षावादित[4] एव रत्नव्यूहकूटागारोऽ-
भिनिर्वर्तते। पश्चाद्बोधिसत्त्वस्तुषितेभ्यश्च्युत्वा तस्मिन् कूटागारे पर्यङ्के[5] निषण्णः संभवति। न
L 66 हि चरमभविकस्य बोधिसत्त्वस्य कललार्बुदघनपेशीभावं कायः संतिष्ठते स्म। अथ तर्हि सर्वाङ्ग-
प्रत्यङ्गलक्षणसंपन्नः संनिषण्ण एव प्रादुर्भवति। स्वप्नान्तरगता च बोधिसत्त्वमाता मायादेवी
महानागकुञ्जरमवक्रान्तं संजानीते स्म॥

तस्य खलु पुनस्तथा निषण्णस्य शक्रो देवानामिन्द्रश्चत्वारश्च महाराजानोऽष्टाविंशतिश्च
महा[6]यक्षसेनापतयो गुह्यकाधिपतिश्च नाम यक्षकुलं यतो वज्रपाणेरुत्पत्तिस्ते बोधिसत्त्वं मातुः
कुक्षिगतं विदित्वा[7] सततं समितमनुबद्धा भवन्ति स्म। सन्ति खलु पुनश्चतस्रो बोधिसत्त्वपरि-
चारिका देवताः—उत्खली[8] च नाम समुत्खली[9] च नाम ध्वजवती च नाम प्रभावती च नाम।
ता अपि बोधिसत्त्वं मातुः कुक्षिगतं विदित्वा सततं समितं रक्षन्ति स्म। शक्रोऽपि देवानामिन्द्रः
सार्धं पञ्चमात्रैर्देवपुत्रशतैर्बोधिसत्त्वं मातुः कुक्षिगतं ज्ञात्वा सततं समितमनुबध्नाति स्म॥

बोधिसत्त्वस्य खलु पुनर्[10]मातुः कुक्षिगतस्य कायस्तथाविधोऽभूत्, तद्यथापि नाम पर्वतमूर्धनि
R 76 रात्रावन्धकारतमिस्रायां महानग्निस्कन्धो योजनादपि दृश्यते स्म, यावत् पञ्चभ्यो योजनेभ्यो
दृश्यते स्म। एवमेव बोधिसत्त्वस्य मातुः कुक्षिगतस्यात्मभावोऽभिनिर्वृत्तोऽभूत् प्रभास्वरोऽभिरूपः
प्रासादिको दर्शनीयः। स तस्मिन् कूटागारे पर्यङ्कनिषण्णोऽतीव शोभते स्म। वैडूर्यप्रत्युप्तमिवा-
भिजातं जातरूपम्। बोधिसत्त्वस्य[11] माता च निध्याय स्थिता पश्यति स्म कुक्षिगतं बोधिसत्त्वम्।
तद्यथापि नाम महतोऽभ्रकूटाद्विद्युतो निःसृत्य महान्तमवभासं संजनयन्ति, एवमेव बोधिसत्त्वो
मातुः कुक्षिगतः श्रिया तेजसा वर्णेन च तं प्रथमं रत्न[12]कूटागारमवभासयति स्म। अवभास्य
L 67 द्वितीयं गन्ध[13]कूटागारमवभासयति स्म। द्वितीयं गन्धकूटागारमवभास्य तृतीयं रत्नकूटागारमव-
भासयति स्म। तृतीयं रत्नकूटागारमवभास्य सर्वावन्तं मातुरात्मभावमवभासयति स्म। तमवभास्य
यत्र चासने निषण्णो भवति स्म तदवभासयति स्म। तदवभास्य सर्वं गृहमवभासयति स्म। सर्वं
गृहमवभास्य गृहस्योपरिष्टान्निःसृत्य पूर्वां दिशमवभासयति स्म। एवं दक्षिणां पश्चिमां उत्तरामध
ऊर्ध्वं समन्ताद्दशदिशः क्रोशमात्रमेकैकस्यां दिशि मातुः कुक्षिगतो बोधिसत्त्वः श्रिया तेजसा वर्णेन
चावभासयति स्म॥

---

१ R om. महासत्त्वेन. २ R °पत्तव्यमिति निष्क्रम्य for °पत्तव्यमभिनिष्क्रम्य. ३ R यस्याश्च. ४ R क्षावुदित for °क्षावादित. ५ R पर्यङ्के. ६ R om. महा°. ७ R ज्ञात्वा for विदित्वा. ८ R उत्खी for उत्खली. ९ R उत्खली for समुत्खली. १० R om. पुनर्. ११ R °सत्त्वमाता for °सत्त्वस्य माता. १२ R सर्वरत्न° for रत्न°. १३ R गन्धरत्न for गन्ध°

आगच्छन्ति स्म खलु पुनर्भिक्षवश्चत्वारो महाराजानोऽष्टाविंशच्च महायक्षसेनापतयः सार्धं पञ्चमात्रयक्षशतैः पूर्वाह्णकालसमये बोधिसत्त्वस्य दर्शनाय वन्दनाय पर्युपासनाय धर्मश्रवणाय च[1] । तदा बोधिसत्त्वस्तानागतान् विदित्वा दक्षिणं पाणिमभ्युत्क्षिप्य[2] एकाङ्गुलिकया आसनान्युपदर्शयति[3] स्म । निषीदन्ति स्म ते लोकपालादयो यथाप्रज्ञप्तेष्वासनेषु । पश्यन्ति स्म बोधिसत्त्वं R 77 मातुः कुक्षिगतं जातरूपमिव विग्रहं हस्तं चालयन्तं विचालयन्तम् उत्क्षिपन्तं[4] प्रतिष्ठापयन्तम् । ते[5] प्रीतिप्रामोद्यप्रसादप्रतिलब्धा बोधिसत्त्वं नमस्कुर्वन्ति स्म । निषण्णांश्च तान् विदित्वा बोधिसत्त्वो धर्म्यया कथया संदर्शयति स्म समादापयति स्म समुत्तेजयति स्म संप्रहर्षयति स्म । यदा च प्रक्रमितुकामा भवन्ति तदा बोधिसत्त्वस्तेषां चेतसैव[6] विचिन्तितं विज्ञाय दक्षिणं पाणिमुत्क्षिप्य संचारयति स्म । संचार्य विचारयति स्म । मातरं च न बाधते स्म । तदा तेषां चतुर्णां महाराजानामेवं भवति स्म – विसर्जिताः स्म वयं बोधिसत्त्वेनेति । ते[7] बोधिसत्त्वं बोधिसत्त्वमातरं च L 68 त्रिप्रदक्षिणीकृत्य प्रक्रामन्ति स्म । अयं हेतुरयं प्रत्ययो यद्बोधिसत्त्वो रात्र्यां प्रशान्तायां दक्षिणं पाणिं संचार्य विचारयति स्म । विचार्य पुनरपि स्मृतः संप्रजानंस्तं पाणिं प्रतिष्ठापयति स्म । पुनरपरं[8] यदा बोधिसत्त्वस्य केचिद्दर्शनायागच्छन्ति स्म स्त्रियो वा पुरुषो वा दारको वा दारिका वा, तान् बोधिसत्त्वः पूर्वतरमेव प्रतिसंमोदयते स्म, पश्चाद्बोधिसत्त्वस्य माता ॥

इति हि भिक्षवो बोधिसत्त्वो मातुः कुक्षिगतः सन् सत्त्वान्[9] प्रतिसंमोदनकुशलो भवति स्मेति । न च कश्चिद्देवो वा नागो वा यक्षो वा मनुष्यो वा अमनुष्यो वा यः शक्नोति स्म बोधिसत्त्वं पूर्वतरं प्रतिसंमोदितुम् । अथ तर्हि बोधिसत्त्व एव तावत् पूर्वतरं प्रतिसंमोदते[10] स्म, पश्चाद्बोधिसत्त्वमाता ॥

निर्गते खलु पुनः पूर्वाह्णकालसमये मध्याह्नकालसमये प्रत्युपस्थिते[11] अथ खलु शक्रो देवानामिन्द्रो निष्क्रान्तः[12] । अभिनिष्क्रान्ताश्च त्रायत्रिंशद्देवपुत्रा बोधिसत्त्वस्य दर्शनाय वन्दनाय पर्युपासनाय । धर्मश्रवणाय चागच्छन्ति स्म । तांश्च बोधिसत्त्वो दूरत[13] एवागच्छतो दृष्ट्वा दक्षिणं R 78 सुवर्णवर्णं बाहुं प्रसार्य शक्रं देवानामिन्द्रं देवांश्च त्रायत्रिंशान् प्रतिसंमोदते स्म । एकाङ्गुलिकया चासनान्युपदर्शयति स्म । न च शक्नोति स्म भिक्षवः शक्रो देवानामिन्द्रो बोधिसत्त्वस्याज्ञां प्रतिरोद्धुम् । निषीदति स्म शक्रो देवानामिन्द्रस्तदन्ये च देवपुत्रा यथाप्रज्ञप्तेष्वासनेषु । तान्[14] बोधिसत्त्वो निषण्णान् विदित्वा धर्म्यया कथया संदर्शयति स्म समादापयति स्म समुत्तेजयति स्म संप्रहर्षयति स्म । येन च बोधिसत्त्वः पाणिं संचारयति स्म, तन्मुखा बोधिसत्त्वमाता L 69 भवति स्म । ततस्तेषामेवं भवति स्म – अस्माभिः सार्धं बोधिसत्त्वः संमोदते[15] स्म । एकैकश्चैवं संजानीते स्म – मयैव सार्धं[16] बोधिसत्त्वः संलपति, मामेव प्रतिसंमोदते स्म इति ॥

---

१ R om. च. २ R अत्युत्क्षिप्य for अभ्यु°. ३ R आसनम् for आसनानि. ४ R om. उत्क्षिपन्तं. ५ R तेऽपि for ते. ६ चेदमेव चित्तं for चेतसैव विचिन्तितं. ७ R om. ते. ८ R पुनरपरे. ९ R सत्त्वप्रतिसंमोदनः for सत्त्वान् प्रति.° १० R °संमोदयते for °संमोदते. ११ R प्रत्युत्थिते. १२ R °तिक्रान्तोऽतिक्रान्ताश्च for निष्क्रान्तः अभि°. १३ L दूर for दूरत. १४ R om. तान्. १५ R संमोदयते. १६ R समो for सार्धं.

तस्मिन् खलु पुनः कूटागारे शक्रस्य देवानामिन्द्रस्य त्रायत्रिंशानां देवानां च प्रतिभासः संदृश्यते स्म । न खलु पुनरन्यत्रैवं परिशुद्धो बोधिसत्त्वपरिभोगो भवति यथा मातुः कुक्षिगतस्य बोधिसत्त्वस्य । यदा च भिक्षवः शक्रो देवानामिन्द्रस्तदन्ये च देवपुत्राः प्रक्रमितुकामा भवन्ति स्म, तदा बोधिसत्त्वस्तेषां चेतसैव चेतःपरिवितर्कमाज्ञाय दक्षिणं पाणिमुत्क्षिप्य संचारयन्ति स्म । संचार्य विचार्य पुनरपि स्मृतः संप्रजानन् प्रतिष्ठापयति स्म । मातरं च न बाधते स्म ।
R 79 तदा शक्रस्य देवानामिन्द्रस्यान्येषां च त्रायत्रिंशानां देवानामेवं भवति स्म— विसर्जिता वयं बोधिसत्त्वेनेति । ते बोधिसत्त्वं बोधिसत्त्वमातरं च त्रिप्रदक्षिणीकृत्य प्रक्रामन्ति स्म ॥

निर्गते च खलु पुनर्भिक्षवो मध्याह्नकालसमये सायाह्नकालसमये प्रत्युपस्थिते अथ खलु ब्रह्मा सहापतिरनेकैर्ब्रह्मकायिकैर्देवपुत्रशतसहस्रैः[1] परिवृतः पुरस्कृतस्तं दिव्यमोजोबिन्दुमादाय येन बोधिसत्त्वस्तेनोपसंक्रामति स्म बोधिसत्त्वं द्रष्टुं वन्दितुं पर्युपासितुं धर्मं च श्रोतुम् । समन्वाहरति स्म भिक्षवः बोधिसत्त्वो ब्रह्माणं सहापतिमागच्छन्तं सपरिवारम्[2] । पुनरेव च बोधिसत्त्वो दक्षिणं सुवर्णवर्णपाणिमुत्क्षिप्य ब्रह्माणं सहापतिं ब्रह्मकायिकांश्च देवपुत्रान् प्रतिसंमोदते
L 70 स्म । एकाङ्गुलिकया चासनान्युपदर्शयति स्म । न च शक्तिरस्ति भिक्षवो ब्रह्मणः सहापतेर्बोधिसत्त्वस्याज्ञां प्रतिरोद्धुम् । निषीदति स्म भिक्षवो ब्रह्मा सहापतिस्तदन्ये च ब्रह्मकायिका देवपुत्रा यथाप्रज्ञप्तेष्वासनेषु । तान् बोधिसत्त्वो निषण्णान् विदित्वा धर्म्यया कथया संदर्शयति स्म समादापयति स्म समुत्तेजयति स्म संप्रहर्षयति स्म । येन च बोधिसत्त्वः पाणिं संचारयति स्म, तन्मुखैव[3] मायादेवी भवति स्म । ततस्तेषामेकैकस्यैवं भवति स्म— मया सार्धं बोधिसत्त्वः संलपति, मामेव प्रतिसंमोदते स्म इति । यदा च ब्रह्मा सहापतिस्तदन्ये च ब्रह्मकायिका देवपुत्रा गन्तुकामा भवन्ति स्म, तदा बोधिसत्त्वस्तेषां चेतसैव चेतःपरिवितर्कमाज्ञाय दक्षिणं सुवर्णवर्णं बाहुमुत्क्षिप्य संचारयति स्म । संचार्य विचारयति स्म । संचार्य विचार्य अवसादताकारेण
R 80 पाणिं संचारयति स्म । मातरं च न बाधते स्म । ततो ब्रह्मणः सहापतेस्तदन्येषां च ब्रह्मकायिकानां देवपुत्राणामेवं भवति स्म— विसर्जिता वयं बोधिसत्त्वेनेति । ते बोधिसत्त्वं बोधिसत्त्वमातरं च त्रिप्रदक्षिणीकृत्य पुनरेव प्रक्रामन्ति स्म । बोधिसत्त्वश्च स्मृतः संप्रजानन् पाणिं प्रतिष्ठापयति स्म॥

आगच्छन्ति स्म खलु पुनर्भिक्षवः[4] पूर्वदक्षिणपश्चिमोत्तराभ्यो दिग्भ्योऽधस्तादुपरिष्टात् सन्तादृशभ्यो दिग्भ्यो बहूनि बोधिसत्त्वशतसहस्राणि बोधिसत्त्वस्य दर्शनाय वन्दनाय पर्युपासनाय धर्मश्रवणाय च धर्मसंगीतिसंगायनाय च । तेषामागतागतानां[5] बोधिसत्त्वः कायात् प्रभामुत्सृज्य प्रभाव्यूहानि[6] सिंहासनान्यभिनिर्मिमीते स्म । अभिनिर्माय तान् बोधिसत्त्वांस्तेष्वासनेषु निषीदयति स्म । निषण्णांश्चैनान् विदित्वा परिपृच्छति स्म परिप्रश्नयति स्म यदुतास्यैव
L 71 बोधिसत्त्वस्य महायानस्य विस्तर[7]विभागतामुपादाय । न च तान् कश्चिदन्यः पश्यति स्म अन्यत्र सभागेभ्यो देवपुत्रेभ्यः । अयं भिक्षवो हेतुरयं प्रत्ययो येन बोधिसत्त्वः प्रशान्तायां रात्र्यां कायात् प्रभामुत्सृजति स्म ॥

---

१ R °देवपुत्रैः for °पुत्रशत°. २ After °वारम्, R adds [illegible]. ३ R तन्मुखा च for °खैव. ४ R om. भिक्षवः. ५ R समागतानां for आगतागतानां. ६ R महाव्यूहानि. ७ R विस्तरम् । तमुपादाय.

न खलु पुनर्भिक्षवो मायादेवी बोधिसत्त्वे[1]कुक्षिगते गुरुकायतां संजानीते स्म अन्यत्र लघुतामेव मृदुतामेव सौख्यतामेव। न चोदरगतानि दुःखानि प्रत्यनुभवति स्म। न च रागपरिदाहेन वा द्वेषपरिदाहेन वा मोहपरिदाहेन वा परिदह्यते स्म। न च कामवितर्कं वा व्यापादवितर्कं वा विहिंसावितर्कं वा वितर्कयति स्म। न च शीतं न चोष्णं वा जिघत्सां वा पिपासां वा R 81
तमो वा रजो वा क्लेशं वा संजानीते स्म पश्यति वा। न चास्या अमनापा रूपशब्दगन्धरसस्पर्शा वा आभासमागच्छन्ति स्म। न च पापकान् स्वप्नान् पश्यति स्म। न चास्याः स्त्रीमाया न शाठ्यं नेर्ष्या[2] न स्त्रीक्लेशा बाधन्ते स्म। पञ्चशिक्षापदसमादत्ता खलु पुनः शीलवती दशकुशलकर्मपथे प्रतिष्ठिता तस्मिन् समये बोधिसत्त्वमाता भवति स्म। न च बोधिसत्त्वमातुः क्वचित् पुरुषे रागचित्तमुत्पद्यते स्म, नापि कस्यचित्पुरुषस्य बोधिसत्त्वस्य[3] मातुरन्तिके। ये च केचित्कपिलाह्वये महा[4]पुरवरे अन्येषु वा जनपदेषु देवनागयक्षगन्धर्वासुरगरुडभूताविष्टाः स्त्रीपुरुषदारकदारिका वा, ते सर्वे बोधिसत्त्वमातुः सहदर्शनादेव स्वस्थाः स्मृतिप्रतिलब्धा भवन्ति स्म। ते चामनुष्याः क्षिप्रमेव प्रक्रामन्ति[5] स्म। ये च केचिन्नानारोगस्पृष्टाः सत्त्वा भवन्ति स्म, वातपित्तश्लेष्मसंनिपातजै रोगैः पीड्यन्ते स्म, चक्षुरोगेण वा श्रोत्र[6]रोगेण वा घ्राणरोगेण वा L 72
जिह्वारोगेण वा ओष्ठरोगेण वा दन्तरोगेण वा कण्ठ[7]रोगेण वा गल[8]गण्डरोगेण वा उरगण्डकुष्ठकिलासशोषोन्मादापस्मारज्वरगलगण्डपिटकविसर्पविचर्चिकाद्यै रोगैः संपीड्यन्ते स्म, तेषां बोधिसत्त्वमाता दक्षिणपाणिं मूर्ध्नि प्रतिष्ठापयति स्म। ते सहप्रतिष्ठापिते पाणौ विगतव्याधयो भूत्वा स्वकस्वकानि गृहाणि गच्छन्ति स्म। अन्ततो मायादेवी तृणगुल्मकमपि धरणितलादभ्युत्क्षिप्य ग्लानेभ्यः सत्त्वेभ्योऽनुप्रयच्छति स्म। ते सहप्रतिलम्भादरोगनिर्विकारा भवन्ति स्म। यदा च मायादेवी स्वं दक्षिणं पार्श्वं प्रत्यवेक्षते स्म, तदा पश्यति स्म बोधिसत्त्वं कुक्षिगतम्, R 82
तद्यथापि नाम सुपरिशुद्ध आदर्शमण्डले मुखमण्डलं दृश्यते। दृष्ट्वा च पुनस्तुष्टा उदग्रा आत्तमना प्रमुदिता प्रीतिसौमनस्यजाता भवति स्म॥

बोधिसत्त्वस्य खलु पुनर्भिक्षवो मातुः कुक्षिगतस्याधिष्ठितं सततं समितं रात्रिंदिवं दिव्यानि तूर्याणि अभि( निर्माय ) प्रनदन्ति[9] स्म। दिव्यानि च पुष्पाणि अभिप्रवर्षन्ति स्म। कालेन देवा वर्षन्ति[10] स्म। कालेन वायवो वान्ति स्म। कालेन ऋतवो नक्षत्राणि च परिवर्तन्ते स्म। क्षेमं च राज्यं सुभिक्षं च सुमनाकुलमनुभवति स्म। सर्वे च कपिलाह्वये महापुरवरे[11] शाक्या अन्ये च सत्त्वाः खादन्ति स्म, पिबन्ति स्म, ( रमन्ते स्म, ) क्रीडन्ति स्म, प्रविचारयन्ति स्म, दानानि च ददन्ति स्म, पुण्यानि च कुर्वन्ति स्म, कौमोद्यामिव चातुर्मास्यामेकान्तरे[12] क्रीडासुखविहारैर्विहरन्ति स्म। राजापि शुद्धोदनः संप्राप्त[13]ब्रह्मचर्योपरत[14]राष्ट्रकार्योऽपि सुपरिशुद्धस्तपोवनगत इव धर्ममेवानुवर्तते स्म॥

---

१ R °सत्त्वे कुक्षि°. २ R नेर्षा for नेर्ष्या. ३ R °सत्त्वमातुरन्तिके. ४ R om. महा°. ५ R प्रक्रमन्ति. ६ R श्रोतोरोगेण. ७ R कण्डुरोगेण. ८ R उरोगण्ड° for गलगण्ड°. ९ R प्रवाद्यन्ति for प्रनदन्ति. १० R प्रवर्षन्ति. ११ R महापुरे. १२ R एकान्ते for एकान्तरे. १३ R समागत° for संप्राप्त°. १४ R अपगतकार्यो नार्योपि (?) for °र्योपरतराष्ट्रकार्यो.

L 73 एवंरूपेण भिक्षव ऋद्धिप्रातिहार्येण समन्वागतो बोधिसत्त्वो मातुः कुक्षिगतोऽस्थात् । तत्र
खलु भगवानायुष्मन्तमानन्दमामन्त्रयते स्म – द्रक्ष्यसि त्वमानन्द रत्नव्यूहं बोधिसत्त्वपरिभोगं यत्र
बोधिसत्त्वो मातुः कुक्षिगतो व्याहार्षीत् । आह – पश्येयं भगवन् पश्येयं सुगत । दर्शयति स्म
तथागत आयुष्मत आनन्दस्य शक्रस्य देवानामिन्द्रस्य चतुर्णां च लोकपालानां तदन्येषां च
R 83 देवमनुष्याणाम् । दृष्ट्वा च[1] ते तुष्टा अभूवन् उदग्रा आत्तमनसः प्रमुदिताः प्रीतिसौमनस्यजाताः ।
स च ब्रह्मा सहापतिः पुनरेव ब्रह्मलोके समारोप्य प्रतिष्ठापयति स्म चैत्यार्थम् ॥

तत्र खलु भगवान् पुनरपि भिक्षूनामन्त्रयते स्म – इति हि भिक्षवो दशमासकुक्षिगतेन बोधिसत्त्वेन षट्त्रिंशन्[2]नयुतानि देवमनुष्याणां त्रिषु यानेषु परिपाचितान्यभूवन् । यत्रे[3]दमुच्यते यत्–

बोधिस[4]त्त्व अग्रसत्त्व मातुकुक्षिसंस्थितः
प्रकम्पिता च षड्विकार मेदिनी सकानना ।
सुवर्णवर्ण आभ मुक्त सर्वापाय शोधिता
प्रहर्षिताश्च देवसंघ धर्मगं[5]ञ्जु मेष्यते ॥ २३ ॥

सुसंस्थितो महाविमानु नैकरत्नचित्रितो
यत्र वीरु आरुहित्व तिष्ठते विनायकः ।
[6]गन्धोत्तमेन चन्दनेन पूरितो विरोचते
यस्यैककर्षु त्रिसहस्रमूल्यरत्नपूरितो ॥ २४ ॥

महासहस्रलोकधातु हेष्विं[7] भिन्दियित्वना
उदागतो गुणाकरस्य पद्मओजबिन्दुको ।
L 74 सो सप्तरात्र पुण्यतेज ब्रह्मलोर्कि[8] उद्गतो
[9]गृहीत्व ब्रह्म ओजं[10] बिन्दु बोधिसत्वे[11] नामयी ॥ २५ ॥

न अस्ति सर्वसत्त्वकायि भुक्तु यो जरेय तं
अन्यत्र भूरि बोधि[12]सत्त्व ब्रह्मकल्पसंनिभे ।
R 84 अनेककल्प पुण्यतेज ओजबिन्दु संस्थितो
[13]भुंजित्व सत्त्व कायचित्त ज्ञानशुद्ध गच्छिषु ॥ २६ ॥

शक्र ब्रह्म लोकपाल पूजनाय नायकं
त्रीणि काल आगमित्व बोधिसत्त्वमन्तिकम् ।
वन्दयित्व पूजयित्व धर्म श्रृणुते वरं
प्रदक्षिणं करित्व सर्वं गच्छि[14]षू यथागता ॥ २७ ॥

---

१ R om. च ते तुष्टा अभूवन्. २ R °त्रिंशदयुतानि for °त्रिंशन्नयुतानि. ३ R तत्रेदमुच्यते. ४ R यद्बोधि°. ५ R धर्मराजु for °गञ्जु. ६ R गन्धोत्तमचन्दनेन. ७ R गृहेष्वभिनयित्वना for हेष्वि भिन्दियित्वना. ८ R °लोकमुद्गतो. ९ R यतो गृहीत्व for गृहीत्व. १० R ओजो for ओजबिन्दु. ११ R °सत्त्वोपनामयी. १२ R सुचरित्व for बोधिसत्त्व. १३ R यं भुञ्जि for भुंजित्व. १४ R गच्छन्ति.

बोधिसत्त्व धर्मकाम एन्ति लोकधातुषु
प्रभावियूह आसनेषु ते निषण्ण दृश्यिषु ।
परस्परं च श्रुत्व धर्म यानश्रेष्ठमुत्तमं
प्रयान्ति सर्वि हृष्टचित्त वर्णमाल भाषतो ॥ २८ ॥

ये च इष्ट्रि[1]दारकासु दुःखिता तदा अभूत्[2]
भूतस्पृष्ट क्षिप्तचित्त नग्न पांशुम्रक्षिता ।
ते च सर्व दृष्ट्व माय भोन्ति[3] लब्धचेतना
स्मृतीमतीगतीउपेत गेहि[4] गेहि गच्छिषु ॥ २९ ॥

वाततो व पित्ततो व श्लेष्मसंनिपातकैः
ये च चक्षुरोग श्रोत्ररोग कायचित्तपीडिता ।
नैकरूप नैकजाति व्याधिभिश्च ये हता R 85
स्थापिते स्म माय मूर्ध्नि पाणि भोन्ति[3] निर्जरा ॥ ३० ॥

अथापि वा तृणस्य तूलि भूमितो गृहीत्वना L 75
ददाति माय आतुराण सर्वि[5] भोन्ति निर्जरा ।
सौख्यप्राप्ति निर्विकार गेहि गेहि गच्छिषु
भैषज्यभूति वैद्यराजि कुक्षिसंप्रतिष्ठिते ॥ ३१ ॥

यस्मि कालि मायदेवि स्वातनुं[6] निरीक्षते
अद्दशाति बोधिसत्त्व कुक्षिये प्रतिष्ठितम् ।
यथैव चन्द्र अन्तरीक्ष तारकै परीवृतं
तथैव नाथु बोधिसत्त्वलक्षणैरलंकृतम् ॥ ३२ ॥

नो च तस्य राग दोष नैव मोह बाधते
कामछन्दु नैव तस्य ईर्षि नैव हिंसिता ।
तुष्टचित्त हृष्टचित्त प्रीति सौमनस्थिता
क्षुधापिपास शीत[7] उष्ण नैव तस्य बाधते ॥ ३३ ॥

अघट्टिताश्च नित्यकाल दिव्यतूर्य वादिषु
प्रवर्षयन्ति[8] दिव्यपुष्प गन्धश्रेष्ठ[9] शोभना[10] ।
देव पश्यि[11] मानुषाश्च मानुषा अमानुषां
नो विहेठि नो विहिंसि तत्र ते परस्परम् ॥ ३४ ॥

१ R इष्टि° for इस्त्रि°. २ R ऽभवन् for अभूत्. ३ R भान्ति. ४ R गेह गेह. ५ R सर्व भान्ति. ६ R स्वतनुं. ७ R शीतोष्ण. ८ R प्रवर्षन्ति. ९ R गन्धाग्र° for गन्धश्रेष्ठ. १० R शोभनं. ११ R पक्षि for पश्यि.

R 86 रमन्ति सत्त्व क्रीडयन्ति अन्नपानुदेन्ति च
आनन्दशब्द घोषयन्ति हृष्टतुष्टमानसाः ।
क्षमा रजोअना[1]कुला च कालि देव वर्षते
तृणाश्च पुष्प ओषधीय तस्मि कालि रोहिषु ॥ ३५ ॥

राजगेहि सप्तरात्र रत्नवर्ष वर्षितो
यतो दरिद्रसत्त्व गृ[2]ह्य दान देन्ति भुञ्जते ।
L 76 नास्ति सत्त्व यो दरिद्र यो च आसि दुःखितो
मेरुमूर्ध्नि न[3]न्दनेव एव सत्त्व नन्दिषु ॥ ३६ ॥

सो च राजु शाकियान पोषधी उपोषितो
राज्यकार्यु नो करोति धर्ममेव गोचरी ।
तपोवनं च सो प्रविष्ट मायदेवी पृ[4]च्छते
कीदृशेन्ति कायि सौख्य अग्रसत्त्व धार[5]ति ॥ ३७ ॥

इति श्रीललितविस्तरे गर्भावक्रान्तिपरिवर्तो नाम षष्ठमोऽध्यायः ॥

---

१ R °रजोऽनाकुलं च. २ R गृह्णातिदन्ति for गृह्य दान देन्ति. ३ R नन्दनवन इव. ४ R पृच्छति for पृच्छते. ५ R धरणीति for धारति.

# जन्मपरिवर्तः सप्तमः ।

इति हि भिक्षवो दशमासेषु निगतेषु बोधिसत्त्वस्य जन्मकालसमये प्रत्युपस्थिते राज्ञः शुद्धोदनस्य गृहोद्याने द्वात्रिंशत्पूर्वनिमित्तानि प्रादुरभूवन् । कतमानि द्वात्रिंशत् ? सर्वपुष्पाणि सुङ्गीभूतानि न पुष्पन्ति स्म । पुष्करिणीषु चोत्पलपद्मकुमुदपुण्डरीकाण्यभ्युद्गतानि कुड्[1]मलीभूतानि [R 87] न पुष्पन्ति स्म । तदा च पुष्पफलवृक्षा धरणीतलादभ्युद्गम्य क्षारकजाता न फलन्ति स्म । अष्टौ च रत्नवृक्षाः प्रादुरभूवन् । विंशति च रत्ननिधानशतसहस्राण्युत्प्लुत्य व्यवस्थितानि दृश्यन्ते स्म । अन्तःपुरे च रत्नाङ्कुराः[2] प्रादुरभूवन् । सुगन्धितैलपरिवासिताश्च[3] गन्धोदकशीतोष्णाः[4] प्रस्रवन्ति स्म । हिमवत्पर्वतपार्श्वाच्च सिंहपोतका आगत्यागत्याभिनदन्तः कपिलाह्वयपुरवरं प्रदक्षिणीकृत्य द्वारमूलेष्ववतिष्ठन्ते स्म, न कंचित्सत्त्वं विहेठयन्ति स्म । पञ्चशतानि पाण्डेराणां[5] हस्तिशावकानामागत्य राज्ञः शुद्धोदनस्याग्रकरैश्चरणाव[6]भिलिखन्ति स्म । मेखलीबद्धकाश्च[7] देवदारका [L 77] राज्ञः शुद्धोदनस्यान्तःपुरे उत्सङ्गेनोत्सङ्गमनुपरिवर्तमानाः संदृश्यन्ते स्म । गगनतलगतार्धकाया नागकन्या नानापूजोपकरणपरिगृहीता अध्यालम्बमानाः संदृश्यन्ते स्म । दश च नागकन्यासहस्राणि मयूराङ्गहस्तकपरिगृहीता गगततलेऽवस्थिताः संदृश्यन्ते स्म । दश च पूर्णकुम्भसहस्राणि कपिलवस्तु महानगरं प्रदक्षिणीकुर्वन्ति[8] संदृश्यन्ते स्म । दश च देवकन्यासहस्राणि गन्धोदकभृङ्गारपरिगृहीता मूर्ध्नि धारयन्त्योऽवस्थिताः संदृश्यन्ते स्म । दश च देवकन्यासहस्राणि छत्रध्वजपताकापरिगृहीता अवस्थिताः संदृश्यन्ते स्म । बहूनि चाप्सरःशतसहस्राणि शङ्खभेरीमृदङ्गपणवैः घण्टावसक्तैः प्रतीक्षमाणान्यवस्थितानि[9] संदृश्यन्ते स्म । [R 88] सर्वे वायवश्चावस्थिता न वान्ति स्म । सर्वनदी[10] च प्रस्रवणानि च न वहन्ति स्म । चन्द्रसूर्यविमानानि नक्षत्रज्योतिर्गणाश्च न वहन्ति स्म । पुष्यं[11] च नक्षत्रयुक्तमभूत् । रत्नजाल[12]परिस्फुटं च राज्ञः शुद्धोदनस्य गृहं संस्थितमभूत् । वैश्वानरश्च न ज्वलति स्म । कूटागारप्रासादतोरणद्वारक[13]तलेषु च मणिरत्नान्यभिप्रलम्बमानानि च संदृश्यन्ते स्म । दूष्यगञ्जाश्च विविरत्नगञ्जाश्च प्रावृताः संदृश्यन्ते स्म । काकोलूकगृध्रवृकशृगालशब्दाश्चान्तर्हिता अभूवन् । सुजातजातशब्दाश्च श्रूयन्ते स्म । सर्वजनपदकर्मान्ताश्च समुच्छिन्ना अभूवन् । उत्कूलनिकूलाश्च पृथिवीप्रदेशाः समाः समवस्थिताः । सर्ववीथीचत्वरशृङ्गाटकरथ्यान्तरा[14]पणमुखानि च पाणितलमृष्टानीव[15] पुष्पाभिकीर्णानि विरोचन्ते स्म । सर्वाश्च गुर्विण्यः सम्यक्सुखेन प्रसूयन्ते स्म । सर्वशालवनदेवताश्च पत्रेष्वर्धकायानभिनिर्माय नम्यमानाः[16] स्थिताः संदृश्यन्ते स्म । इमानि द्वात्रिंशत्पूर्वनिमित्तानि प्रादुरभूवन् ॥

---

१ L कुट्मली° for कुड्मली°. २ L रत्नाङ्कुला for °ङ्कुराः. ३ R °तैलपूरिताः for तैलपरिवासिताश्च. ४ R गन्धोदकाः. ५ R पाण्डुराणां. ६ R चरणान् for चरणौ. ७ R मेखला° for मेखली°. ८ R °प्रदक्षिणीकुर्वन्तः for °कुर्वन्ति. ९ R प्रतीक्षमाणा व्यव° for प्रतीक्षमाणान्यव°. १० R सनद्यश्च. ११ R पुष्यनक्षत्र° for नक्षत्र°. १२ R रत्नजात° for° जाल°. १३ R° तोरणजालक° for °तोरणद्वारक°. १४ R °रथ्यातला° for रथ्यान्तरा°. १५ °तलपुष्टानीव for °मृष्टानीव. १६ R नमस्यन्तः for नम्यमानाः.

अथ खलु मायादेवी बोधिसत्त्वस्य जन्मकालसमयं ज्ञात्वा बोधिसत्त्वस्यैव तेजोनुभावेन
L 78 रात्र्यां प्रथमे यामे राजानं शुद्धोदनमुपसंक्रम्य गाथाभिरभ्यभाषत[1]—

देव शृणु हि मह्यं भाषतो यं मतं मे
अचिरचिरचिरेणा जात उद्यानबुद्धिः।
यदि च तव न रोषो नैव दोषो न मोहः
R 89 क्षिप्रमहु व्रजेया क्रीडउद्यानभूमिम् ॥ १ ॥

त्वमिह तपसि खिन्नो धर्मचित्तप्रयुक्तो
अहु[2] च चिरप्रविष्टा शुद्धसत्त्वं धरेन्ती ।
द्रुमवर प्रतिबुद्धाः फुल्लिता शालवृक्षाः
युक्त भविय देवा गन्तुमुद्यानभूमिम् ॥ २ ॥

ऋतुप्रवर वसन्तो योषितां मण्डनीयो
भ्रमरवरविघुष्टाः कोकिलबर्हिगीताः ।
शुचि[3]रुचिरविचित्रा भ्राम्यते पुष्परेणुः
साधु ददहि आज्ञां गच्छमो मा विलम्बः[4] ॥ ३ ॥

वचनमिमु श्रुणित्वा देविये पार्थिवेन्द्रः
तुष्टो मुदितचित्तः पारिषद्यानवोचत् ।
हयगजरथं पङ्क्त्या वाहना योजयध्वं
प्रवरगुणसमृद्धां लुम्बिनीं मण्डयध्वम् ॥ ४ ॥

नीलगिरिनिकाशां मेघवर्णानुबद्धां
विंशति च सहस्रान् योजयध्वं गजानाम् ।
L 79 मणिकनकविचित्रां हेमजालोपगूढां
घण्टरुचिरपार्श्वान् षड्विषाणां गजेन्द्रान् ॥ ५ ॥

हिमरजतनिकाशां मुञ्जकेशां सुकेशां
विंशति च सहस्रान् योजयध्वं हयानाम् ।
R 90 कनकरचितपार्श्वा किङ्किणीजाललम्बा[5]
पवनजवितवेगा[6] वाहना पार्थिवस्य ॥ ६ ॥

नरगण रणशौण्डान् शूर संग्रामकामान्
असिधनुशरशक्तिपाशखड्गाग्रहस्तान् ।
विंशति च सहस्रान् योजयध्वं सुशीघ्रं
माय सपरिवारां रक्षथा अप्रमत्ता ॥ ७ ॥

---

१ R °रभ्यभाषत. २ R. अहं for अहु. ३ R सुचिर चिर° for शुचिरुचि°. ४ R विलम्बं for विलम्बः.
५ R °जाललम्बान्. ६ R °वेगान् वाहनान्.

मणिकनकनिषिक्तां लुम्बिनीं कारयध्वं
विविधवसनरत्नैः सर्ववृक्षां[1] प्रवेथा ।
विविधकुसुमचित्रं नन्दनं वा सुराणां
वदर्थं[2] च मम शीघ्रं सर्वमेतं विधाय ॥ ८ ॥

वचनमिमु निशम्या पारिषद्यैः क्षणेन
वाहन कृत सज्जा लुम्बिनी मण्डिता सा ।

पारिषद्य आह—

जय जय हि नरेन्द्रा आयु पालेहि दीर्घं
सर्वं कृतु यथोक्तं कारु देव प्रतीक्ष ॥ ९ ॥

सो च नरवरेन्द्रो हृष्टचित्तो भवित्वा
गृह[3]वरमनुविष्टो इष्टिकानेवमाह ।
यस्य अहु मनापो या च मे प्रीतिकामा
सा मि कुरुत आज्ञां मण्डयित्वात्मभावम् ॥ १० ॥ R 91

वरसुरभिसुगन्धां भावरङ्गां विचित्रां L 80
वसन मृदुमनोज्ञां प्रावृणोथा उदग्राः ।
उरसि विगलितानां मुक्तहारा भवेथा
आभरणविभूषां दर्शयेथाद्य सर्वाः । ॥ ११ ॥

तुणपणवमृदङ्गां वीणवेणूसुकुण्डां
तूर्यशतसहस्रान् योजयध्वं मनोज्ञां[4] ।
भूय कुरुत हर्षं देवकन्यान यूयं
श्रुत्व मधुरघोषं देवतापि स्पृहेयुः ॥ १२ ॥

एकरथवरेस्मिं तिष्ठतां मायदेवी
मा च पुरुष इस्त्री अन्य तत्रारुहेया ।
नारि विविधैर्[5]वर्मा तं रथं वाहयन्तां
मां[6] च प्रतिकूलं मा मनापं श्रुणेष्या ॥ १३ ॥

हयगजरथपत्तीं सैन्यश्रीमद्विचित्रां
द्वारि स्थित नृपस्या श्रूयते उच्चघोषाः ।
क्षुभितजलनिधिर्वा श्रूयते एव शब्दो
* * * ॥ १४ ॥

---

१ R सर्ववृक्षा. २ R वद तथ for वदथ च. ३ R गृहरततु प्रविष्टो for गृहवरमनुविष्टो. ४ R मनोज्ञं.
५ R विविधधर्मा ६ R कांचित्प्रति for मां च प्रति.

माय यद[1] गृहातो निर्गता द्वारमूलं
R 92 घण्ट शतसहस्रा ताडितो[2] मङ्गलार्थम् ॥ १५ ॥
सो च रथ विचित्रो मण्डितः पार्थिवेन
अपि च मरुसहस्रैर्दिव्यसिंहासनेभिः ।
चतुरि रतनवृक्षा पत्रपुष्पोपपेता
अभिनदितमनोज्ञां हंसक्रौञ्चान् मयूरान् ॥ १६ ॥
L 81 छत्रध्वजपताकाश्चोच्छ्रिता[3] वैजयन्त्यः
किङ्किणिवरजालैश्छादितं[4] दिव्यवस्त्रैः ।
मरु[5]वधु गगनेस्मिं तं रथं प्रेक्षयन्ते
दिव्यमधुरघोषं श्रावयन्त्यः स्तुवन्ति ॥ १७ ॥
उपविशति यदा सा माय सिंहासनाग्रे
प्रचलित त्रिसहस्रा मेदिनी षड्विकारम् ।
पुष्पं[6] मरु क्षिपिंसू अम्बरां भ्रामयिंसू[7]
अद्य जगति श्रेष्ठो जायते लुम्बिनीये ॥ १८ ॥
चतुरि जगतिपालास्तं रथं वाहयन्ते
त्रिदशपतिरपीन्द्रो मार्गशुद्धिं करोति ।
ब्रह्म पुरतु गच्छी दुर्जनां वारयन्तो
अमरशतसहस्राः प्राञ्जलीका नमन्ते ॥ १९ ॥
नृपति मुदितचित्तो वीक्षते तां वियूहां
R 93 तस्य भवति एवं व्यक्त यं देवदेवो ।
यस्य चतुरि पाला ब्रह्म सेन्द्राश्च देवाः
कुरुत विपुलपूजां व्यक्त यं शुद्धभावी ॥ २० ॥
नास्ति त्रिर्भवि[8] सत्त्वो यः सहेत्पूजमेतां
देव अथ च नागाः शक्र ब्रह्मा च पालाः ।
मूर्ध तद फलेया जीवितं चास्य नश्येत्
अयु पुन अतिदेवः सर्वपूजां सहाति ॥ २१ ॥

L 82 अथ खलु भिक्षवो मायादेवी चतुरशीत्या हयरथसहस्रैः सर्वालंकारविभूषितैः परिवृता चतुरशीत्या गजरथसहस्रैः सर्वालंकारविभूषितैः चतुरशीत्या च पत्तिसहस्रैः शूरैर्वीरैर्वराङ्गरूपिभिः सुसंनद्धदृढवर्मकवचितैरनुपरिगृहीता षष्ट्या च शाक्यकन्यासहस्रैः पुरस्कृता चत्वारिंशता च सहस्रै

---

१ R यद् गृह्मातो for यद गृहातो. २ R नादिता for ताडिता. ३ R °श्चोत्थिता for °श्चोच्छ्रिता. ४ R °र्नादिते for °श्छादितं. ५ R सुरवधु for मरुवधु. ६ R पुष्पवर for पुष्प मरु. ७ R भ्रामयीषु. ८ R त्रिभुवि.

राज्ञः शुद्धोदनस्य ज्ञातिकुलप्रसूतैः शाक्यैः वृद्धदहरमध्यमैः संरक्षिता, षष्ट्या च सहस्रै राज्ञः शुद्धोदनस्यान्तःपुरेण गीतवाद्यसम्यक्तूर्यताडावचरसंगीतिसंप्रवादितेन परिवृता, चतुरशीत्या च देवकन्यासहस्रैः परि[1]वृता, चतुरशीत्या च नागकन्यासहस्रैः चतुरशीत्या च गन्धर्वकन्यासहस्रैः चतुरशीत्या च किन्नरकन्यासहस्रैः चतुरशीत्या चासुरकन्यासहस्रैः नानाव्यूहालंकारालंकृताभिः नानागीतवाद्यवर्णभाषिणीभिरनुगम्यमाना निर्याति स्म । सर्वं च लुम्बिनीवनं गन्धोदकसिक्तं R 94 दिव्यपुष्पाभिकीर्णीकृतमभूत् । सर्ववृक्षाश्च तस्मिन् वनवरे अ[2]कालपत्रपुष्पफलानि ददन्ति स्म । देवैश्च तथा तद्वनं समलंकृतमभूत् तद्यथापि नाम मिश्रकावनं देवानां समलंकृतम् ॥

अथ खलु मायादेवी लुम्बिनीवनमनुप्रविश्य तस्माद्रथवरादवतीर्य नरमरु[3]कन्यापरिवृता वृक्षेण वृक्षं पर्यटन्ती वनाद्वनं चंक्रम्यमाणा द्रुमाद् द्रुमं निरीक्षमाणा अनुपूर्वेण येनासौ प्लक्षो महाद्रुमरत्नवरप्रवरः सुविभक्तशाखः स[4]मपत्रमञ्जरीधरो दिव्यमानुष्यनानापुष्पसंपुष्पितो वरप्रवर-सुरभिगन्धिनाना[5]गन्धिनानारङ्गवस्त्राभिप्रलम्बितो विविधमणिविचित्रप्रभोज्ज्वलितः सर्वरत्नमूलदण्ड-शाखापत्रसमलंकृतः सुविभक्तविस्तीर्णशाखः करतलनिभे भूमिभागे सुविभक्तविस्तीर्णनील-तृणमयूरग्रीवासंनिभे काचिलिन्दिकसुखसंस्पर्शे धरणीतले संस्थितः पूर्वजिनज[6]नेत्र्याभिनिवासितः देवसंगीत्यनुगीतः शुभविमलविशुद्धः शुद्धावासदेवशतसहस्रैः प्रशान्तचित्तैरभिनं[7]तजटामकुटाव- L 83 लम्बितावनतमूर्धभिरभिनन्द्यमानस्तं प्लक्षवृक्षमुपजगाम ॥

अथ स प्लक्ष[8]वृक्षो बोधिसत्त्वस्य तेजोनुभावेनावनम्य प्रणमति स्म । अथ मायादेवी गगनतलगतेव विद्युत् दृष्टिं दक्षिणं बाहुं प्रसार्य प्लक्षशाखां गृहीत्वा सलीलं गगनतलं प्रेक्षमाणा विजृम्भमाना स्थिताभूत् । अथ तस्मिन् समये षष्ट्यप्सरःशतसहस्राणि कामावचरदेवेभ्य उपसंक्रम्य R 95 मायादेव्या उपस्थाने परिचर्यां कुर्वन्ति स्म ॥

एवंरूपेण खलु पुन ऋद्धिप्रातिहार्येण समन्वागतो बोधिसत्त्वो मातुः कुक्षिगतोऽस्थात् । स परिपूर्णानां दशानां मासानामत्ययेन मातुर्दक्षिणपार्श्वान्निष्क्रमति स्म स्मृतः संप्रजानन्ननुपलिप्तो गर्भमलैर्यथा नान्यः कश्चिदुच्यतेऽन्येषां गर्भमल इति ॥

तस्मिन् खलु पुनर्भिक्षवः समये शक्रो देवानामिन्द्रो ब्रह्मा च सहापतिः पुरतः स्थितावभूताम्, यौ बोधिसत्त्वं परमगौरवजातौ दिव्यकौ[9]शिकवस्त्रान्तरितं सर्वाङ्गप्रत्यङ्गैः स्मृतौ संप्रज्ञौ प्रतिगृह्णाते स्म ॥

यस्मिंश्च कूटागारे बोधिसत्त्वो मातुः कुक्षिगतोऽस्थात्, तं ब्रह्मा सहापतिर्ब्रह्मकायिकाश्च देव-पुत्रा अभ्युत्क्षिप्य ब्रह्मलोकं चैत्यार्थं पूजार्थं चोपनामयामासुः । अपरिगृहीतः खलु पुनर्बोधिसत्त्वः केनचिन्मनुष्यभूतेन, अथ तर्हि बोधिसत्त्वं देवताः प्रथमतरं प्रतिगृह्णन्ति स्म ॥

अथ बोधिसत्त्वो जातमात्रः पृथिव्यामवतरति स्म । समनन्तरावतीर्णस्य च बोधिसत्त्वस्य महासत्त्वस्य महापृथिवीं भित्त्वा महापद्मं प्रादुरभूत् । नन्दोपनन्दौ च नागराजानौ गगनतलेऽर्ध-

१ R om. परिवृता. २ R अकाले for अकाल°. ३ R °मरुःकन्या° for °मरुकन्या°. ४ R सुपत्र° for समपत्र°. ५ R om. नानागन्धि. ६ R जनित्रीप्रतिनिवासिनः. ७ R अभिनतः मुकुटा° for अभिनत-जटामकुटा°. ८ R प्लक्षो वृक्षो. ९ R° कौशिक° for काशिक°.

L 84 कायौ स्थित्वा शीतोष्णे द्वे वारिधारेऽभिनिर्मित्वा बोधिसत्त्वं स्नापयतः स्म । शक्रब्रह्मलोकपालाः
R 96 पूर्वंगमाश्चान्ये च बहवो देवपुत्राः शतसहस्रा ये बोधिसत्त्वं जातमात्रं नानागन्धोदकमुक्तकुसुमैः
स्नापयन्त्यभ्यवकिरन्ति[1] स्म । अन्तरिक्षे च द्वे चामरे रत्नच्छत्रं च प्रादुर्भूतम्[2] । स तस्मिन्
महापद्मे स्थित्वा चतुर्दिशमवलोकयति स्म । ( चतुर्दिशमवलोक्य ) सिंहावलोकितं महापुरुषाव-
लोकितं व्यवलोकयति स्म ॥

तस्मिन् खलु पुनः समये बोधिसत्त्वः[3] पूर्वकुशलमूलविपाकजेनाप्रतिहतेन[4]
दिव्यचक्षुप्रादुर्भूतेन[5] दिव्येन चक्षुषा सर्वावन्तं त्रिसाहस्रं महासाहस्रं लोकधातुं
सनगरनिर्गमजनपदराष्ट्रराजधानीं[6] सदेवमानुषं पश्यति स्म । सर्वसत्त्वानां च चित्तचरितं च
प्रजानाति स्म । ज्ञात्वा च व्यवलोकयति स्म – अस्ति त्वसौ कश्चित्सत्त्वो यो मया सदृशः
शीलेन वा[7] समाधिना वा प्रज्ञया वा कुशलमूलचर्यया वा । यदा च बोधिसत्त्वः त्रिसाहस्र-
महासाहस्रलोकधातौ न कंचित्सत्त्वमात्मतुल्यं पश्यति स्म, अथ तस्मिन्समये बोधिसत्त्वः सिंह इव
विगतभयभैरवोऽसंत्रस्तः अस्तम्भी सुचिन्तितं स्मृत्वा चिन्तयित्वा सर्वसत्त्वानां चित्तचरितानि
ज्ञात्वा अपरिगृहीतो[8] बोधिसत्त्वः पूर्वां दिशमभिमुखः सप्त पदानि प्रक्रान्तः—पूर्वंगमो भविष्यामि सर्वेषां
कुशलमूलानां धर्माणाम् । तस्य प्रक्रमत उपर्यन्तरीक्षेऽपरिगृहीतं दिव्यश्वेतविपुलंछत्रं[9][10]
चामरशुभे गच्छन्तमनुगच्छन्ति स्म – यत्र यत्र च बोधिसत्त्वः पदमुत्क्षिपति स्म, तत्र तत्र पद्मानि
R 97 प्रादुर्भवन्ति स्म । दक्षिणां[11] दिशमभिमुखः सप्त पदानि प्रक्रान्तः – दक्षिणीयो भविष्यामि
L 85 देवमनुष्याणाम् । पश्चिमां दिशमभिमुखः सप्त पदानि प्रक्रान्तः । सप्तमे स्थित्वा सिंह[12]
इवाह्लादनात्मिकां वाचं भाषते स्म – अहं लोके ज्येष्ठोऽहं लोके श्रेष्ठः । इयं मे पश्चिमा
जातिः । करिष्यामि जातिजरामरणदुःखस्यान्तम् । उत्तरां दिशमभिमुखः सप्त पदानि
प्रक्रान्तः—अनुत्तरो भविष्यामि सर्वसत्त्वानाम् । अधस्ताद्दिशमभिमुखः[13] सप्त पदानि प्रक्रान्तः-
निहनिष्यामि मारं च मारसेनां च । सर्वनैरयिकाणां च निरयाग्निप्रतिघाताय सह धर्ममेघवृष्टिं
वर्षिष्यामि, येन ते सुखसमर्पिता भविष्यन्ति । उपरिष्टाद्दिशमभिमुखः[14] सप्त पदानि प्रक्रान्तः,
उर्ध्वं चावलोकयति स्म – उल्लोकनीयो भविष्यामि सर्वसत्त्वानाम् । समनन्तरभाषिता चेयं
बोधिसत्त्वेन[15] वाक् । अथ तस्मिन् समये अयं त्रिसाहस्रमहासाहस्रलोकधातुः स्वरेणाभिविज्ञप्तो-
ऽभूत् । इयं बोधिसत्त्वस्य[16] कर्मविपाकजा अभिज्ञाधर्मता ॥

यदा बोधिसत्त्वश्चरमभविक उपजायते, यदा चानुत्तरां सम्यक्संबोधिमभिसंबुध्यते, तदा अस्येमान्येवंरूपाणि ऋद्धिप्रातिहार्याणि भवन्ति—तस्मिन् खलु पुनर्भिक्षवः समये संहृषितरोम[17]-कूपजाताः सर्वसत्त्वा अभूवन् । महतश्च पृथिवीचालस्य लोके प्रादुर्भावोऽभूत् भैरवस्य रोमहर्षणस्य । अघट्टितानि च दिव्यमानुष्यकानि तूर्याणि संप्रवादितानि । सर्वर्तुकालिकाश्च

१ R स्नापयन्तोऽभ्यव°. २ R प्रादुरभूत्. ३ R बोधिसत्त्वस्य. ४ R पूर्वजन्मप्रतिहतेन. ५ R दिव्यचक्षुः प्रादुरभूत् येन for दिव्यचक्षुप्रादुर्भूतेन. ६ R° निगमग्रामजन° for निगमजन°. ७ R च for वा. ८ R सुपरि° for अपरि°. ९ R दिव्यश्वेतं for °श्वेत°. १० R विपुलं for °विपुल°. ११ R एवं दक्षिणां for दक्षिणां. १२ R सिंहवत् for सिह इव. १३ R अधोदिशम्. १४ R om. उपरि...स्म. १५ R transp. बोधिसत्त्वेन and वाक्. १६ R °सत्त्वकर्मविपाको. १७ R संहर्षित for संहृषित°.

वृक्षास्तस्मिन् समये[1] त्रिसाहस्रमहासाहस्रलोकधातौ संकुसुमिताः फलिताश्च। विशुद्धाच्च गगनतलान्मेघशब्दः श्रूयते स्म। अपगतमेघाच्च गगनाच्छन्नैः[2] सूक्ष्मसूक्ष्मो देवः R 98 प्रवर्षति[3] स्म। नानावर्ष[4]दिव्यकुसुमवस्त्राभरणगन्धचूर्णव्यामिश्राः परमसुखसंस्पर्शाश्च सौम्याः सुगन्धवाताः प्रवायन्ति[5] स्म। व्यपगततमोरजोधूमनीहाराश्च सर्वदिशः सुप्रसन्ना विराजन्ते स्म। उपरिष्टाच्चान्तरिक्षाददृश्या गम्भीरा महाब्रह्मघोषाः संश्रूयन्ते स्म। सर्वचन्द्रसूर्यशक्रब्रह्मलोकपालप्रभाश्चाभिभूता अभूवन्। परमसुखसंस्पर्शया च सर्वसत्त्वकायचित्तसुख- L 86 संजनन्या लोकोत्तरया अनेकशतसहस्रवर्णप्रभया सर्वत्रिसाहस्रमहा[6]साहस्रलोकधातुः परिस्फुटोऽभूत्। समन्तरजातस्य खलु पुनर्बोधिसत्त्वस्यैकान्तसुखसमर्पिताः स[7]र्वसत्त्वा बभूवुः। सर्वरागद्वेषमोहदर्पारतिविषादभय[8]लोभेर्ष्यामात्सर्यविगताः सर्वाकुशलक्रियाप्रतिविरता व्याधितानां सत्त्वानां व्याधय उपशान्ताः। क्षुत्पिपासितानां सत्त्वानां क्षुत्पिपासा प्रस्रब्धा[9]भूत्। मद्यमदमत्तानां च सत्त्वानां मदा[10]पगमः संवृत्तः। उन्मत्तैश्च स्मृतिः प्रतिलब्धा। चक्षुर्विकलैश्च सत्त्वैश्चक्षुः प्रतिलब्धम्, श्रोत्र[11]विकलैश्च सत्त्वैः श्रोत्रम्। अङ्गप्रत्यङ्गविकलेन्द्रियाश्चाविकलेन्द्रियाः संवृत्ताः। दरिद्रैश्च धनानि प्रतिलब्धानि। बन्धनबद्धाश्च बन्धनेभ्यो विमुक्ताः। आवीचिमादिं कृत्वा सर्वनैरयिकाणां सत्त्वानां सर्वकारणादु दुःखं तस्मिन्समये प्रस्र[12]ब्धम्। तिर्यग्योनिकानामन्योन्यभक्षणादि दुःखम्, यमलोकिकानां सत्त्वानां क्षुत्पिपासादिदुःखं व्युपशान्तमभूत्॥

यदा च बोधिसत्त्वो जातमात्रः सप्त पदानि प्रक्रान्तोऽभूत्, असंख्ये[13]याकल्पकोटिनयुतशतसहस्रैः सुचरितचरणैर्महावीर्यमहास्थामधर्मताप्रतिलम्भेन तस्मिन् समये दशदिग्लोकधातुस्थिता बुद्धा भगवन्तस्तं पृथ्वीप्रदेशं वज्रमयमधितिष्ठन्ति स्म। येन महापृथिवी R 99 तस्मिन् प्रदेशे नाव[14]तीर्यत, तावन्महाबलवेगसमन्वागतो हि भिक्षवो जातमात्रो बोधिसत्त्वः सप्त पदानि प्रक्रान्तोऽभूत्। सर्वलोकान्तरिकाश्च[15] तस्मिन् समये महतावभासेन स्फुटा[16] अभूवन्। महांश्च तस्मिन् समये गीतशब्दोऽभून्नृ[17]त्यशब्दः। अप्रमेयाश्च तस्मिन् समये पुष्पचूर्णगन्धमाल्यरत्नाभरणवस्त्रमेघा अभिप्रवर्षन्ति स्म। परमसुखसमर्पिताश्च सर्वसत्त्वा अभूवन्। संक्षेपादचिन्त्या सा क्रियाभूत्, यदा बोधिसत्त्वो लोके प्रादुरभूत् सर्वलोकाभ्युद्गतः॥ L 87

अथ खल्वायुष्मानानन्दः उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा दक्षिणं[18] जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमेतदवोचत्—सर्वसत्त्वानां भगवंस्तथागत आश्चर्यभूतोऽभूत्, बोधिसत्त्वभूत[19] एवाद्भुत[20]धर्मसमन्वागतश्च। कः पुनर्वादः एवं ह्यनुत्तरां सम्यक्संबोधिमभिसंबुद्धः। एषोऽहं भगवंश्चतुष्पञ्चकृत्वोऽपि दशकृत्वोऽपि[21] यावत्पञ्चाशत्कृत्वोऽपि शतकृत्वोऽपि यावदनेकशतसहस्रशोऽप्यहं भगवन् बुद्धं भगवन्तं शरणं गच्छामि॥

---

१ R om. समये. २ L °गगनाच्छन्नैः for °च्छनैः. ३ R प्रवर्षयति for प्रवर्षति. ४ R om. °वर्ष°. ५ R प्रवान्ति for प्रवायन्ति. ६ R om. °महासाहस्र°. ७ R सर्वे for सर्व°. ८ L °भया° for भय°. ९ R प्रस्रस्ता for प्रस्रब्धा. १० L मदापगतः. ११ R श्रोतोविकलैश्च. १२ R प्रस्रस्तम्. १३ R असंख्ययाख्यकल्प°. १४ R om. नं. १५ R °न्तरिकाणि for °न्तरिकाश्च. १६ R स्फुटानि for स्फुटा. १७ R om. °भून्नृत्यशब्दो. १८ R दक्षिणं. १९ R om. °भूत. २० R एवाभूत् for एवाद्भुतधर्मसमन्वागतश्च. २१ R om. दशकृत्वोऽपि.

एवमुक्ते भगवानायुष्मन्तमानन्दमेतदवोचत् – भविष्यन्ति खलु पुनरानन्द अनागतेऽध्वनि[1] केचिद्भिक्षवोऽभावितकाया अभावितचित्ता अभावितशीला अभावितप्रज्ञा बाला अपण्डिता आभिमानिका[2] उद्धता उन्नता असंवृता[3] विक्षिप्तचित्ताः काङ्क्षापरीत्ता विचिकित्साबहुला अश्रद्धाः[4] श्रमणमलाः[5] श्रमणप्रतिरूपकाः। ते न श्रद्धास्यन्ति इमामेवंरूपां बोधिसत्त्वस्य गर्भावक्रान्तिपरि-
R 100 शुद्धिम्। तेऽन्योन्यमेकान्ते संनिपात्यैवं वक्ष्यन्ति – पश्यत भो यूयमेतदपूज्यमानं[6] बोधिसत्त्वस्य किल मातुः कुक्षिगतस्योच्चारप्रस्रावमण्डोपरिमिश्रस्य[7] ईदृशी विभूतिरासीत्। स च किल अभिनिष्क्रामन् मातुर्दक्षिणायाः कुक्षेरनुपलिप्तो गर्भमलेनाभूदिति। कथमेतद्योज्यते[8] ? न पुनस्ते मोहपुरुषा एवं ज्ञास्यन्ति – न सुकृतकर्मणां सत्त्वानामुच्चारप्रस्रावमण्डे[9] कायः संभवतीति। भद्रिका खल्वपि
L 88 तथारूपाणां सत्त्वानां[10] गर्भावक्रान्तिर्भवति। गर्भावस्थितश्च सत्त्वानुकम्पया हि बोधिसत्त्वो मनुष्यलोके उपपद्यते, न देवभूत एव धर्मचक्रं प्रवर्तयति। तत्कस्मात्? मा खल्वानन्द सत्त्वाः कौसीद्यमापत्स्यन्ते। देवभूतः[11] स भगवान् तथागतोऽर्हन् सम्यक्संबुद्धः, वयं तु मनुष्यमात्राः। न वयं समर्थास्तत्स्थानं परिपूरयितुमिति कौसीद्यमापद्येरन्। न खलु पुनस्तेषां मोहपुरुषाणां धर्मस्तैन्यकानामेवं भविष्यति – अचिन्त्यो हि स सत्त्वः, नासावस्माभिः प्रामाणिकः कर्तव्य इति। अपि तु खल्वानन्द बुद्धऋद्धिप्रातिहार्यमपि ते तस्मिन् काले नावकल्पयिष्यन्ति, किमङ्ग पुनर्बोधिसत्त्वभूतस्य तथागतस्य बोधिसत्त्वप्रातिहार्याणि। पश्य आनन्द कियन्तं ते मोहपुरुषा बह्वपुण्याभिसंस्कारमभिसंस्करिष्यन्ति, ये बुद्धधर्मान् प्रतिक्षेप्स्यन्ति लाभसत्कारश्लोकाभिभूता उच्चारलग्ना लाभसत्काराभिभूता इतरजातीयाः॥

R 101 आनन्द आह – मा[12] मा भगवन् एवंरूपा भगवन् अनागतेऽध्वनि भिक्षवो भविष्यन्ति य इमामेवं भद्रिकां सूत्रान्तां प्रतिक्षेप्स्यन्ति प्रतिपक्षं पक्षन्ति[13] च॥

भगवानाह – एवंरूपाश्च ते आनन्द सूत्रान्तां प्रपिक्षेप्स्यन्ति, प्रतिवक्ष्यन्ति चानेकप्रकारान्[14] चान्यान् पापकानभिसंस्कारानभिसंस्करिष्यन्ति। अनर्थिकाश्च ते श्रामण्येन भविष्यन्ति॥

आनन्द आह – का पुनर्भगवन् तेषां[15] तथारूपाणामसत्पुरुषाणां गतिर्भविष्यति? कोऽभिसंपरायः?

भगवानाह – या[16] गतिर्बुद्धबोधिमन्तर्धायाप्यतीतानागतप्रत्युत्पन्नांश्च बुद्धान् भगवतोऽत्याख्याय तां ते गतिं गमिष्यन्ति॥

L 89 अथ खल्वायुष्मानानन्दः संहर्षितरोमकूपजातो[17] नमो बुद्धाय इत्युक्त्वा भगवन्तमेतदवोचत् – मूर्छा मे भगवन् कायस्याभूदिमं तेषामसत्पुरुषाणां समुदाचारं श्रुत्वा॥

---

१ R °ध्वन्यनेके for °ध्वनि केचित्. २ R अधिमानिका. ३ R असद्धृता. ४ R अशुद्धाः. ५ R श्रवणचलाः for श्रमणमलाः. ६ R अयोग्यतमं for अपूज्यमानं. ७ R °मण्डलपरि° for मण्डोपरि°. ८ R °द्युज्यते for °द्योज्यते. ९ R °मण्डले for °मण्डे. १० R om. सत्त्वानां. ११ R om. देव ...... र्हन्. १२ R om. मा मा. १३ R वक्ष्यन्ति for पक्षन्ति. १४ R चान्योन्यप्रकारान्. १५ R om. तेषां. १६ R यां गतिं. १७ R संहर्षितो for संहर्षित°.

भगवानाह – न तेषामानन्द समाचारो भविष्यति। विषमसमुदाचाराः खलु पुनस्ते सत्त्वा
भविष्यन्ति[1]। ते तेन विषमेन समुदाचारेणावीचौ महानरके प्रपतिष्यन्ति। तत्कस्य हेतोः? ये
केचिदानन्द भिक्षवो वा भिक्षुण्यो[2] वा उपासको वा उपासिका वा इमानेवंरूपान् सूत्रान्तान् श्रुत्वा
नाधिमोक्ष्यन्ति न श्रद्धास्यन्ति न प्रतिवेत्स्यन्ति, ते च्युताः समाना अवीचौ[3] महानरके प्रपतिष्यन्ति।
मा आनन्द तथागताप्रामाणिकं अकार्षुः। तत्कस्माद्धेतोः? अप्रमेयो ह्यानन्द तथागतो गम्भीरो R 102
विपुलो दुरवगाहः। येषां केषांचिदानन्द[4] इमानेवंरूपान् सूत्रान्ताञ्छ्रुत्वोपपत्स्यते प्रीतिप्रामोद्यम्,
प्रसादलाभास्तैः सत्त्वैः सुलब्धाः। अमोघं[5] च तेषां जीवितम्, अमोघं च तेषां मानुष्यम्[6], सुचरितचरणाश्च
ते, आदत्तं च तैः सारम्, मुक्ताश्च ते त्रिभ्योऽपायेभ्यः, भविष्यन्ति च ते पुत्रास्तथागतस्य, परिप्राप्तं
च तैः सर्वकार्यम्, अमोघश्च तेषां श्रद्धाप्रतिलम्भः, सुविभक्तं[7] च तै राष्ट्रपिण्डम्, प्रसन्नाश्च तेऽग्रसत्त्वैः,
संछिन्नास्तैर्मारपाशाः, निस्तीर्णश्च तैः संसाराटवीकान्तारः, समुद्धृतश्च तैः शोकशल्यः, अनुप्राप्तं च
तैः प्रामोद्यवस्तु, सुगृहीतानि च तैः शरणगमनानि, दक्षिणीयाश्च ते पूजार्हाः, दुर्लभप्रादुर्भावाश्च
ते लोके, दक्षिणीयाश्च[8] ते धारयितव्याः। तत्कस्य हेतोः? तथा हि – ते सर्वलोके इममेवं सर्वलोक-
विप्रत्यनीकं तथागतधर्मं श्रद्दधन्ति। न ते आनन्द सत्त्वा अवरकेण कुशलमूलेन समन्वागता L 90
भवन्ति। ते[9] चानन्द सत्त्वा ममैकजातिप्रतिबद्धानि मित्राणि भविष्यन्ति। तत्कस्माद्धेतोः?
कश्चिदानन्द श्रवणादेव प्रियो भवति मनापश्च न[10] तु दर्शनेन। कश्चिदानन्द दर्शनेनापि प्रियो
भवति मनापश्च न तु खलु पुनः श्रवणेन। कश्चिदानन्द दर्शनेनापि[11] श्रवणेनापि प्रियो
भवति मनापश्च। तेषां केषांचिदानन्द अहं दर्शनेन वा श्रवणेन वा प्रियो मनापो भवेयं निष्ठां त्वं R 103
तत्र गच्छेथाः[12] – न तानि ममैकजातिप्रतिबद्धानि मित्राणि। दृष्टास्ते तथागतेन, मोचयितव्यास्ते
तथागतेन, ते समगुणप्रत्यंशाः, ते तथागतगुणप्रत्यंशाः, ते तथागतेन कर्तव्या उपासकाः, ते
तथागतं शरणं गताः, उपात्तास्ते तथागतेन। ममान्तिकात् खल्वप्यानन्द पूर्वं बोधिसत्त्वचर्यामेव
तावच्चरतो ये केचिद्भयार्दिताः सत्त्वा आगत्य अभयं प्रतियाचन्ते स्म, तेभ्योऽहं सत्त्वेभ्योऽभयं
दत्तवान्, किमङ्ग पुनरेतर्ह्यनुत्तरां सम्यक्संबोधिमभिसंबुद्धः। श्रद्धायामानन्द योगः करणीयः।
इदं तथागतो विज्ञापयति। यदानन्द तथागतेन युष्माकं करणीयं कृतम्, तत्तथागतेन शोधितो
मानशल्यः। श्रवणेनाप्यानन्द मित्रस्य ननु योजनशतान्तरमपि[13] गच्छन्ति, गत्वा च सुखिता
भवन्ति अदृष्टपूर्वं मित्रं दृष्ट्वा। कः पुनर्वादो ये[14] मां निश्रित्य कुशलमूलान्यवरोपयन्ति[15]। ज्ञास्यन्त्यानन्द
तथागता अर्हन्तः सम्यक्संबुद्धाः – पूर्वं मित्राण्येते सत्त्वास्तथागतानाम्, अस्माकमप्येते मित्राणि
भवन्तीति। तत्कस्मात् खलु पुनरानन्द मित्रं मित्रस्य प्रियं च मनापं च भवति? तस्यापि
(तदपि) प्रियमेव भवति, मित्रस्य यत्प्रियं मित्रम्[16], तदपि प्रियमेव भवति मनापं च।
तस्मात्तर्ह्यानन्द आरोचयामि च प्रतिवेदयामि च। श्रद्धामात्रकमुत्पादयथ। अनुपरिन्दिष्यामो L 91

---

१ R om. भविष्यन्ति. २ R भिक्षुक्यो. ३ R आवीचौ. ४ R केचित् for केषांचित्. ५ R om. अमोघं च तेषां जीवितम्. ६ R मानुष्यजीवितं for मानुष्यम्. ७ R सुविभक्तश्च. ८ R om. दक्षिणीयाश्च ते. ९ R न चानन्द. १० R om. न तु दर्शनेन. ११ R om. अपि. १२ R गच्छेत् for गच्छेथाः. १३ R यानशता° for योजनशता°. १४ R य इमानि निसृष्ट° for ये मां निश्रित्य. १५ R अवलोकयन्ति for अवरोप°. १६ R om. मित्रम्, तदपि.

वयमनागतानां तथागतानामर्हतां सम्यक्संबुद्धानामन्तिके, तेऽस्माकमपि मित्राणीति विदित्वा
R 104 यथाभिप्रायं परिपूरयिष्यन्ति । तद्यथापि नाम[१] आनन्द कस्यचिदेव पुरुषस्यैकपुत्रको भवेत् सुवयाः[२] प्रदक्षिणग्राही । स च पुरुषो बहुमित्रो भवेत् । स तस्मिन् पितरि कालगते न हि विहन्येत पितृमित्रसुपरिगृहीतः । एवमेव आनन्द ये केचिन्मम श्रद्धास्यन्ति तानहमुपाददामि । मित्राणीव मम तानि । ( ते ) मम शरणं गताः । बहुमित्रश्च तथागतः । तानि च तथागतस्य मित्राणि भूतवादीनि न मृषावादीनि । अनुपरिन्दाम्यहं[३] भूतवादीनाम् । यानि तथागतस्य मित्राण्यनागतास्तथागता[४] अर्हन्तः सम्यक्संबुद्धाः । श्रद्धायामानन्द योगः करणीयः । अत्राहं[५] युष्मान् विज्ञापयामीति ॥

इति हि जाते बोधिसत्त्वे गगनतलगतान्यप्सरःकोटिनियुतशतसहस्राणि दिव्यैः पुष्पधूपगन्धमाल्यविलेपनवस्त्राभरणैर्मायादेवीमभ्यवकिरन्ति स्म । तत्रेदमुच्यते—

शुभविमलविशुद्धहेमप्रभा चन्द्रसूर्यप्रभा
षष्टि दशसहस्र देवाप्सरा मञ्जुघोषस्वराः ।
तस्मि क्षणि उपेत्य तां लुम्बिनीं मायदेव्यब्रुवन्
मा खु जनि विषादु तुष्टा[६] भवोपस्थायिकास्[७]ते वयम् ॥ २२ ॥

भणाहि किं करणीयु[९] किं कुर्महे केन[१०] कार्यं च ते
वयं तव सुसमर्थोपस्थायिका प्रेमभावस्थिताः ।
अपि च भव उदग्र हर्षान्विता मा च खेदं जनेहि
जरामरणविघाति वैद्योत्तमं अद्य देवी जनेषी लघुम् ॥ २३ ॥

L 92 यथ[११] द्रुम परिफुल्ल संपुष्पिता शालवृक्षा इमे
R 105 यथ च मरुसहस्र पार्श्वे स्थिता भ्रामयन्तो भुजान् ।
यथ च चलि ससागरा मेदिनी षड्विकारा इयं
दिवि दिवि च विघुष्ट लोकोत्तरं त्वं जनेषी सुतम् ॥ २४ ॥

यथ च प्रभ विशुद्ध विभ्राजते स्वर्णवर्ण शुभा
तूर्यशत मनोज्ञा चाघट्टिता घुष्यन्तेऽम्बरे ।
यथ च शतसहस्र शुद्धा शुभ्रा[१२] वीतरागाः सुरा
नमिषु मुदितचित्ता अद्यो जने सर्वलोके हितम् ॥ २५ ॥

शक्रमपि च ब्रह्मपालापि चान्या च या देवता
तुष्टमुदितचित्ता पार्श्वे स्थिता नामयन्तो भुजाम् ।
सो च पुरुषसिंह शुद्धव्रतो ( भित्त्व ) कुक्षिनिर्धावितो
कनकगिरिनिकाश शुद्धव्रतो निष्क्रमी नायकः ॥ २६ ॥

---

१ R om. नाम. २ R सुवचाः. ३ R अनुपरिवदाम्यहम्. ४ R om. तथागता. ५ R तत्राहं. ६ R तुष्टास्तव for तुष्टा भव. ७ R प्रस्थापिता for उपस्थायिकाः. ८ R om. ते. ९ R करणीयं. १० R किन्नु for केन. ११ R अथ. १२ R शुद्धाकारा सुरा for शुभ्रा वीतरागाः सुरा.

शक्रमपि च ब्रह्म तौ पाणिभिः संप्रतीच्छा मुनिं
  क्षेत्र शतसहस्र संकम्पिता आभ मुक्ता शुभा ।
अपि च त्रिषु अपायि सत्त्वा सुखी नास्ति दुःखं पुन
  अमरशतसहस्र पुष्पां क्षिपी भ्रामयन्त्यम्बरान् ॥ २७ ॥
वीर्यबलउपेत वज्रात्मिका मेदिनी संस्थिता( ऽभूत्तदा )
  पद्मु रुचिरचित्रु अभ्युद्गतो यत्र (चक्राङ्कचित्रेभिः) पद्भ्यां स्थितो(ऽपि) नायकः ।
सप्त पद क्रमित्व ब्रह्मस्वरो मुञ्चि घोषोत्तमं R 106
  जरमरणविघाति वैद्योत्तमो भेष्यि सत्त्वोत्तमः ॥ २८ ॥
गगनतल स्थिहित्वे[1] ब्रह्मोत्तमो शक्रदेवोत्तमः L 93
  शुचिरुचिरप्रसन्नगन्धोदकैर्विस्नपी नायकम् ।
अपि च उरगराजा शीतोष्ण द्वे वारिधारे शुभे ( व्यंमुञ्चतान्तरीक्षे[2] स्थिताः )
  अमर शतसहस्र गन्धोदकैर्विस्नपी नायकम्[3] ॥ २९ ॥
लोकपालाश्च संभ्रान्त[4] संधारयन्ती करैः शोभनैः ।
त्रिसहस्रा इयं भूमिः कम्पते सचराचरा ॥ ३० ॥
प्रभा च रुचिरा मुक्ता अपायाश्च विशोधिताः ।
क्लेशदुःखाश्च ते शान्ता जाते लोकविनायके ॥ ३१ ॥
क्षिपन्ति मरुतः पुष्पं[5] जातेऽस्मिन्नरनायके ।
क्रम सप्त पदां वीरः क्रमते बलवीर्यवान् ॥ ३२ ॥
पादौ निक्षिपते यत्र भूमौ पद्मवराः शुभाः ।
अभ्युद्गच्छंस्ततो मह्यां सर्वरत्नविभूषिताः ॥ ३३ ॥
यदा सप्त पदां गत्वा ब्रह्मस्वरमुदाहरि ।
जरामरणविघाति भिषग्वर इवोद्गतः ॥ ३४ ॥
  व्यवलोकयित्वा च विशारदो[6] दिशः
    ततो गिरां मुञ्चति अर्थयुक्ताम् ।
  ज्येष्ठोऽहं सर्वलोकस्य श्रेष्ठो ( लोके विनायकः ) R 107
    इयं च जातिर्मम पश्चिमा ( इति ) ॥ ३५ ॥
  हास्यं च मुक्तं नरनायकेन
    सलोकपालैर्मरुभिश्च सेन्द्रैः ।
  प्रसन्नचित्तैर्वरगन्धवारिभिः
    संस्कारितो लोकहितार्थकारी ॥ ३६ ॥

---

१ R हि स्थित्वा for स्थिहित्व. २ R ऽप्यमुञ्चत for व्यमुञ्चत. ३ R विनायकम् for नायकम्.
४ R भ्रान्ता for संभ्रान्त. ५ R पुष्पा for पुष्पं. ६ L विशारदो.

अपि चोरगेन्द्रैः सहितैः समग्रैः
गन्धोग्रधाराविसरैः स्नपिंसु ।
अन्येऽपि देवा नयुता (स्थिता)ऽन्तरीक्षे
स्नपिंसु गन्धाग्रजिने स्वयंभुम् ॥ ३७ ॥

L 94 श्वेतं च विपुलं छत्रं चामरांश्च शुभाम्बरान् ।
अन्तरीक्षे गता देवाः स्नापयन्ति नरर्षभम् ॥ ३८ ॥

[1]पैश्वकुलिकशतानि प्रसूयन्ते स्म ।

पुरुष[2] त्वरितु गत्व शुद्धोदनमब्रवीत् हर्षितो
वृद्धि विपुल जातु[3] देवा सुतो भूषितो लक्षणैः ।
महकुलरतनस्य ( वृद्धिभूता ) व्यक्तो असौ चक्रवर्तीश्वरः
न च भवि प्रतिशत्रु जम्बुध्वजे एकछत्रो भवेत्[4] ॥ ३९ ॥

द्वितियु पुरुषु गत्व ( राज्ञि ) शुद्धोदने[5] श्लेषयित्वा क्रमे
वृद्धि विपुल देव जाता नृपे शाकियानां कुले ।
पञ्चविंशतिसहस्र जाताः सुताः शाकियानां गृहे
R 108 सर्वि बलउपेत नग्नाः[6] समा दुष्प्रधर्षाः परैः ॥ ४० ॥

अपरु पुरुष आह देवा श्रुणा नन्दशब्दं ममा
छन्दकप्रमुखानि चेटीसुता जात अष्टौ शता ।
अपि च दशसहस्र जाता हयाः कण्ठकस्य सखा
तुरगवरप्रधान हेमप्रभा मंञ्जुकेशा[7] वराः ॥ ४१ ॥

विंशति च सहस्र पर्यन्तकाः कोट्टराजास्तथा
नृपति क्रमतलेभि[8] चान्वाक्रमी साधु देवा जया ।
आज्ञा खलु ददाहि गच्छाम किं वा करोमो नृपा
त्वमिह वशितु प्रासु भृत्या वयं भट्ट देवा जया ॥ ४२ ॥

विंशति च सहस्र नागोत्तमा हेमजालोज्ज्वला
त्वरितमुपगमिंसु राज्ञो गृहं गर्जमाना नभे ।
L 95 कृष्णशबल वत्स गोपामुखा जात षष्टिशता
इयमपि सुति देवदेवोत्तमे वृद्धि राज्ञो गृहे ॥ ४३ ॥

---

१ R om. this sentence. २ R om. this line. ३ R जाता for जातु. ४ After भवेत्, R adds: कोट्टराजस्तथा नृप क्रमतः प्रादुर्भूतः साधु किं करवाम देवि । इत्युक्त्वाऽप्सरोगणस्तूष्णीमभूत् । कपिलवस्तुमहानगरात्पुरुषा आगन्त्वा for द्वितियु पुरुषु गत्व राज्ञि. ५ R शुद्धोदनमाश्लिष्य for शुद्धोदने श्लेषयित्वा. ६ R उग्राः for नग्नाः. ७ R मुञ्जकेशा. ८ R क्रमतलेभि विक्रमी for क्रमतलेभि चान्वाक्रमी.

अपि च नृपति गच्छ प्रेक्ष स्वयं सर्वमेव प्रभो (पुण्यतेज प्रभो)
नरमरुतसहस्र ये हर्षिता दृष्ट्व जाते गुणां।
बोधिवर अशोक संप्रस्थिताः क्षिप्र भोमा जिनाः ॥ ४४ ॥ इति ॥

इति हि भिक्षवो जाते बोधिसत्त्वे तत्क्षणं दाननिसर्गः पुनरुत्तरि प्रवर्तते[1] स्म। पञ्च च R 109
कुलिकाशतानि प्रसूयन्ते स्म, दश च कन्यासहस्राणि यशोवतीप्रमुखानि। अष्टौ दासीशतानि अष्टौ[2] दासशतानि छन्दकप्रमुखानि। दश वडवासहस्राणि दश किशोरसहस्राणि कण्ठकप्रमुखानि। पञ्च करेणुसहस्राणि पञ्च पिङ्ग[3]सहस्राणि प्रसूयन्ते स्म। तानि सर्वाणि राज्ञा शुद्धोदनेन पुस्तै[4]वरोपितानि कुमारस्य क्रीडार्थं दत्तान्यभूवन्॥

चतुर्णां च द्वीपकोटीशतसहस्राणां मध्ये पृथिवीप्रदेशे अश्वत्थयष्टिः प्रादुरभूदन्तर्द्वीपे च चन्दनवनं प्रादुर्बभूव बोधिसत्त्वस्य परिभोगार्थं बोधिसत्त्वस्यैवानुभावेन। पञ्च चोद्यानशतानि समन्तान्नगरस्य प्रादुर्बभूवुर्बोधिसत्त्वस्य परिभोगाय। पञ्च च निधानसहस्राणि धरणीतला-दुत्प्लुत्य मुखं दर्शयन्ति स्म। इति हि ये केचिद्राज्ञः शुद्धोदनस्यार्थाभिप्रेता अभूवन्, ते सर्वे समृ[5]द्धाभिप्रेता अभूवन् संसिद्धाः॥

ततो राज्ञः शुद्धोदनस्यैतदभूत्—किमहं कुमारस्य नामधेयं करिष्यामीति। ततोऽस्यैतदभूत्—अस्य हि जातमात्रेण मम सर्वार्थाः संसिद्धाः। यन्न्वहमस्य सर्वार्थसिद्ध इति नाम कुर्याम्। ततो राजा बोधिसत्त्वं महता सत्कारेण सत्कृत्य सर्वार्थसिद्धोऽयं कुमारो नाम्ना भवतु इति नामास्याकार्षीत्॥ L 96

इति हि भिक्षवो जाते बोधिसत्त्वे मातुः कुक्षिपार्श्वमक्षतमनुपहतमभवद्यथा पूर्वं तथा पश्चात्। त्रिर्त[6]विष्यन्दाम्बुकूपाः प्रादुरभूवन् अपि च सुगन्धतैलपुष्करिण्यः। पञ्चाप्सरः-सहस्राणि दिव्यगन्धपरिवासिततैलपरिगृहीतानि बोधिसत्त्वमातरमुपसंक्रम्य सुजातजाते ता-मक्लान्तकायतां च परिपृच्छन्ति स्म। पञ्चाप्सरःसहस्राणि दिव्यानुलेपनपरिगृहीतानि बोधिसत्त्व- R 110
मातरमुपसंक्रम्य सुजातजाते तामक्लान्तकायतां च परिपृच्छन्ति स्म। पञ्चाप्सरःसहस्राणि दिव्य-गन्धोदकपरिपूर्णघटापरिगृहीतानि बोधिसत्त्वमातरमुपसंक्रम्य सुजातजाते तामक्लान्तकायतां च परिपृच्छन्ति स्म। पचाप्सरःसहस्राणि दिव्यानुलेपनपरिगृहीतनि बोधिसत्त्वमातरमुपसंक्रम्य सुजातजाते तामक्लान्तकायतां च परिपृच्छन्ति स्म। पञ्चाप्सरःसहस्राणि दिव्यदारकाचीवरपरि-गृहीतानि बोधिसत्त्वमातरमुपसंक्रम्य सुजातजाते तामक्लान्तकायतां च परिपृच्छन्ति स्म। पञ्चाप्सरः-सहस्राणि दिव्यं[7]दारकाभरणपरिगृहीतानि बोधिसत्त्वमातरमुपसंक्रम्य सुजातजाते तामक्लान्तकायतां च परिपृच्छन्ति स्म। पञ्चाप्सरःसहस्राणि दिव्यतूर्यसंगीतिसंप्रभणितेन बोधिसत्त्वमातरमुपसंक्रम्य सुजातजाते तामक्लान्तकायतां च परिपृच्छन्ति स्म। यावन्तश्चेह जम्बुद्वीपे बाह्याः पञ्चभिज्ञा ऋषयस्ते सर्वे गगनतलेनागत्य राज्ञः शुद्धोदनस्य पुरतः स्थित्वा जयवृद्धिशब्दमनुश्रावयन्ति स्म॥

इति हि भिक्षवो जातमात्रो बोधिसत्त्वः सप्तरात्रः लुम्बिनीवने दिव्यमानुष्यकैस्तूर्यताला-वचरैः सत्क्रियते स्म, गुरुक्रियते स्म, मान्यते स्म, पूज्यते स्म, खाद्यभोज्यस्वादनीयानि

१ R वर्तति for प्रवर्तते. २ R om. अष्टौ दास°. ३ R पिङ्गलासहस्राणि. ४ R पुस्तकावरोपितानि. ५ R संसिद्धाभिप्रेता for समृद्धाभि°. ६ R त्रिभविष्यन्दा for त्रिर्तविष्यन्दा. ७ R om. दिव्य°.

L 97 विश्राण्यन्ते स्म । सर्वशाक्यगणाश्च संनिपीत्या[1]नन्दशब्दमुदीरयन्ति स्म, दानानि च ददन्ति स्म,
R 111 पुण्यानि च कुर्वन्ति स्म । द्वात्रिंशच्च ब्राह्मणशतसहस्राणि दिने दिने संतर्प्यन्ते स्म । येषां च येनार्थेन[2] तेभ्यस्तद्दीयते स्म । शक्रश्च देवानामिन्द्रो ब्रह्मा च तस्यां ब्राह्मणपर्षदि माणवकरूपमभिनिर्मायाग्रासने निषद्येमां मङ्गल्यां गाथामभ्यभाषताम्[3] —

अपायाश्च यथा शान्ता सुखी सर्वं यथा जगत् ।
ध्रुवं सुखावहो जातः सुखे स्थापयिता जगत् ॥ ४५ ॥
यथा वितिमिरा चाभा रविचन्द्रसुरप्रभाः ।
अभिभूता न भासन्ते ध्रुवं पुण्यप्रभोद्भवः ॥ ४६ ॥
पश्यन्त्यनयना यद्वच्छ्रोत्रहीनाः श्रुणन्ति च ।
उन्मत्तकाः स्मृतीमन्तो भविता लोकचेतियः ॥ ४७ ॥
न बाधन्ते यथा क्लेशा जातं मैत्रजनं जगत् ।
निःसंशयं ब्रह्मकोटीनां भविता पूजनार्हः[4] ॥ ४८ ॥
यथा संपुष्पिताः[5] शाला मेदिनी च समा स्थिता ।
ध्रुवं सर्वजगत्पूज्यः सर्वज्ञोऽयं भविष्यति ॥ ४९ ॥
यथा निराकुलो लोको महापद्मो यथोद्भवः ।
निःसंशयं महातेजा लोकनाथो भविष्यति ॥ ५० ॥
यथा च मृदुका वाता दिव्यगन्धोपवासिताः ।
शमेन्ति[6] व्याधिं सत्त्वानां वैद्यराजो भविष्यति ॥ ५१ ॥
वीतरागा यथा[7] चेमे रूपधातौ मरुच्छताः ।
कृताञ्जलिं नमस्यन्ते दक्षिणीयो भविष्यति ॥ ५२ ॥
यथा च मनुजा देवान् देवाः पश्यन्ति मानुषान् ।
R 112 हेठयन्ति[8] न चान्योन्यं सार्थवाहो भविष्यति ॥ ५३ ॥
L 98 यथा च ज्वलनः शान्तः सर्वा नद्यश्च[9] विस्थिताः ।
सूक्ष्मं च कम्पते भूमिः भविता तत्त्वदर्शकः ॥ ५४ ॥ इति ॥

इति हि भिक्षवः सप्तरात्रजातस्य बोधिसत्त्वस्य माता मायादेवी कालमकरोत् । सा कालगता त्रायस्त्रिंशति[10] देवेषूपपद्यत । स्यात् खलु पुनर्भिक्षवो युष्माकमेवं बोधिसत्त्वापराधेन मायादेवी कालगतेति ? न खल्वेवं द्रष्टव्यम् । तत्कस्माद्धेतोः ? एतत् परमं हि तस्या आयुष्प्रमाणमभूत् । अतीतानामपि भिक्षवो[11] बोधिसत्त्वानां सप्तरात्रजातानां जनेत्र्यः[12] कालमकुर्वन्त । तत्कस्माद्धेतोः ? विवृद्धस्य हि बोधिसत्त्वस्य परिपूर्णेन्द्रियस्याभिनिष्क्रामतो मातुर्हृदयं स्फुटेत् ॥

---

१ R संनिपत्य. २ R योऽर्थस्तैः for येनार्थेन. ३ R अध्यभाषताम्. ४ R पूजनार्हते. ५ R सुपुष्पिताः. ६ R शाम्यन्ति. ७ R om. यथा. ८ R विहेठयन्ति for हेठ°. ९ R नद्यः स्ववस्थिताः. १० R त्रायत्रिंशद्देवेषु. ११ R om. भिक्षवो. १२ R जनयित्र्यः for जनेत्र्यः.

इति हि भिक्षवः सप्तमे दिवसे यादृशेनैव[1] व्यूहेन मायादेवी कपिलवस्तुनो महानगरा[2]-
दुद्यानभूमिमभिनिष्क्रान्ताभूत्, ततः कोटीशतसहस्रगुणोत्तरेण महाव्यूहेन बोधिसत्त्वः कपिलवस्तु
महानगरं प्राविक्षत् । तस्य च प्रविशतः पञ्च पूर्णकुम्भसहस्राणि गन्धोदकपरिपूर्णानि पुरतो
नीयन्ते स्म । एवं पञ्चकन्यासहस्राणि मयूरहस्तकपरिगृहीतानि पुरतो गच्छन्ति स्म । पञ्च च
कन्यासहस्राणि तालवृ[3]क्षकपरिगृहीतानि पुरतो गच्छन्ति स्म । पञ्च च कन्यासहस्राणि
गन्धोदकभृङ्गारपरिगृहीतानि पुरतो गच्छन्ति स्म, मार्गमवसिञ्चन्ति स्म । पञ्च च कन्यासहस्राणि
विचित्रपट[4]लकपरिगृहीतानि पुरतो गच्छन्ति स्म । पञ्च च कन्यासहस्राणि नवविचित्रप्रलम्बन- R 113
मालापरिगृहीतानि पुरतो गच्छन्ति स्म । पञ्च च कन्यासहस्राणि रत्नभद्रालंकारपरिगृहीतानि
पुरतो गच्छन्ति स्म, मार्गं शोधयन्ति[5] स्म । पञ्च च कन्यासहस्राणि भद्रासनपरिगृहीतानि पुरतो L 99
गच्छन्ति स्म । पञ्च च ब्राह्मण[6]सहस्राणि घण्टापरिगृहीतानि माङ्गल्यशब्दं श्रावयन्तः[7] पुरतो
गच्छन्ति स्म । विंशति नागसहस्राणि सर्वालंकारविभूषितानि पुरतो गच्छन्ति स्म । विंशति
हयसहस्राणि सुवर्णालंकारसंछन्नानि सर्वालंकारविभूषितानि पुरतो गच्छन्ति स्म । अशीति रथ-
सहस्राणि उच्छ्रित[8]छत्रध्वजपताकाकिङ्किणीजालसमलंकृतानि बोधिसत्त्वस्य पृष्ठतोऽनुच्छन्ति स्म ।
चत्वारिंशत्पदातिसहस्राणि शूराणां वीराणां वराङ्गरूपिणां संनद्धदृढवर्मकवचानां बोधिसत्त्वं
गच्छन्तमनुगच्छन्ति स्म । गगनतलगतानि चाप्रमेयासंख्येयान्यभिज्ञातानि कामावचराणां
रूपावचर[9]देवपुत्रकोटीनयुतशतसहस्राणि नानाप्रकारमनेकव्यूहैर्बोधिसत्त्वस्य पूजां कुर्वन्तोऽनुगच्छन्ति
स्म । यस्मिंश्च वरप्रवररथे बोधिसत्त्वः समभिरूढो[10]ऽभूत्, स कामावचरैर्देवैरनेकैर्महाव्यूहैः
समलंकृतोऽभूत् । विंशति च देवकन्यासहस्राणि सर्वालंकारविभूषितानि रत्नसूत्रपरिगृहीतानि
तं रथं वहन्ति स्म । द्वयोश्चाप्सरसोर्मध्ये एका मानुषी कन्या द्वयोर्मानुषीकन्ययोर्मध्ये एकाप्सरा ।
न चाप्सरसो मानुषीणामामगन्धं जिघ्रन्ति स्म । न च मानुषा अप्सरसां रूपं दृष्ट्वा प्रमादमापद्यन्ते R 114
स्म यदिदं बोधिसत्त्वस्य तेजोनुभावेन ॥

इति हि भिक्षवः कपिलाह्वये पुरवरे सर्वार्थसिद्धाय पञ्चमात्रैः शाक्यशतैः पञ्चगृहशतानि
निर्मापितान्यभूवन् बोधिसत्त्वमुद्दिश्य । ते बोधिसत्त्वं नगरं प्रविशन्तं स्वस्वगृहद्वारमूले स्थित्वा
कृताञ्जलिपुटा अभिनतकायाः सगौरवा एवमाहुः—इह भोः सर्वार्थसिद्ध प्रविश । इह भो
देवातिदेव प्रविश । इह भोः शुद्धसत्त्व प्रविश । इह भोः सारथिवर प्रविश । इह भोः प्रीति-
प्रामोद्यकर प्रविश । इह भो अनिन्दितयशः प्रविश । इह भोः समन्तचक्षुः प्रविश । इह भो L 100
असमसम प्रविश । इह भो असदृशगुणतेजोधर लक्षणानुव्यञ्जनस्वलंकृतकाय प्रविशेति ।
ततश्चोपादाय कुमारस्येह सर्वार्थसिद्धः सर्वार्थसिद्ध इति संज्ञामगमत् ॥

तत्र राजा शुद्धोदनस्तेषां सर्वेषामनुवर्तनार्थं बोधिसत्त्वं सर्वगृहेषु प्रवेश्य चतुर्णां
मासानामत्ययाद्बोधिसत्त्वं स्वगृहे प्रवेशयति स्म । तत्र च नानारत्नव्यूहो नाम

---

१ R यादृशेन for °नैव. २ R °नगरवराद् for °नगराद्. ३ R तालवृन्तक° for °वृक्षक°. ४ R °पटोलक° for °पटलक°. ५ R शोधयन्त्यः for शोधयन्ति स्म. ६ R ब्रह्मशतसहस्राणि. ७ R श्रावयन्ति for °यन्तः. ८ R उच्छ्रितश्वेतच्छत्र°. ९ R om. रूपावचर°. १० R समभिरूढो.

महाप्रासादस्तं बोधिसत्त्वः समारूढोऽभूत् । तत्र ते वृद्धवृद्धाः शाक्याः संनिपत्यैवं मतं चारयन्ति स्म – का नु खलु समर्था बोधिसत्त्वं गोपायितुं केलयितुं ममायितुं हितचित्ततया मैत्रचित्ततया गुणचित्ततया सौम्यचित्ततया चेति । तत्र पञ्चमात्राणि शाक्यवधूशतानि । एकैका एवमाहुः – अहं कुमारमुपस्थास्य इति । तत्र महल्लकमहल्लिकाः शाक्या एवमाहुः – सर्वा एता वधूका नवा R 115 दह्रास्तरुण्यः रूपयौवनमदमत्ताः । नैताः समर्था बोधिसत्त्वं कालेन कालमुपस्थापयितुम् । अथ च पुनरियं महाप्रजापती[1] गौतमी कुमारस्य मातृस्वसा । एषा समर्था कुमारं सम्यक्सुखेन संवर्धयितुम्, राजानं च शुद्धोदनमभिधारयितुम् । इति हि ते सर्वे समग्रा भूत्वा महाप्रजापतीं गौतमीमुत्साहयन्ति स्म । इति हि महाप्रजापती गौतमी कुमारं संवर्धयति स्म । तत्र बोधिसत्त्वस्यार्थे द्वात्रिंशद्धात्र्यः संस्थापिता अभूवन् अष्टावङ्कधात्र्यः, अष्टौ क्षीरधात्र्यः, अष्टौ मलधात्र्यः, अष्टौ क्रीडाधात्र्यः ॥

ततो राजा शुद्धोदनः सर्वं शाक्यगणं संनिपात्यैवं मीमांसते स्म – किं नु खल्वयं कुमारो राजा भविष्यति चक्रवर्ती, आहोस्विदभिनिष्क्रमिष्यति प्रव्रज्यायै ?

L 101 तेन च समयेन हिमवतः पर्वतराजस्य पार्श्वे असितो नाम महर्षिः प्रतिवसति स्म पञ्चाभिज्ञः सार्धं नरदत्तेन भागिनेयेन । स बोधिसत्त्वस्य जातमात्रस्य बहून्याश्चर्याद्भुतप्रातिहार्याण्यद्राक्षीत् । गगनतलगतांश्च देवपुत्रान् बुद्धशब्दमनुश्रावयतोऽम्बराणि च भ्रामयत इतस्ततः प्रमुदितान् भ्रमतोऽ[2]द्राक्षीत् । तस्यैतदभूत् – यन्न्वहं व्यवलोकयेयमिति । स दिव्येन चक्षुषा सर्वं R 116 जम्बुद्वीपमनुविलोकयन्नद्राक्षीत् कपिलाह्वये महापुरवरे राज्ञः शुद्धोदनस्य गृहे कुमारं जातं शतपुण्यतेजस्तेजितं सर्वलोकमहितं द्वात्रिंशन्महापुरुषलक्षणैः समलंकृतगात्रम् । दृष्ट्वा च पुनर्नरदत्तं माणवकमामन्त्रयते स्म – यत् खलु माणवक जानीया[3] जम्बुद्वीपे महारत्नमुत्पन्नम् । कपिलवस्तुनि महानगरे राज्ञः शुद्धोदनस्य गृहे कुमारो जातः शतपुण्यतेजस्तेजितः सर्वलोकमहितो द्वात्रिंशन्महापुरुषलक्षणैः समन्वागतः । सचेत्सो[4]ऽगारमध्यावसिष्यति, राजा भविष्यति चतुरङ्ग[5]श्चक्रवर्ती विजितवान् धार्मिको धर्मराजो जान[6]पदस्थामवीर्यप्राप्तः सप्तरत्नसमन्वागतः । तस्येमानि सप्त रत्नानि भवन्ति । तद्यथा – चक्ररत्नं हस्तिरत्नं अश्वरत्नं मणिरत्नं स्त्रीरत्नं गृहपतिरत्नं परिणायकरत्नम् । एवं सप्तरत्न[7]संपूर्णश्च । अस्य पुत्रसहस्रं भविष्यति शूराणां वीराणां वराङ्गरूपिणां परसैन्यप्रमर्दकानाम् । स इमं महापृथिवीमण्डलं समुद्रपरिखमदण्डेनाशस्त्रेण स्वेन ( धर्मेण ) बलेनाभिभूयाभिनिर्जित्य राज्यं करिष्यत्यैश्वर्याधिपत्येन । सचेत्पुनरगारादनगारिकां प्रव्रजिष्यति, तथागतो भविष्यति अर्हन् सम्यक्संबुद्धो नेता अन[8]न्यनेयः शास्ता लोके संबुद्धः । तदेतर्ह्युपसंक्रमिष्या[9]वस्तद् द्रष्टुमिति ॥

L 102 अथ खल्वसितो महर्षिः सार्धं नरदत्तेन भागिनेयेन राजहंस इव गगनतलादभ्युद्गम्य समुत्प्लुत्य येन कपिलवस्तु महानगरं तेनोपसंक्रामत् । उपसंक्रम्य ऋद्धिं प्रतिसंहृत्य पद्भ्यामेव कपिलवस्तु महानगरं प्रविश्य येन राज्ञः शुद्धोदनस्य निवेशनं तेनोपसंक्रामत् । उपसंक्रम्य राज्ञः शुद्धोदनस्य गृहद्वारेऽस्थात् ॥

१ R महाप्रजावती. २ R परिभ्रमतो. ३ R जानीहि. ४ R om. सो. ५ R चतुरङ्गबलश्चक्र°. ६ R जनपदस्थो महावीर्य° for जानपदस्थामवीर्य°. ७ R °रत्नसमन्वागतश्चा° for °रत्नसंपूर्णश्च अस्य°. ८ R अनन्यनयः. ९ R °क्रमिष्यामि न तद् द्रष्टुम्.

इति हि भिक्षवोऽसितो महर्षिः[1] पश्यति स्म राज्ञः शुद्धोदनस्य गृहद्वारेऽनेकानि प्राणिशतसहस्राणि संनिपतितानि। अथ खल्वसितो महर्षिर्दौवारिकमुपसंक्रम्यैवमाह – गच्छ त्वं भोः पुरुष राज्ञः शुद्धोदनस्य, निवेदय द्वारे ऋषिर्व्यवस्थित इति। परमेति दौवारिकोऽसितस्य महर्षेः R 117
प्रतिश्रुत्य येन राजा शुद्धोदनस्तेनोपसंक्रामत्। उपसंक्रम्य कृताञ्जलिपुटो राजानं शुद्धोदनमेवमाह–यत् खलु देव जानीया ऋषिर्जीर्णो वृद्धो महल्लको द्वारे स्थितः। एवं च वदति–राजानमहं द्रष्टुकाम इति। अथ राजा शुद्धोदनोऽसितस्य महर्षेरासनं प्रज्ञाप्य तं पुरुषमेवमाह – प्रविशतु ऋषिरिति। अथ स पुरुषो राजकुलान्निष्क्रम्यासितं महर्षिमेवमाह – प्रविशेति॥

अथ खल्वसितो महर्षिर्येन राजा शुद्धोदनस्तेनोपसंक्रामत्। उपसंक्रम्य पुरतः स्थित्वा राजानं शुद्धोदनमेवमाह – जय जय महाराज, चिरमायुः पालय, धर्मेण राज्यं कारयेति॥

अथ स राजा शुद्धोदनोऽसितस्य महर्षेर[2]र्घपाद्यमर्चनं च कृत्वा साधु सुष्ठु च परिगृह्य आसनेनोपनिमन्त्रयते स्म। सुखोपविष्टं चैनं ज्ञात्वा सगौरवः सुप्रतीत[3] एवमाह – न स्माराम्यहं तव[4] ऋषे दर्शनम्। तत्केनार्थेनेहाभ्यागतोऽसि, किं प्रयोजनम्?

एवमुक्तेऽसितो महर्षी राजानं शुद्धोदनमेतदवोचत् – पुत्रस्ते महाराज जातस्तमहं L 103
द्रष्टुकाम इहागत इति॥

राजा आह – स्वपिति महर्षे कुमारः। मुहूर्तमागमय यावदुत्थास्यतीति॥

ऋषिरवोचत् – न महाराज तादृशा महापुरुषाश्चिरं स्वपन्ति। जागरशीलास्तादृशाः सत्पुरुषा भवन्ति॥

इति हि भिक्षवो बोधसत्त्वोऽसितस्य महर्षेरनुकम्पया जागरणनिमित्तमकरोत्। अथ R 118
खलु राजा शुद्धोदनः सर्वार्थसिद्धं कुमारमुभाभ्यां पाणिभ्यां साधु च सुष्ठु चानुपरिगृह्य असितस्य महर्षेरन्तिकमुपनामयति[5] स्म॥

इति हि असितो महर्षिर्बोधिसत्त्वमवलोक्य द्वात्रिंशता महापुरुषलक्षणैः समन्वागतमशीत्यनुव्यञ्जनसुविचित्र[6]गात्रं शक्रब्रह्मलोकपालातिरेकवपुषं दिनकर[7]शतसहस्रातिरेकतेजसं सर्वाङ्गसुन्दरं दृष्ट्वा चोदानमुदानयति स्म – आश्चर्यपुद्गलो बतायं लोके प्रादुर्भूतः, महाश्चर्यपुद्गलो[8] बतायं लोके प्रादुर्भूतः। इत्युत्थायासनात्कृताञ्जलिपुटो बोधिसत्त्वस्य चरणयोः प्रणिपत्य प्रदक्षिणीकृत्य च बोधिसत्त्वमङ्केन[9] परिगृह्य निध्यायन्नवस्थितोऽभूत्। सोऽद्राक्षीद्बोधिसत्त्वस्य द्वात्रिंशन्महापुरुषलक्षणानि यैः समन्वागतस्य पुरुषपुद्गलस्य द्वे गती भवतो नान्या। सचेदगारमध्यावसति राजा भवति चतुरङ्गश्चक्रवर्ती पूर्ववद्यावदैश्वर्याधिपत्येन। सचेत्पुनरगारादनगारिकां प्रव्रजति तथागतो भविष्यति विघुष्टशब्दः सम्यक्संबुद्धः। स तं दृष्ट्वा प्रारोदीदश्रूणि च प्रवर्तयन्[10] गम्भीरं च निश्वसति स्म॥

---

१ R देवर्षिः for महर्षिः. २ R °रघ्यपाद्याभ्यर्चणं for अर्घपाद्यमर्चनं. ३ R सप्रतीतिः for सुप्रतीत. ४ R om. तव. ५ R उपनयति for उपनामयति. ६ R °चित्रित° for °सुविचित्र°. ७ R om. दिनकर°. ८ R om. महाश्चर्य...भूतः. ९ R om. अङ्केन. १० R प्रवर्तयति for प्रवर्तयन्.

L 104 अद्राक्षीद्राजा शुद्धोदनोऽसितं महर्षिं रुदन्तमश्रूणि च प्रवर्तयमानं गम्भीरं च निश्वसन्तम्।
दृष्ट्वा च संहर्षित[1]रोमकूपजातस्त्वरितत्वरितं दीनमना असितं महर्षिमेतदवोचत् – किमिदमृषे रोदसि[2]
अश्रूणि च प्रवर्तयसि गम्भीरं च निश्वससि ? मा खलु कुमारस्य काचिद्विप्रतिपत्तिः ॥

R 119 एवमुक्तेऽसितो महर्षी राजानं शुद्धोदनमेवमाह – नाहं महाराज कुमारस्यार्थेन
रोदिमि, नाप्यस्य काचिद्विप्रतिपत्तिः । किं त्वात्मानमहं रोदिमि । तत्कस्माद्धेतोः ? अहं च महाराज
जीर्णो वृद्धो महल्लकः । अयं च सर्वार्थसिद्धः कुमारोऽवश्यमनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यति।
अभिसंबुध्य चानुत्तरं धर्मचक्रं प्रवर्तयिष्यति अप्रवर्तितं श्रमणेन वा ब्राह्मणेन वा देवेन वा मारेण
वा अन्येन वा पुनः केनचिल्लोके सहधर्मेण । सदेवकस्य लोकस्य हिताय सुखाय धर्मं देशयिष्यति
आदौ कल्याणं मध्ये कल्याणं पर्यवसाने[3] कल्याणम् । स्वर्थं सुव्यञ्जनं केवलं परिपूर्णं परिशुद्धं
पर्यवदातं ब्रह्मचर्यं सत्त्वानां संप्रकाशयिष्यति । अस्मात्तं धर्मं श्रुत्वा जातिधर्माणः[4] सत्त्वा जात्या
परिमोक्षन्ते[5] । एवं जराव्याधिमरणशोकपरिदेवदुःखदौर्मनस्योपायासेभ्यः परिमोक्षन्ते । राग-
द्वेषमोहाग्निसंतप्तानां सत्त्वानां सद्धर्मजलवर्षेण प्रह्लादनं करिष्यति । नानाकुदृष्टिग्रहण-
प्रस्कन्धानां[6] सत्त्वानां कुपथप्रयातानामृजुमार्गेण निर्वाणपथमुपनेष्यति । संसारपञ्जरचारकावरुद्धानां
क्लेशबन्धनबद्धानां बन्धननिर्मोक्षं करिष्यति । अज्ञानतमस्तिमिरपटलपर्यवनद्धनयनानां सत्त्वानां[7]
L 105 प्रज्ञाचक्षुरुत्पादयिष्यति । क्लेशशल्यविद्धानां सत्त्वानां शल्योद्धरणं करिष्यति । तद्यथा महाराज
R 120 औदुम्बरपुष्पं कदाचित्कर्हिचिल्लोके उत्पद्यते, एवमेव महाराज कदाचित्कर्हिचिद्बहुभिः कल्पकोटि-
र्नयुतैर्[8]बुद्धा भगवन्तो लोके उत्पद्यन्ते । सोऽयं कुमारोऽवश्यमनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यते ।
अभिसंबुध्य च सत्त्वकोटीनियुतशतसहस्राणि संसारसागरात् पारमुत्तारयिष्यति, अमृते च
प्रतिष्ठापयिष्यति । वयं च तं बुद्धरत्नं न द्रक्ष्यामः । इत्येवं[9] तदहं महाराज रोदिमि परिदीनमना दीर्घं
च निश्वसामि यदहमिमं नारोग्येऽपि राधयिष्यामि ॥

यथा ह्यस्माकं महाराज मन्त्रवेदशास्त्रेष्वागच्छति – नार्हति सर्वार्थसिद्धः कुमारोऽगार-
मध्यावसितुम् । तत्कस्य हेतोः ? तथा हि महाराज सर्वार्थसिद्धः कुमारो द्वात्रिंशता[10] महापुरुषलक्षणैः
समान्वागतः । कतमैर्द्वात्रिंशता ? तद्यथा । उष्णीषशीर्षो महाराज सर्वार्थसिद्धः कुमारः । अनेन
महाराज प्रथमेन महापुरुषलक्षणेन समन्वागतः सर्वार्थसिद्धः कुमारः । भिन्नाञ्जनमयूरकलापाभिनील-
वलितप्रदक्षिणावर्तकेशः । समविपुलललाटः । ऊर्णा महाराज सर्वार्थसिद्धस्य कुमारस्य भ्रुवो
मध्ये जाता हिमरजतप्रकाशा । गोपक्ष्मनेत्रः । अभिनीलनेत्रः । समचत्त्वारिंशद्दन्तः । अविरलदन्तः ।
शुक्लदन्तः । ब्रह्मस्वरो महाराज सर्वार्थसिद्धः कुमारः । रसरसाग्रवान् । प्रभूततनुजिह्वः । सिंहहनुः ।
सुसंवृत्तस्कन्धः । सप्तोत्सदः[11] । चितान्तरांसः । सूक्ष्मसुवर्णवर्णच्छविः । स्थितोऽनवनत[12]प्रलम्बबाहुः ।
R 121 सिंहपूर्वार्धकायः । न्यग्रोधपरिमण्डलो महाराज सर्वार्थसिद्धः कुमारः । एकैकरोमा । ऊर्ध्वाग्राभि[13]-

१ R स हर्षित° for संहर्षित°. २ R रोदिषि for रोदसि. ३ R पर्यवसानं धर्मं for पर्यवसाने. ४ R जातिधर्मिणः for °धर्माणः. ५ R परिमोक्ष्यन्ते for °मोक्षन्ते. ६ R प्रस्कन्नानां for °प्रस्कन्धानां. ७ R om. सत्त्वानां. ८ R °नियुतैः for °नयुतैः. ९ R इत्येवमहं for इत्येव तदहं. १० R द्वात्रिंशन्महा° for °शता महा°. ११ R सप्तच्छदोच्छितांस for सप्तोत्सदः। चिता°. १२ R स्थिरोऽवनत° for स्थितोऽनवनत°. १३ R ऊर्ध्वग्राहि° for ऊर्ध्वाग्राभि°.

[1]प्रदक्षिणावर्तरोमाः । कोशोपगतबस्तिगुह्यः । सुविवर्तितोरुः । एणेयमृगराजजङ्घः । दीर्घाङ्गुलिः । आयत[2]पार्ष्णिपादः । उत्सङ्गपादः । मृदुतरुणहस्तपादः । [3]जालाङ्गुलिहस्तपादः । [4]दीर्घाङ्गुलिरधःक्रमतलयो- L 106 र्महाराज सर्वार्थसिद्धस्य कुमारस्य चक्रे जाते चि (अर्चिष्मती प्रभास्वरे सिते) सह[5]स्रारे सनेमिके सनाभिके । सुप्रतिष्ठितसमपादो महाराज सर्वार्थसिद्धः कुमारः । अनेन महाराज द्वात्रिं[6]शत्तमेन महापुरुषलक्षणेन समन्वागतः सर्वार्थसिद्धः कुमारः । न च महाराज चक्रवर्तिनामेवंविधानि लक्षणानि भवन्ति । बोधिसत्त्वानां च तादृशानि लक्षणानि भवन्ति ॥

[7]संविद्यन्ते खलु पुनर्महाराज सर्वार्थसिद्धस्य कुमारस्य कायेऽशीत्यनुव्यञ्जनानि, यैः समन्वागतः सर्वार्थसिद्धः कुमारो नार्हत्यगारमध्यावसितुम् । अवश्यमभिनिष्क्रमिष्यति प्रव्रज्यायै । कतमानि च महाराज तान्यशीत्यनुव्यञ्जनानि ? तद्यथा – तुङ्गनखश्च महाराज सर्वार्थसिद्धः कुमारः । ताम्रनखश्च स्निग्धनखश्च वृत्ताङ्गुलिश्च अनुपूर्वचित्राङ्गुलिश्च गूढशिरश्च गूढगुल्फश्च घनसंधिश्च अविषमसमपादश्च [8]आयतपार्ष्णिश्च महाराज सर्वार्थसिद्धः कुमारः । स्निग्धपाणिलेखश्च तुल्यपाणिलेखश्च गम्भीरपाणिलेखश्च अजिह्मपाणिलेखश्च अनुपूर्वपाणिलेखश्च बिम्बोष्ठश्च नोच्चवचनशब्दश्च मृदुतरुणताम्रजिह्वश्च गजगर्जिताभिस्तनितमेघस्वरमधुरमञ्जुघोषश्च परिपूर्णव्यञ्जनश्च महाराज सर्वार्थसिद्धः कुमारः । प्रलम्बबाहुश्च शुचिगात्रवस्तुसंपन्नश्च मृदुगात्रश्च विशालगात्रश्च अदीनगात्रश्च अनुपूर्वोन्नत- R 122 गात्रश्च सुसमाहितगात्रश्च सुविभक्तगात्रश्च पृथुविपुलसुपरिपूर्णजानुमण्डलश्च वृत्तगात्रश्च महाराज सर्वार्थसिद्धः कुमारः । सुपरिमृष्टगात्रश्च अजिह्म[9]वृषभगात्रश्च अनुपूर्वगात्रश्च गम्भीरनाभिश्च अजिह्मनाभिश्च अनुपूर्वनाभिश्च शुच्याचारश्च ऋषभवत्[10]समन्तप्रासादिकश्च परमसुविशुद्धवितिमिरालोक- L 107 समन्तप्रभश्च नागविलम्बितगतिश्च महाराज सर्वार्थसिद्धः कुमारः । सिंहविक्रान्तगतिश्च ऋषभविक्रान्तगतिश्च हंसविक्रान्तगतिश्च अभिप्रदक्षिणावर्तगतिश्च वृत्तकुक्षिश्च [11]मृष्टकुक्षिश्च अजिह्मकुक्षिश्च चापोदरश्च व्यपगत[12]छन्ददोषनील[13]कालकादुष्टशरीरश्च वृत्त[14]दंष्ट्रश्च महाराज सर्वार्थसिद्धः कुमारः । तीक्ष्णदंष्ट्रश्च अनुपूर्वदंष्ट्रश्च तुङ्गनासश्च शुचिनयनश्च विमलनयनश्च प्रहसितनयनश्च आयतनयनश्च विशालनयनश्च नीलकुवलयदलसदृशनयनश्च सहितभ्रूश्च महाराज सर्वार्थसिद्धः कुमारः । चित्रभ्रूश्च असितभ्रूश्च संगतभ्रूश्च अनुपूर्वभ्रूश्च पीनगण्डश्च अविषमगण्डश्च व्यपगतगण्डदोषश्च अनुप[14]हतक्रुष्टश्च सुविदितेन्द्रियश्च सुपरिपूर्णेन्द्रियश्च महाराज सर्वार्थसिद्धः कुमारः । संगतमुखललाटश्च परिपूर्णोत्तमाङ्गश्च असितकेशश्च सहितकेशश्च (सुसंगतकेशश्च) सुरभिकेशश्च अपरुषकेशश्च अनाकुलकेशश्च अनुपूर्वकेशश्च [15]सुकुञ्चितकेशश्च श्रीवत्सस्वस्तिकनन्द्यावर्तवर्धमानसंस्थानकेशश्च महाराज सर्वार्थसिद्धः कुमारः । इमानि तानि महाराज सर्वार्थसिद्धस्य कुमारस्या-

---

१ R प्रदक्षिणं for प्रदक्षिणा°. २ R °पाणि° for °पार्ष्णि°. ३ R जाङ्गुलिक° for जालाङ्गुलि°. ४ R दीर्घाङ्गुलिधरः । पादतल° for दीर्घाङ्गुलिरधःक्रमतल°. ५ R सहस्रारनेमिके for °स्रारे सनेमिके. ६ R द्वात्रिंशन्महा° for द्वात्रिंशत्तमेन महा°. ७ L संविद्यते for संविद्यन्ते. ८ R आयतपादपार्ष्णिश्च. ९ R om. °वृषभ°. १० R °सम्मत° for °समन्त°. ११ R om. मृष्टकुक्षिश्च. १२ R °छिद्र° for °छन्द°. १३ R °काष्ठ° for °काल°. १४ R वृत्तदन्तश्च for °दंष्ट्रश्च. १४ R अनुपहतकूर्चश्च for °क्रुष्टश्च. १५ R संकुचित° for सुकुञ्चित°.

R 123 शीत्यनुव्यञ्जनानि, यैः समन्वागतः सर्वार्थसिद्धः कुमारो नार्हत्यगारमध्यावसितुम् । अवश्यमभिनिष्क्रमिष्यति प्रव्रज्यायै ॥

अथ खलु राजा शुद्धोदनोऽसितस्य महर्षेः सकाशात्कुमारस्येदं व्याकरणं श्रुत्वा संतुष्ट[1] उदग्र आत्तमनाः प्रमुदितः प्रीतिसौमनस्यजात उत्थायासनाद्बोधिसत्त्वस्य चरणयोः प्रणिपत्येमां गाथामभाषत –

वन्दितस्त्वं सुरैः सेन्द्रैः ऋषिभिश्चासि[2] पूजितः ।
वैद्यं[3] सर्वस्य लोकस्य वन्देऽहमपि त्वां विभो ॥ ५५ ॥

L 108 इति हि भिक्षवो राजा शुद्धोदनोऽसितं महर्षिं सार्धं नरदत्तेन भागिनेयेनानुरूपेण भक्तेन संतर्पयति स्म । संतर्प्याभिच्छाद्य प्रदक्षिणमकरोत् । अथ खल्वसितो महर्षिस्तत एवर्द्ध्या विहायसा प्राक्रमत्, येन स्वाश्रमस्तेनोपासंक्रामत् ॥

अथ खलु[4] द्वयं संक्रम्य तत्र खल्वसितो महर्षिर्नरदत्तं माणवकमेतदवोचत् – यदा त्वं नरदत्त शृणुया बुद्धो लोके उत्पन्न इति, तदा त्व गत्वा तस्य शासने प्रव्रजेः । तत्ते भविष्यति दीर्घरात्रमर्थाय हिताय सुखायेति ॥

तत्रेदमुच्यते –

दृष्ट्वा देवगणान्नभस्तलगतान् बुद्धश्रवोद्गारिणो
देवर्षीरसितोऽद्रिकन्दरगतः[5] प्रीतिं परां प्राप्तवान् ।
बुद्धो नाम पदं किमेतदिह भो हर्षावहं प्राणिनां
प्रह्लाद[6] मम काय एति सुखितं शान्तं च चित्तं परम् ॥ ५६ ॥
किं देवो त्वसुरोऽथवापि स भवेद् गरुडोऽथवा किन्नरः
R 124 बुद्धो नाम किमेतदश्रुतपदं प्रीतिकरं मोदनम् ।
दिव्या चक्षुष प्रेक्षते दश दिशः शैलान् महीं सागरान्
भूँयः[7] पश्यति चाद्भुतं बहुविधं भूमौ गिरौ सागरे ॥ ५७ ॥
आभेयं प्रविराजते सुरुचिरा प्रह्लादयन्ती तनुं
जाताश्चैव यथा हि शैलशिखरे स्निग्धाः प्रवालाङ्कुराः ।
वृक्षाश्चैव यथा सुपुष्पभरिता नानाफलैर्मण्डिताः
सुव्यक्तं त्रिभवे भविष्यति लघु[8] रत्नोद्भवः शोभनः ॥ ५८ ॥
L 109 भूमिर्भाति यथा च पाणिसदृशा सर्वा समा निर्मला
देवाश्चैव यथा प्रहृष्टमनसः खे भ्रामयन्त्यम्बरान् ।
यद्वत् सागरनागराजनिलये रत्नाः प्लवन्तेऽद्भुताः
सुव्यक्तं जिनरत्न जम्बुनिलये धर्माकरस्योद्भवः ॥ ५९ ॥

---

१ R तुष्ट for संतुष्ट. २ R °श्चापि for °श्चासि. ३ R वैद्या for वैद्यं. ४ R om. खलु द्वयं संक्रम्य. ५ R °असितो देवर्षिर्हिमाचल° for देवर्षीरसितोऽद्रिकन्दर°. ६ R प्राह्लादं for प्रह्लादं. ७ R रूपं for भूयः. ८ R क्षणाद् for लघु.

यद्वच्छान्त अपाय दुःखविगताः सत्त्वाश्च सौख्यान्विताः
यद्वद्देवगणा नभस्तलगता गच्छन्ति हर्षान्विताः ।
यथ च स्निग्धरवं मनोज्ञ शृणुया[1] दिव्यान[2] संगीतिनां
रतनस्या इव[3] प्रादुर्भावु त्रिभवे यस्या निमित्ता इमे ॥ ६० ॥

असितः प्रेक्षति जम्बुसाह्वयमिदं दिव्येन वै चक्षुषा
सोऽद्राक्षीत् कपिलाह्वये पुरवरे शुद्धोदनस्यालये ।
जातो[4] लक्षणपुण्यतेजभरितो[5] नारायणस्थामवान्[6]
दृष्ट्वा चात्तमना उदग्रमनसः स्थामास्य संवर्धितः[7] ॥ ६१ ॥

उद्युक्तस्त्वरितोऽतिविस्मितमना चासौ स्वशिष्यान्वितः R 125
आगत्वा[8] कपिलाह्वयं पुरवरं द्वारि स्थितो भूपतेः ।
अनुबद्धा बहुप्राणिकोटिनयुता दृष्ट्वा ऋषिर्जीर्णकः
अवची सारथि राज्ञ वेदय लघुं द्वारे ऋषिस्तिष्ठति ॥ ६२ ॥

श्रुत्वा चाशु प्रविश्य राजभवनं राज्ञस्तमाख्यातवान्
द्वारे देव तपस्वि तिष्ठति महान् जीर्णो ऋषिर्जर्जरः ।
सो चापी अभिनन्दते ऋषिवरः प्रावेष्टु राज्ञो गृहं
आज्ञा दीयतु ताव पार्थिववरा देमि प्रवेशं तसा[9] ॥ ६३ ॥

स्थाप्या चासनमस्य चाह नृपतिः गच्छ प्रवेशं दद
असितः सारथिवाक्य श्रुत्व मुदितः प्रीत्या सुखेनान्वितः ।
शीतं वारि यथाभिकाङ्क्षि तृषितो भुक्त्वादितो चाशनं L 110
तद्वत्सुख्यभिनन्दितो[10] ऋषिवरः तं द्रष्टु सत्त्वोत्तमम् ॥ ६४ ॥

जय भोः पार्थिव इत्युवाच मुदितो चायुं[11] चिरं पालय
वृद्धिं कृत्व निषण्ण दान्तमनसः शान्तेन्द्रियः सूरतः ।
राजा वै अभिवाद्य तं सुनिभृतं[12] प्रोवाच किं कारणं
आगामस्तव पार्थिवेन्द्र निलये तद्[13] ब्रूहि शीघ्रं मुने ॥ ६५ ॥

पुत्रस्ते वररूप पारमिगतो जातो महातेजवान्
द्वात्रिंशद्वरलक्षणैः कवचितो नारायणस्थामवान् ।
तं द्रष्टुं हि ममेप्सितं नरपते सर्वार्थसिद्धं शिशुम्[14]
इत्यर्थं समुपागतोऽस्मि नृपते नास्त्यन्यकार्यं मम ॥ ६६ ॥ R 126

---

१ R शृणुयां for °या. २ R दिव्यानु °for दिव्यान. ३ R रतनस्येह for रतनस्या इव. ४ R जातं for जातो. ५ R °भरितं for °भरितो. ६ R °स्थामवत् for °वान्. ७ R संवर्धितं for °र्धितः. ८ R आगत्या for आगत्वा. ९ L तया for तसा ( = तस्य) १० R सौख्यभिनन्दते for सुख्यभिनन्दितो. ११ चायुश्चिरं for चायुं चिरं. १२ R मुनिवरं for सुनिभृतं. १३ R यद् for तद्. १४ R सुतं for शिशुम्.

साधु स्वागतु याचसे किल[1]मितः प्रीतोऽस्मि ते दर्शनात्
एषोऽसौ शयितः कुमार वरदो द्रष्टुं न शक्योऽधुना ।
साधू[2] ताव मूहूर्तमागम इहा यद्[3] द्रक्ष्यसे निर्मलं
चन्द्रं वा यथ पूर्णमासि विमलं तारागणैर्मण्डितम् ॥ ६७ ॥
यद[4] चासौ प्रतिबुद्ध सारथिवरः परिपूर्णचन्द्रप्रभः
तद राजा प्रतिगृह्य वह्निवपुषं सूर्यातिरेकप्रभम् ।
हन्ता पश्य ऋषे नृदेवमहितं हेमाग्रबिम्बोपमम्
असितो दृष्ट्व च तस्य तौ सुचरणौ चक्राङ्कितौ शोभनौ ॥ ६८ ॥
प्रत्युत्थाय ततः कृताञ्जलिपुटो चरणानि सो वन्दते
अङ्के गृह्य महात्मशास्त्रकुशलो निध्यायतो प्रेक्षते ।
सोऽपश्यद्वरलक्षणैः कवचितं नारायणस्थामवं
शीर्षं कम्प्य स वेदशास्त्रकुशलो द्वे तस्य पश्यद्गती[5] ॥ ६९ ॥
L 111 राजा वा भवि चक्रवर्ति बलवान् बुद्धो[6] व लोकोत्तमः
बाष्पं त्यक्त[7] सुदीनकायमनसो गम्भीर निश्वस्य च ।
उद्विग्नश्च बभूव पार्थिववरः किं ब्राह्मणो रोदिती
मा विघ्नं खलु पश्यतेऽयमसितः सर्वार्थसिद्धस्य मे ॥ ७० ॥
भूतं व्याहर किं तु[8] रोदिषि ऋषे श्रेयोऽथ किं पापकं
पापं नास्ति न चान्तरायमिह भोः सर्वार्थसिद्धस्य ते ।
R 127 आत्मानं बहु शोचमी नरपते जीर्णोऽस्मि यज्जर्जरः
यदयं भेष्यति बुद्ध लोकमहितो धर्मं यदा वक्ष्यते ॥ ७१ ॥
न द्रक्षे अहु लब्धप्रीतिमनसो[9] इत्यर्थ रोदाम्यहं
यस्या कायि भवन्ति लक्षणवरा द्वात्रिंशति निर्मला ।
द्वे तस्या गतयो न अन्य तृतिया जानीष्व एवं नृप
राजा वा भवि चक्रवर्ति बलवान् बुद्धोऽथ लोकोत्तमः ॥ ७२ ॥
नायं कामगुणेभिरर्थिकु पुनः बुद्धो अयं भेष्यति
श्रुत्वा व्याकरणं ऋषेः स नृपतिः प्रीतिं सुखं लब्धवान् ।
प्रत्युत्थाय ततः कृताञ्जलिपुटो चरणावसौ वन्दते
देवैस्त्वं स्वभिपूजितः सुबलवान् ऋषिभिश्च संवर्णितः ॥ ७३ ॥
वन्दे त्वां वरसार्थवाह[10] त्रिभवे सर्वे जगे[11] पूजितं
असितः प्राह च भागिनेय मुदितः संश्रूयतां भाषतो ।

---

१ R किल इतः for किलमितः. २ R साधुस्तावन्मुहूर्तम् for साधू ताव मुहूर्तम्. ३ R यद्रक्ष्यसे for यद् द्रक्ष्यसे. ४ R यद्वासौ for यद चासौ. ५ R पश्यं गती for पश्यद्गती. ६ R बुद्धश्च for बुद्धो व. ७ R त्यक्त्व for त्यक्त. ८ R किं नु for किं तु. ९ R °मनसं for °मनसो. १० R °सार्थबाहु for °सार्थवाह. ११ R जगत्पूजितं for जगे पूजितं.

बुद्धा बोधि यदा शृणोषि जगतो वर्तेति चक्रं[1] ह्ययं
शीघ्रं प्रव्रज शासनेऽस्य मुनये तत्[2]प्राप्स्यसे निर्वृतिम् ॥ ७४ ॥

वन्दित्वा चरणौ ह्यसौ मुनिवरः कृत्वा च प्रादक्षिणं
लाभा ते नृपते सुलब्ध विपुला यस्येदृश[3]स्ते सुतः ।
एषो लोक सदेवकं समनुजं धर्मेण तर्पेष्यति
निष्क्रामं कपिलाह्वयादृषिवरोऽरण्ये स्थितः स्वाश्रमे ॥ ७५ ॥ इति ॥ L 112

इति हि भिक्षवो जातमात्रस्य बोधिसत्त्वस्य[4] महेश्वरो देवपुत्रः शुद्धावासकायिकान् देवपुत्रानामन्त्र्यैवमाह – योऽसौ मार्षा असंख्येयकल्पकोटिनियुतशतसहस्रसुकृतकर्मदानशीलक्षान्तिवीर्यध्यानप्रज्ञोपायश्रुतचरणव्रततपःसुचरितचरणः महामैत्रीमहाकरुणामहामुदितासमन्वागतः उपेक्षासमुद्गत[5]चित्तः सर्वसत्त्वहितसुखोद्यतः दृढवीर्यकवचसुसंनाहसंनद्धः पूर्वजिनकृतकुशलमूलोदितः शतपुण्यलक्षणसमलंकृतः सुकृतनिश्चयपराक्रमः परचक्रप्रमथनः सुविमलशुद्धाशयसंपन्नः सुचरितचरणो महाज्ञानकेतुध्वजः मारबलान्तकरणः त्रिसाहस्रमहासाहस्रसार्थवाहः देवमनुष्यपूजितमहा[6]यज्ञयष्टः सुसमृद्धपुण्यनिचयनिःसरणाभिप्रायो जातिजरामरणान्तकरः सुजातजातः इक्ष्वाकुराजकुलसंभूतो जगद्विबोधयिता बोधिसत्त्वो महासत्त्वो मनुष्यलोक उपपन्नः[7] । न चिरादसावनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यते । हन्त गच्छामस्तमभिवन्दितुं मानयितुं पूजयितुमभिस्तोतुमन्येषां च मानाभिभूतानां देवपुत्राणां मानमददर्पच्छेदनार्थम् । तेऽस्मानभिवन्दमानान् दृष्ट्वा तेऽपि बोधिसत्त्वं वन्दिष्यन्ति मानयिष्यन्ति पूजयिष्यन्ति च । तत्तेषां भविष्यति दीर्घरात्रमर्थाय हिताय सुखाय यावदमृताधिगमाय । राज्ञश्च शुद्धोदनस्य जयवृद्धिरनुश्राविता भविष्यति । तत्त्वव्याकरणेन च बोधिसत्त्वं व्याकृत्य पुनरप्यागमिष्याम इति ॥ R 128

अथ खलु महेश्वरो देवपुत्रो द्वादशभिर्देवपुत्रशत[8]सहस्रैः परिवृतः पुरस्कृतः सर्वकपिलवस्तुमहानगरमवभासेन स्फुर[9]यित्वा येन राज्ञः शुद्धोदनस्य निवेशनं तेनोपसंक्रामत् । उपसंक्रम्य दौवारिके[10] निवेद्य राज्ञाभ्यनुज्ञातो राजकुलं प्रविश्य बोधिसत्त्वस्य पादौ शिरसाभिवन्द्यैकांसमुत्तरासङ्गं कृत्वा अनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य[11] बोधिसत्त्वमङ्के समारोप्य राजानं शुद्धोदनमाश्वासयति स्म – तुष्टो महाराज भव परमप्रीतश्च । तत्कस्माद्धेतोः? यथा महाराज बोधिसत्त्वस्य लक्षणैरनुव्यञ्जनैश्च कायः समलंकृतः, यथा च कुमारोऽभिभवति सदेवमानुषासुरलोकं वर्णेन तेजसा च[12] यशसा लक्ष्म्या च, निःसंशयं महाराज बोधिसत्त्वोऽनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यते ॥ L 113 R 129

इति हि भिक्षवो महेश्वरो देवपुत्रः सार्धं शुद्धावासकायिकैर्देवपुत्रैर्बोधिसत्त्वस्य महत्[13]पूजोपस्थानं कृत्वा बोधिसत्त्वं तत्त्वव्याकरणेन व्याकृत्य पुनरपि स्वभवनं प्राक्रामत् ॥

---

१ R चक्रे for चक्रं. २ R त्वं for तत्. ३ R यस्तादृशः for यस्येदृशः. ४ R om. बोधिसत्त्वस्य. ५ R °समुद्गतबुद्धिः for °चित्तः. ६ R °महायष्टयज्ञः for °महायज्ञयष्टः. ७ R उत्पन्नो for उपपन्नः. ८ R om. °शत°. ९ R स्फुटयित्वा for स्फुर°. १० R दौवारिकैराज्ञातो for °रिके निवेद्य. ११ R प्रदक्षिणां निषद्य for °क्षिणीकृत्य. १२ R om. च यशसा. १३ R महापूजो° for महत्पूजो°.

तत्रेदमुच्यते —

जातस्य तस्य गुणसागरसागरस्य
ज्ञात्वा सुरेश्वरमरुद् ब्रुवते उदग्रः।
यस्या सुदुर्लभश्रवो बहुकल्पकोट्या
हन्तेथ तं व्रजम पूजयितुं मुनीन्द्रम् ॥ ७६ ॥

परिपूर्णद्वादशसहस्र मरु[1]द्विशुद्धा
मणिरत्नचूडसमलंकृत ई[2]र्यवन्तः।
कपिलाह्वयं पुरवरं समुपेत्य शीघ्रं
द्वारि स्थिता नरपतेः सुविलम्बचूडाः ॥ ७७ ॥

L 114
R 130 ते द्वारपालमवदन् सुमनोज्ञघोषाः
प्रतिवेदयस्व नृ[3]पते भवनं प्रविश्य।
दौवारिको वचन श्रुत्व गृहं प्रविष्टः
प्र[4]ह्व कृताञ्जलिपुटो नृपतिं बभाषे ॥ ७८ ॥

जय देव नित्यमनुपालय दीर्घमायुः
द्वारे स्थिता विपुलपुण्यविशुद्धभासः।
मणिरत्नचूडसुविभूषित ई[5]र्यवन्तः
परिपूर्णचन्द्रवदना शशिनिर्मलाभाः ॥ ७९ ॥

छायां न तेष नृपते क्वचिदप्यंपश्यन्
शब्दं न चैव चरणोत्क्षिपणे शृणोमि।
न च मेदिनीं विचरतो रजमुत्क्षिपन्ति
तृप्तिं न यान्ति च जनाः स[6]मुदीक्षतां वै ॥ ८० ॥

कायप्रभा सुविपुला च विभाति तेषां
वाचा मनोज्ञ यथ नास्ति ह मानुषाणाम्।
गम्भीरश्लक्ष्णसुशिलाँ च सुआकरा च
शङ्का हि मे सुरगणा न हि ते मनुष्याः ॥ ८१ ॥

वरपुष्पमाल्यअनुलेपनपट्टदामा
पाणी गृहीत्वन उदीक्षिषु गौरवेण।
निःसंशयं नृपति द्रष्टु कुमारमेते
R 131 देवाधिदेव मरुतागत पूजनार्थम् ॥ ८२ ॥

---

१ R मरुद्विशिष्टा for °द्विशुद्धा. २ R ईर्ष्यवन्तः for इर्यवन्तः. ३ R नृपतेर्भवनं for नृपते भवनं. ४ R प्राकृताञ्जलि° for प्रह्व कृता°. ५ R ईर्ष्यवन्तः for इर्यवन्तः. ६ R समुदीक्षतो. ७ R °सुशिलाश्च सुआकराश्च for °सुशिलाँ च सुआकरा च.

राजा निशाम्य वचनं परमं उदग्रो
गच्छा भणाहि प्रविशन्तु गृहं भवन्तः ।
न हि मानुषाण इयमीदृश ऋद्धि काचि
यथ भाषसे च गुण तेष यथा च ईर्या[1] ॥ ८३ ॥ L 115
दौवारिकः कृत[2]पुटो मरुतैवमाह
प्रविशी भवन्त अनुज्ञातु नराधिपेन ।
ते हृष्टतुष्टमनसो वरमाल्य[3]हस्ता
गेहं प्रविष्ट नृपतेरमरालयं वा ॥ ८४ ॥
दृष्ट्वा च तां सुरवरां प्रविशन्त गेहं
प्रत्युत्थितो नृपतिरञ्जलि संप्रगृह्य ।
संविद्ययन्त इम आसन रत्नपादा
अत्रा निषीदत भवन्ननुकम्प्य बुद्ध्या ॥ ८५ ॥
ते मानदर्पविगता स्थित आसनेषु
यस्यार्थि आगत इहा नृपते शृणुष्व ।
पुत्रस्तवातिपृथुपुण्यविशुद्धकायो
जातः सुजातचरणं वय द्रष्टुकामाः ॥ ८६ ॥
अस्मो विधिज्ञ वरलक्षणलक्षणज्ञा
येषां तथा[4] भवति या गति यः प्रयोगः । R 132
तत्साधु पार्थिववर प्रजहस्व खेदं
पश्याम लक्षणविचित्र[5]विभूषिताङ्गम् ॥ ८७ ॥
स स्त्रीगणैः परिवृतो नृपतिः प्रहृष्टो
गृह्य कुमारमसमं[6] ज्वलनार्चिवर्णम् ।
उपनामयन्[7] सुरवरां[8] सुविलम्बचूडां
द्वारात्तु[9] निष्क्रमतु कम्पित त्रिसहस्राः ॥ ८८ ॥
दृष्ट्वैव ते सुरवरा क्रम नायकस्य L 116
ताम्रां[10] नखां विमलपत्रविशुद्धतेजा ।
ते उत्थिता त्वरित रूपविलम्बचूडा
मूर्ध्नाभिवन्दिषु क्रमां[11] विमलप्रभस्य ॥ ८९ ॥
यथ लक्षणा यथ च दर्शित लक्षिता च
यथ पुण्यतेजि[12] शिरि मूर्ध विलोकितं च ।

१ R ईर्ष्या for इर्या. २ R कृताञ्जलिपुटो for कृतपुटो. ३ R °माल्यगन्धा for °हस्ता. ४ R यथा for तथा. ५ R °चित्रित° for °विचित्र°. ६ R °मसमज्वलनार्चिवर्णम्. ७ R उपनामयत for °मयन्. ८ R सुरवरानविलम्ब° for सुरवरां सुविलम्ब°. ९ R द्वारान्त for द्वारात्तु. १० R ताम्रा नखा ... तेजाः for the line. ११ R क्रमं for क्रमां. १२ R पुण्यतेज for °तेजि.

यथ ईर्य नेत्र विमलाप्रभ ऊर्णकोशा
निःसंशयं स्पृशति बोधि विजित्य मारम् ॥ ९० ॥
ते तं स्तुवन्ति गुणभूत यथार्थदर्शी
ध्यायी गुणां विगतक्लेशतमोनुदस्य ।
सुचिरेण सत्त्वरतनस्य हि प्रादुर्भावो
R 133 जातीजरामरणक्लेशरणंजहस्य ॥ ९१ ॥
आदीप्त सर्वत्रिभवं त्रिभिरग्नितप्तं
संकल्परागविषयारणिउच्छ्रितेन ।
त्वं धर्ममेघ त्रिसहस्र स्फरित्वै धीरा
अमृतोदकेन प्रशमेष्यसि क्लेशतापम् ॥ ९२ ॥
त्वं मैत्रवाक्य करुणान्वित श्लक्ष्णवाक्य
ब्रह्मस्वरारचितघोष मनोज्ञवाणिं ।
त्रिसहस्र आँज्ञपरिविज्ञपनी जगस्य
क्षिप्रं प्रमुञ्च भगवन् महबुद्धघोषम् ॥ ९३ ॥
भग्ना कुतीर्थिकगणा विपरीतदृष्टिः
भवरागबन्धननिमग्न स्थिता भवाग्रे ।
L 117 हेतु प्रतीत्य भवे शून्य श्रुणित्व धर्मा
सिंहस्य क्रोष्टुकगणैव पलायिनास्ते ॥ ९४ ॥
भित्त्वा अविद्यपटलं महक्लेशधूमं
पर्युत्थिता जनतये नियतप्रकाशे ।
ज्ञानार्चिप्रज्ञप्रभविद्युविलोकितेन
सर्वं जगे विधमये महदन्धकारम् ॥ ९५ ॥
R 134 लाभा सुलब्ध विपुला मरुमानुषाणां
यत्रोद्भवाऽद्भुत इहेदृशि शुद्धसत्त्वे ।
पिथिता अपायपथ स्फीत मरुत्पथानि
मेष्यन्ति सत्त्वरतनेन विबोधकेन ॥ ९६ ॥
वर्षित्व दिव्यकुसुमां कपिलाह्वयेऽस्मिन्
कृत्वा प्रदक्षिण स्तँवित्व च गौरवेण ।
बुद्ध सुबुद्ध इति वाक्यमुदीरयन्तः
प्रक्रान्त ते सुरगणा गगने सलीलाः ॥ ९७ ॥ इति ॥

इति श्रीललितविस्तरे जन्मपरिवर्तो नाम सप्तमोऽध्यायः ॥

---

१ R ईर्ष्य for इर्य. २ R सत्यरतनस्य. ३ R स्फुटित्व for स्फरित्व. ४ R आज्ञापरिविज्ञापन. ५ R तव for भवे. ६ R विद्यु for प्रज्ञ. ७ R स्तुवित्व. ८ R प्रक्रामन्ते for प्रक्रान्त ते.

# देवकुलोपनयनपरिवर्तोऽष्टमः ।

इति हि भिक्षवो यामेव रात्रिं बोधिसत्त्वो जातस्तस्यामेव रात्र्यां विंशति कन्यासहस्राणि
क्षत्रिय[१]ब्राह्मणनैगमगृहपतिमहाशालकुलेषु जाता[२]ः । ताश्च सर्वा मातापितृभिर्बोधिसत्त्वाय दत्ता
उपस्था[३]नपरिचर्यायै । विंशति च कन्यासहस्राणि राज्ञा शुद्धोदनेन दत्तानि बोधिसत्त्वस्योपस्थान-
परिचर्यायै । विंशति च कन्यासहस्राणि मित्रामात्यज्ञातिसा[४]लोहितैर्दत्तानि बोधिसत्त्वस्योपस्थान- L 118
परिचर्यायै । विंशति च कन्यासहस्राणि अमात्यपार्षद्यैर्दत्तानि बोधिसत्त्वस्योपस्थानपरिचर्यायै ॥

तदा च भिक्षवो महल्लकमहल्लिकाः शाक्याः संनिपत्य राजानं शुद्धोदनमुपसंक्रम्यैवमाहुः— R 135
य[५]त्खलु देव जानीयाः — दे[६]वकुलं कुमार उपनीयतामिति । राजा आह — साधु, उपनीयतां कुमारः ।
तेन हि म[७]ण्डयतां नगरम् । उपशोभ्यन्तां वीथिचत्वरशृङ्गाटकान्तरापणरथ्यामुखानि । अप-
नीयन्ताममङ्गल्याः काणकुब्जबधिरान्धमूकविसंस्थितविरूपरूपा अपरिपूर्णेन्द्रियाः । उपनाम्यन्तां
मङ्गलानि । घुष्यन्तां पुण्यभेर्यः । ताड्यन्तां मङ्गल्यघण्टाः । समलंक्रियन्तां पुरवरद्वाराणि । वाद्यन्तां
सुमनोज्ञतूर्यतालावचराणि । संनिपात्यन्तां सर्वकोट्टराजानः । एकीभवन्तु श्रेष्ठिगृहपत्यमात्यदौवारिक-
पारिषद्याः । युज्यन्तां कन्यारथाः । उपनाम्यन्तां पूर्णकुम्भाः । संनिपात्यन्तामधीयाना ब्राह्मणाः ।
अलंक्रियन्तां देवकुलानि । इति हि भिक्षवो यथोक्तपूर्वं सर्वं कृतमभूत् ॥

ततो राजा शुद्धोदनः स्वगृहं प्रविश्य महाप्र[९]जापतीं गौतमीमामन्त्र्यैवमाह — अलंक्रियन्तां
कुमारः देवकुलमुपनेष्यत इति । साध्विति प्रतिश्रुत्य महाप्रजापती गौतमी कुमारं मण्डयति स्म ॥

ततः कुमारो मण्ड्यमानः प्रहसितवदनो व्यपगतभृकुटिकः प[१०]रममधुरया वाचा मातृस्वसार-
मेवमाह — अम्ब कुत्राहमुपनेष्यत इति । आह — देवकुलं पुत्रेति । ततः कुमारः स्मितमुपदर्शयन्
प्रहसितवदनो मातृस्वसारं गाथाभिरध्यभाषत —

जातस्य मह्यमिह कम्पित त्रिसहस्रं
शक्रश्च ब्रह्म[११] असुराश्च महोरगाश्च । R 136
चन्द्रश्च सूर्य तथ वैश्रवणः कुमारो L 119
मूर्ध्ना क्रमेषु निपतित्व नमस्यन्ति[१२] ॥ १ ॥

कतमोऽन्यु देव मम उत्तरि यो विशिष्टो
यस्मिन् मम प्रणयसे त्वमिहाद्य अम्ब ।
देवातिदेव अहु उत्तमु सर्वदेवैः
देवो न मेऽस्ति सदृशः कुत उत्त[१३]रं वा ॥ २ ॥

लोकानुवर्तन प्रती इति अम्ब यास्ये
दृष्ट्वा विकुर्वित ममा जनता उदग्राः ।

१ R नैगमक्षत्रियब्राह्मणगृहपतिशाक्यकुलेषु for क्षत्रिय ... कुलेषु. २ R जातानि for जाताः. ३ R उपस्थापन° for उपस्थान°. ४ R °श्यालहितैः for सालोहितैः. ५ R तत् for यत्. ६ R देवकुले. ७ R पश्यतां for मण्ड्यतां. ८ R माङ्गल्य° for मङ्गल्य°. ९ R °प्रजावतीं for °प्रजापतीं. १० R परमया for परम°. ११ R ब्रह्मासुराश्च for ब्रह्म असुराश्च. १२ R नमस्यन्ते for नमस्यन्ति. १३ R उत्तरी for उत्तरं.

अधिमात्र गौरव करिष्यति चित्रकार:[1]

ज्ञास्यन्ति देवमनुजा स्वयं[2] देवदेव: ॥ ३ ॥

इति हि भिक्षव: सर्वैर्वर्णै:[3] स्तुतिमङ्गलै: प्रत्युपस्थितैरपरिमितालंकारालंकृतेषु वीथि-
चत्वरशृङ्गाटकान्तरापणमुखेष्वन्त:पुरे[4] कुमारस्य रथमलंकृत्य राजा शुद्धोदनो ब्राह्मणनैगमश्रेष्ठि-
गृहपत्यमात्यकोट्टराजदौवारिकपारिषद्यमित्रज्ञातिपरिवृत: पुरस्कृतो धूपनधूपितेन[5] मुक्तपुष्पाभिकीर्णेन
हयगजरथपत्ति[6]कलिलेनोच्छ्रितछत्रध्वजपताकेन[7] नानातूर्यसंप्रवादितेन मार्गेण कुमारं गृहीत्वा गच्छति
स्म । देवताशतसहस्राणि बोधिसत्त्वस्य रथं वहन्ति स्म । अनेकानि च देवपुत्राप्सर:कोटिनियुत-
R 137 शतसहस्राणि गगनतलगतानि पुष्पवर्षाण्यभिप्रवर्षन्ति स्म । तूर्याणि च प्रवादयन्ति स्म । इति हि
राजा शुद्धोदनो महता राजव्यूहेन महता[8] राजद्धर्या महता राजानुभावेन कुमारं गृहीत्वा देवकुलं
प्रविशति[9] स्म । समनन्तरप्रतिष्ठापितश्च बोधिसत्त्वेन दक्षिणश्चरणयो:[10] क्रमतलस्तस्मिन् देवकुले अथ
L 120 ता अचेतन्यो[11] देवप्रतिमा: तद्यथा – शिवस्कन्दनारायणकुबेरचन्द्रसूर्यवैश्रवणशक्रब्रह्मलोकपाल-
प्रभृतय: प्रतिमा: – सर्वा: स्वेभ्य: स्वेभ्य: स्थानेभ्यो व्युत्थाय बोधिसत्त्वस्य क्रमतलयोर्निपतन्ति
स्म । तत्र देवमनुष्य[12]शतसहस्राणि हीहीकारकिलकिलाप्रमुखै: प्रक्ष्वेडितशतसहस्राणि प्रामुञ्चन् ।
चैलविक्षेपाणि[13] चाकार्षु: । सर्वं च कपिलवस्तुमहानगरं षड्विकारं प्राकम्पितम् । दिव्यानि च कुसुमानि[14]
प्रावर्षन् । तूर्यशतसहस्राणि चाघट्टितानि प्रणेदु: । येषां च देवानां ता: प्रतिमा:, ते सर्वे
स्वस्वरूपमुपदर्श्येमा गाथा अभाषत –

नो मेरू गिरिराज पर्वतवरो जातू नमे सर्षपे[15]

नो वा सागर नागराजनिलयो जातू नमे गोष्पदे ।

चन्द्रादित्य प्रभंकरा प्रभकरा खद्योतके[16] नो नमे

प्रज्ञापुण्यकुलोदितो गुणधर: कस्मान्नमे देवते[17] ॥ ४ ॥

यद्वत् सर्षप गोष्पदे व सलिलं खद्योतका वा भवेत्

एवं च त्रिसहस्र देवमनुजा ये केचि मानाश्रिता: ।

R 138 मेरूसागरचन्द्रसूर्यसदृशो लोके स्वयंभूत्तमो

यं लोको ह्यभिवन्द्य लाभ लभते स्वर्गं तथा निर्वृतिम् ॥ ५ ॥

अस्मिन् खलु पुनर्भिक्षवो बोधिसत्त्वेन महासत्त्वेन देवकुले प्रवेशे[18] संदर्श्यमाने द्वात्रिंशतां
देवपुत्रशतसहस्राणामनुत्तरायां सम्यक्संबोधौ चित्तान्युत्पद्यन्ते । अयं भिक्षवो हेतुरयं प्रत्ययो
येनोपेक्षको बोधिसत्त्वो भवति स्म देवकुलमुपनीयमान इति ॥

इति श्रीललितविस्तरे देवकुलोपनयनपरिवर्तो नाम अष्टमोऽध्याय:[19] ॥

---

१ R विचित्रकार: for चित्र°. २ R स्वयमेव for स्वय (=सो+अयं) देव°. ३ R om. वर्णै:. ४ R अन्त:पुरेऽस्य for अन्त:पुरे. ५ R° धूपेन for °धूपितेन. ६ R °पंक्ति° for °पत्ति°. ७ R °पताका-वैजयन्तीनाना° for °पताकेन नाना°. ८ R महत्या for महता. ९ R प्रवेशयति for प्रविशति. १० R दक्षिणचरण: for दक्षिणश्चरणयो:. ११ R अचेतन्या for °तन्यो. १२ R देवमनुष्या: for °मनुष्य°. १३ R °विक्षेपणानि for °विक्षेपाणि. १४ R पुष्पाणि for कुसुमानि. १५ R सर्षपं for सर्षपे. १६ R खद्योतके for °तके. १७ R नमेद्देवता: for नमे देवते. १८ R प्रविश्य for प्रवेशे. १९ R om. अध्याय:.

# आभरणपरिवर्तो नवमः ।

अथ खलु भिक्षव उदयनो[1] नाम ब्राह्मणो राज्ञः पुरोहित उदायिनः पिता, स पञ्चमात्रैर्ब्राह्मणशतैः परिवृतो हस्तोत्तरे चित्रानक्षत्रे राजानं शुद्धोदनमुपसंक्रम्यैवमाह – यत्खलु देवो[2] जानीयादाभरणानि कुमाराय[3] क्रियन्तामिति । तं राजा आह – बाढम् । गाढं क्रियतामिति ॥

तत्र राज्ञा शुद्धोदनेन पञ्चमात्रैश्च शाक्यशतैः पञ्चमात्राण्याभरणशतानि कारितान्यभूवन् । तद्यथा – हस्ताभरणानि पादाभरणानि मूर्धाभरणानि कण्ठाभरणानि मुद्रिकाभरणानि कर्णिकाया[4]केयूराणि मेखला[5]सुवर्णसूत्राणि किङ्किणीजालानि रत्नजालानि मणिप्रत्युप्तानि[6] पादुका नानारत्नसमलंकृता हाराः कटका हर्षा मुकुटानि । कारयित्वा च पुष्यनक्षत्रयोगेनानुयुक्तेन ते शाक्या राजानं शुद्धोदनमुपसंक्रम्यैवमाहुः – हन्त देव मण्ड्यतां कुमार इति । राजा आह – अलमलंकृतश्च पूजितश्च भवद्भिः कुमारः । मयापि (कुमारस्य) सर्वाभरणानि कारितानि । तेऽवोचन् – सप्तसप्तरात्रिंदिवान्यप्यस्माकमाभरणानि कुमारः काय आबध्नातु । ततोऽस्माकममोघो व्यायामो भविष्यतीति ॥ R 139

तत्र रात्रौ विनिर्गतायामादित्य उदिते विमलव्यूहनामोद्यानं तत्र बोधिसत्त्वो निर्गतो[7]ऽभूत् । तत्र महाप्रजापत्या[8] गौतम्या बोधिसत्त्वोऽङ्के गृहीतोऽभूत् । अशीतिश्च स्त्रीसहस्राणि प्रत्युद्गम्य बोधिसत्त्वस्य वदनं प्रेक्षन्ते स्म । दश च कन्यासहस्राणि प्रत्युद्गम्य बोधिसत्त्वस्य वदनं प्रेक्षन्ते स्म । पञ्च च ब्राह्मणसहस्राणि प्रत्युद्गम्य बोधिसत्त्वस्य वदनं प्रेक्षन्ते स्म । तत्र यानि भद्रिकेण शाक्यराजेनाभरणानि कारितान्यभूवन्, तानि बोधिसत्त्वस्य काये आबध्यन्ते स्म । तानि समनन्तराबद्धानि बोधिसत्त्वस्य कायप्रभया जिह्मीकृतान्यभूवन्, न भासन्ते स्म, न तपन्ति स्म, न विरोचन्ते स्म । तद्यथापि नाम जाम्बूनदस्य सुवर्णस्य पुरतो मसिपिण्ड उपनिक्षिप्तो न भासति न तपति न विरोचते, एवमेव तान्याभरणानि बोधिसत्त्वस्य कायप्रभयास्पृष्टानि[9] न भासन्ते न तपन्ति न विरोचन्ते स्म । एवं या या आभरणविकृति[10]र्बोधिसत्त्वस्य काये आबध्यते स्म, सा सा जिह्मीभवति स्म तद्यथापि नाम मसिपिण्डः ॥ L 122

तत्र विमला[11] नामोद्यानदेवता सा औदारिकमात्मभावमभिसंदर्श्य पुरतः स्थित्वा राजानं शुद्धोदनं तं च महान्तं शाक्यगणं गाथाभिरभिभाषते[12] स्म – R 140

सर्वेयं त्रिसहस्र मेदिनी सनगरनिगमा
पूर्णा काञ्चनसंचिता[13] भवेत् सुरुचिर विमला ।

---

१ R उदायनो for उद°. २ R देव जानीया for देवो जानीयाद्. ३ R कुमारस्य for °राय. ४ R कर्णिकाः केयू° for कर्णिकायाकेयू°. ५ R मेखलाः सु° for मेखलासु°. ६ R °प्रत्युप्ताः for प्रत्युप्तानि. ७ R विनिर्गतो for निर्गतो. ८ R °प्रजावत्या for °पत्या. ९ L पृष्टानि For स्पृष्टानि. १० R यान्याभरणानि तानि for या आभरणविकृतिः. ११ R विमलानाम्नी for विमला नाम. १२ R अध्यभाषत for अभिभाषते स्म. १३ R °सिञ्चिता यदि for °संचिता भवेत्.

एका[1] काकिणि जाम्बुकाञ्चने भवति उपहता[2]
ना भासी इतरः स काञ्चन प्रभसिरिरहितः ॥ १ ॥

जाम्बूकाञ्चनसंनिभा पुनर्भवेत् सकर[3] इय मही
रोमे आभ प्रमुक्त नायके हिरिसिरिभरिते ।
ना भासी न तपी न शोभते न च प्रभवति
आभाये सुगतस्य कायि नो भवति यथ मसिः ॥ २ ॥

स्वे तेजेन अयं स्वलंकृतो गुणशतभरितो
नो तस्याभरणा[4] विरोचिषू सुविमलवपुषः ।
L 123 चन्द्रसूर्यप्रभाश्च[5] ज्योतिषा तथ मणिज्वलनाः
शक्रब्रह्मप्रभा न भासते पुरत शिरिघने ॥ ३ ॥

यस्या लक्षणि[6] कायु चित्रितः पुरिम[7]शुभफलैः
किं तस्याभरणेभिरित्वरैः परकृतकरणैः ।
अपनेथा भरणा म हेठता अबुध बुधकरं
नायं कृत्तिमभूषणार्थिक परममतिकरः ॥ ४ ॥

चेटस्याभरणानि देथिमे सुरुचिर विमला
R 141 सहजातो य[8] सुभूषि छन्दको नृपतिकुलशुभे ।
तुष्टा शाकिय विस्मिताश्च अभवन्प्रमुदितमनसो
वृद्धिः शाक्यकुलनन्दस्य[9] चोत्तमा भविष्यति विपुला ॥ ५ ॥

इत्युक्त्वा[10] सा देवता बोधिसत्त्वं दिव्यैः पुष्पैरभ्यवकीर्य तत्रैवान्तरधात्[11] ॥

॥ इति श्रीललितविस्तरे आभरणपरिवर्तो नाम नवमोऽध्यायः ॥

१ R एकाकिनी for एका काकिण. २ R उपगता for °हता. ३ R सकल for सकर. ४ R आभरणानि for आभरणा. ५ L °प्रभश्च. for °प्रभाश्च. ६ R लक्षण for लक्षणि. ७ R परम° for पुरिम°. ८ R यत for य. ९ R °नन्दनस्य for °नन्दस्य. १० R इत्युक्त्वासौ for °क्त्वा सा. ११ R अन्तर्दधे for अन्तरधात.

## १०

# लिपिशालासंदर्शनपरिवर्तो दशमः ।

इति हि भिक्षवः संवृद्धः कुमारः । तदा माङ्गल्यशतसहस्रैः लिपिशालामुपनीयते स्म दशभिर्दारकसहस्रैः परिवृतः पुरस्कृतः, दशभिश्च रथसहस्रैः खादनीयभोजनीयस्वादनीयपरिपूर्णैर्हिरण्यसुवर्णपरिपूर्णैश्च । येन कपिलवस्तुनि महानगरे वीथिचत्वररथ्यान्तरापणमुखेष्वभ्यवकीर्यते स्म[1] अभिविश्राम्यन्ते । अष्टाभिश्च तूर्यशतसहस्रैः प्रघुष्यमाणैर्[2]महता च पुष्पवर्षेणाभिप्रवर्षता वितर्दिनिर्यूहतोरणगवाक्षहर्म्यकूटागारप्रासादतलेषु कन्याशतसहस्राणि सर्वालंकारभूषिताः स्थिता अभूवन् । बोधिसत्त्वं[3] प्रेक्षमाणाः कुसुमानि च क्षिपन्ति स्म । अष्टौ च मरुत्कन्यासहस्राणि विगलितालंकाराभरणालंकृतानि रत्नभद्रंकरेण गृहीतानि मार्गं शोधयन्त्यो बोधिसत्त्वस्य पुरतो गच्छन्ति स्म । देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगाश्चार्धकायिका गगनतलात्पुष्पपट्टदामान्यभिप्रलम्बयन्ति स्म । सर्वे च शाक्यगणाः शुद्धोदनं राजानं पुरस्कृत्य बोधिसत्त्वस्य पुरतो गच्छन्ति स्म । अनेनैवंरूपेण व्यूहेन बोधिसत्त्वो लिपिशालामुपनीयते स्म ॥ L 124 R 142

समनन्तरप्रवेशितश्च बोधिसत्त्वो लिपिशालाम् । अथ विश्वामित्रो नाम दारकाचार्यो बोधिसत्त्वस्य श्रियं तेजश्चासहमानो धरणितले निविष्टोऽधोमुखः प्रपतति स्म । तं तथा प्रपतितं दृष्ट्वा शुभाङ्गो नाम तुषितकायिको देवपुत्रो दक्षिणेन करतलेन परिगृह्योत्थापयति[4] स्म । उत्थाप्य च गगनतलस्थो राजानं शुद्धोदनं तं च महान्तं जनकायं[5] गाथाभिरभ्यभाषत् –

शास्त्राणि यानि प्रचलन्ति मनुष्यलोके[6]
संख्या लिपिश्च गणनापि च धातुतन्त्रम् ।
ये शिल्पयोग पृथु लौकिक अप्रमेयाः
तेष्वेषु शिक्षितु पुरा बहुकल्पकोट्यः ॥ १ ॥

किं तू जनस्य अनुवर्तनतां करोति
लिपिशालमागतु सुशिक्षितु शिष्यणार्थम् ।
परिपाचनार्थ बहुदारक अग्रयाने
अन्यांश्च सत्त्वनयुतानमृते विनेतुम् ॥ २ ॥

लोकोत्तरेषु चतुसत्यपथे विधिज्ञो L 125
हेतुप्रतीत्यकुशलो यथ संभवन्ति ।
यथ चानिरोधक्षयु संस्थितु शीतिभावः R 143
तस्मिन्विधिज्ञ किमथो लिपिशास्त्रमात्रे ॥ ३ ॥

नेतस्य आचरिय उत्तरि वा त्रिलोके
सर्वेषु देवमनुजेष्वयमेव जेष्ठः[7] ।

---

१ R स्माभिर्विश्राम्यन्ते for स्म अभिवि°. २ R घोष्यमानैः for प्रघुष्यमाणैः. ३ R om. बोधिसत्त्वं प्रेक्षमाणाः कुसुमानि च क्षिपन्ति स्म. ४ R उत्थापयामास for उत्थापयति स्म. ५ R जननिकायं for जनकायं. ६ R च देवलोके for मनुष्यलोके. ७ R ज्येष्ठः.

नामापि[1] तेष लिपिनां न हि वित्थ यूयं
यत्रेषु शिक्षितु पुरा बहुकल्पकोट्यः ॥ ४ ॥

सो चित्त[2]धार जगतां विविधा विचित्रा
एकक्षणेन अयु जानति शुद्धसत्त्वः ।
अदृश्यरूपरहितस्य गतिं च वेत्ति
किं वा पुनोऽथ लिपिनोऽक्षरदृश्यरूपाम् ॥ ५ ॥

इत्युक्त्वा स देवपुत्रो बोधिसत्त्वं दिव्यैः कुसुमैरभ्यर्च्य तत्रैवान्तर्दधे । तत्र धात्र्यश्च चेटीवर्गाश्च स्थापिता अभूवन् । परिशेषाः शाक्याः शुद्धोदनप्रमुखाः प्रक्रामन्तः[3] ॥

अथ बोधिसत्त्व उरगसारचन्दनमयं लिपिफलकमादाय दिव्यार्ष[4]सुवर्णतिरकं समन्तान्मणिरत्नप्रत्युप्तं विश्वामित्रमाचार्यमेवमाह — कतमां मे भो उपाध्याय लिपिं शिक्षापयसि[5] । ब्राह्मीखरोष्टीपुष्करसारिं अङ्गलिपिं वङ्गलिपिं मगधलिपिं मङ्गल्यलिपिं अङ्गुलीयलिपिं शकारिलिपिं ब्रह्मवलि[6]लिपिं पाँरुष्य[7]लिपिं द्राविडलिपिं किरात[8]लिपिं दाक्षिण्य[9]लिपिं उग्रलिपिं संख्यालिपिं अनुलोमलिपिं अवमूर्ध[10]-
L 126 R 144 लिपिं दरदलिपिं खाष्य[11]लिपिं चीनलिपिं लूनलिपिं हूणलिपिं मध्याक्षरविस्तरलिपिं पुष्पलिपिं देवलिपिं नागलिपिं यक्षलिपिं गन्धर्वलिपिं किन्नरलिपिं महोरगलिपिं असुरलिपिं गरुडलिपिं मृगचक्र[12]लिपिं वायसरुत[13]लिपिं भौमदेवलिपिं अन्तरीक्षदेवलिपिं उत्तरकुरुद्वीपलिपिं अपरगोडानीलिपिं पूर्वविदेहलिपिं उत्क्षेपलिपिं निक्षेपलिपिं विक्षेपलिपिं प्रक्षेपलिपिं सागरलिपिं वज्रलिपिं लेखप्रतिलेखलिपिं अनुद्रुतलिपिं शास्त्रावर्तां गणनावर्तलिपिं उत्क्षेपावर्तलिपिं निक्षेपावर्तलिपिं पादलिखितलिपिं द्विरुत्तरपदसंधिलिपिं यावद्दशोत्तरपदसंधिलिपिं मध्याहारिणी[14]लिपिं सर्वरुतसंग्रहणीलिपिं विद्यानुलोमाविमि[15]श्रितलिपिं ऋषितपस्तप्तां रोचमानां धरणीप्रेक्षिणीलिपिं गगनप्रेक्षिणीलिपिं सर्वौषधिनिष्यन्दां सर्वसारसंग्रहणीं सर्वभूतरुतग्रहणीम् । आसां भो उपाध्याय चतुष्षष्टीलिपीनां कतमां त्वं शिष्यापयि[16]ष्यसि ?

अथ विश्वामित्रो दारकाचार्यो विस्मितः प्रहसितवदनो निहतमान[17]मदर्प इमां गाथामभाषत —

आश्चर्यं शुद्धसत्त्वस्य लोके लोकानुवर्तिनो ।
शिक्षितः सर्वशास्त्रेषु लिपिशालामुपागतः ॥ ६ ॥

येषामहं नामधेयं लिपीनां न प्रजानमि ।
तत्रैष शिक्षितः सन्तो लिपिशालामुपागतः ॥ ७ ॥

वक्त्रं चास्य न पश्यामि मूर्धानं तस्य नैव च ।
शिष्यिष्ये[18] कथं ह्येनं लिपिप्रज्ञाय[19] पारगम् ॥ ८ ॥

---

१ R नामानि for नामापि. २ R यश्चित्रधार for सो चित्त°. ३ R प्राक्रामन्त for प्रक्रामन्तः. ४ R दिव्यवर्णकं सुवर्ण° for दिव्यार्षसुवर्ण. ५ शिक्षयिष्यसि for शिक्षापयसि. ६ R ब्रह्मवल्ली° for ब्रह्मवली°. ७ R मनुष्य° for पारुष्य°. ८ R किनारि° for किरात°. ९ R दक्षिण° for दाक्षिण्य°. १० R अद्धधानु° for अवमूर्ध°. ११ R खास्य° for खाष्य°. १२ R मृगलिपिं चक्रलिपिं for मृगचक्र°. १३ R मरुल्लिपिं for वायसरुत°. १४ R अध्यहारिणि° for मध्याहारिणी. १५ R विद्यानुलोमलिपिं विमि° for लोमाविमि°. १६ R शिक्षयिष्यसि for शिष्यापयि°. १७ R हतमददर्प for निहतमानमद°. १८ R शिक्षयिष्ये. १९ R °प्रज्ञापारगम् for °प्रज्ञाय पारगम्.

देवदेवो ह्यतिदेवः सर्वदेवोत्तमो विभुः ।
असमश्च विशिष्टश्च लोकेष्वप्रतिपुद्गलः ॥ ९ ॥
अस्यैव त्वनुभावेन प्रज्ञोपाये[1] विशेषतः । R 145
शिक्षितं शिष्यियिष्यामि[2] सर्वलोकपरायणम् ॥ १० ॥ L 127

इति हि भिक्षवो दश दारकसहस्राणि बोधिसत्त्वेन सार्धं लिपिं शिष्यन्ते स्म । तत्र बोधिसत्त्वाधिस्थानेन तेषां दारकाणां मातृकां वाचयतां यदा अकारं परिकीर्तयन्ति स्म, तदा अनित्यः सर्वसंस्कारशब्दो निश्चरति स्म । आकारे परिकीर्त्यमाने आत्मपरहितशब्दो निश्चरति स्म । इकारे इन्द्रियवैकल्यशब्दः[3] । ईकारे ईतिबहुलं जगदिति । उकारे उपद्रवबहुलं जगदिति । ऊकारे ऊनसत्त्वं जगदिति । एकारे एषणासमुत्थानदोषशब्दः । ऐकारे ऐर्यापथः[4] श्रेयानिति । ओकारे ओघोत्तरशब्दः । औकारे औपपादुकशब्दः । अंकारे अमोघोत्पत्तिशब्दः । अःकारे अस्तंगमनशब्दो निश्चरति स्म । ककारे कर्मविपाकावतारशब्दः । खकारे खसमसर्वधर्मशब्दः । गकारे गम्भीरधर्मप्रतीत्यसमुत्पादावतारशब्दः । घकारे घनपटलाविद्यामोहान्धकारविधमनशब्दः । ङकारेऽङ्गविशुद्धिशब्दः । चकारे चतुरार्यसत्यशब्दः । छकारे छन्दरागप्रहाणशब्दः । जकारे जरामरणसमतिक्रमणशब्दः । झकारे झषध्वजबलनिग्रहणशब्दः[5] । ञकारे ज्ञापनशब्दः । टकारे पटोपच्छेदनशब्दः । ठकारे ठपनीयप्रश्नशब्दः । डकारे डमरमारनिग्रहणशब्दः । ढकारे मीढविषया इति । णकारे रेणुक्लेशा इति । तकारे तथतासंभेदशब्दः[6] । थकारे थामबलवेग- R 146
वैशारद्यशब्दः । दकारे दानदमसंयमसौरभ्यशब्दः । धकारे धनमार्याणां सप्तविधमिति । नकारे नामरूपपरिज्ञाशब्दः[7] । पकारे परमार्थशब्दः । फकारे फलप्राप्तिसाक्षात्क्रियाशब्दः । बकारे बन्धनमोक्षशब्दः । भकारे भर्वविभवशब्दः[8] । मकारे मदमानोपशमनशब्दः । L 128
यकारे यथावद्धर्मप्रतिवेधशब्दः[9] । रकारे रत्यरतिपरमार्थरतिशब्दः । लकारे लताछेदनशब्दः । वकारे वरयानशब्दः । शकारे शमथविपश्यनाशब्दः । षकारे षडायतननिग्रहणाभिज्ञज्ञानावाप्तिशब्दः[10] । सकारे सर्वज्ञज्ञानाभिसंबोधनशब्दः । हकारे हतक्लेशविरागशब्दः । क्षकारे परिकीर्त्यमाने क्षणपर्यन्ताभिलाप्यसर्वधर्मशब्दो[11] निश्चरति स्म ॥

इति हि भिक्षवस्तेषां दारकाणां मातृकां वाचयतां बोधिसत्त्वानुभावेनैव प्रमुखान्यसंख्येयानि धर्ममुखशतसहस्राणि निश्चरन्ति स्म ॥

तदानुपूर्वेण बोधिसत्त्वेन लिपिशालास्थितेन द्वात्रिंशद्दारकसहस्राणि परिपाचितान्यभूवन् । अनुत्तरायां सम्यक्संबोधौ चित्तान्युत्पादितानि द्वात्रिंशद्दारिकासहस्राणि । अयं हेतुरयं प्रत्ययो यच्छिक्षितोऽपि बोधिसत्त्वो लिपिशालामुपागच्छति स्म ॥

॥ इति श्रीललितविस्तरे लिपिशालासंदर्शनपरिवर्तो नाम दशमोऽध्यायः ॥

---

१ R प्रज्ञोपायं. २ R शिक्षयिष्यामि. ३ R °वैपुल्य° for °वैकल्य°. ४ R ऐरपथः for ऐर्यापथः. ५ R °ध्वजवर° for °ध्वजबल°. ६ R तथासंभेद° for तथता°. ७ R °परिज्ञान° for °परिज्ञा°. ८ R भवतिभव° for भवविभव°. ९ R °प्रतिषेध° for °प्रतिवेध°. १० R. निग्रहषडभिज्ञ° for °निग्रहणाभिज्ञ°. ११ °भिलाष° for °भिलाप्य°.

११

# कृषिग्रामपरिवर्त एकादशः ।

इति हि भिक्षवो यावद्विवृद्धः कुमारः । अथापरेण समयेन कुमारस्तदन्यैः कुमारैरमात्यपुत्रैः
R 147 सार्धं कृषिग्राममवलोकयितुं गच्छति स्म । अवलोक्य च कृषिकर्मान्तमन्यत उद्यानभूमिं प्रविशति
स्म । संविग्नमनास्तत्र बोधिसत्त्व एकाकी अद्वितीयोऽ[1]नुचंक्रम्यमाणोऽनुविचरन् जम्बुवृक्षमपश्यत्
प्रासादिकं दर्शनीयम् । तत्र बोधिसत्त्वश्छायायां [2]पर्यङ्केन निषीदति स्म । [3]निषण्णश्च बोधिसत्त्वश्चित्तै-
L 129 काग्रतामासादयति स्म । आसाद्य च विविक्तं कामैर्विविक्तं पापकैरकुशलैर्धर्मैः [4]सवितर्कं सविचारं
विवेकजं प्रीतिसुखं प्रथमं ध्यानमुपसंपद्य विहरति स्म । स वितर्कविचाराणां व्युपशमादध्यात्म-
संप्रसादाच्चेतस [5]एकोतिभावादवितर्कमविचारं [6]समाधिजं प्रीतिसुखं द्वितीयं ध्यानमुपसंपद्य विहरति स्म ।
स प्रीतेर्विरागादु[7]पेक्षको विहरति स्म स्मृतिमान् संप्रजानन् । सुखं च कायेन प्रतिसंवेदयति स्म ।
यत्तदार्या आचक्षते उपेक्षकः स्मृतिमान् सुखविहारी निष्प्रीतिकं तृतीयं ध्यानमुसंपद्य विहरति स्म ।
स सुखस्य च प्रहाणाद्दुःखस्य च प्रहाणात् पूर्वमेव च सौमनस्यदौर्मनस्ययोरस्तंगमा[8]ददुःखा-
सुखमुपेक्षास्मृतिपरिशुद्धं चतुर्थं ध्यानमुपसंपद्य विहरति स्म ॥

तेन च समयेन पञ्च ऋषयो बाह्याः पञ्चाभिज्ञाः ऋद्धिमन्तो विहायसंगमा दक्षिणाया दिश
उत्तरां दिशं गच्छन्ति स्म । ते तस्य [9]वनखण्डस्योपरि गच्छन्तः प्रत्याहता इव न शक्नुवन्ति स्म
गन्तुम् । ते संविग्नरोमकूपजाता इमां गाथामभाषन्त —

वयमिह मणिवज्रकूटं गिरिं मेरुमभ्युद्गतं तिर्यगत्यर्थ[10]वैस्तारिकं
गज इव सहकारशाखाकुलं वृक्षवृन्दां प्रदारित्व निर्धावितानेकशः ।
R 148 वयमिह मरूणां पुरे [11]चाप्यसक्ता गता यक्षगन्धर्ववेश्मानि चोर्ध्वं नभे निश्रिता
इम पुन वनखण्डमासाद्य सीदाम भोः कस्य लक्ष्मी निवर्तेति ऋद्धेर्बलम् ॥ १ ॥ इति ॥

L 130 [12]अथ या तत्र वनखण्डदेवता सा तानृषीन् गाथयाध्यभाषत् —

नृपतिपतिकुलोदितः शाक्यराजात्मजो बालसूर्यप्रकाशप्रभः
स्फुटितकमलगर्भवर्णप्रभश्चारुचन्द्राननो लोकज्येष्ठो विदुः ।
अयमिह वनमाश्रितो ध्यानचिन्तापरो देवगन्धर्वनागेन्द्रयक्षार्चितो
भवशतगुणकोटिसंवर्धितस्तस्य लक्ष्मी निवर्तेति ऋद्धेर्बलम् ॥ २ ॥ इति[13] ॥

ततस्तेऽधस्तादवलोकयन्तोऽद्राक्षुः कुमारं श्रिया तेजसा च जाज्वल्यमानम् । तेषामेतदभूत् —
को न्वयं निषण्णः ? [14]मा हैव वैश्रवणो धनाधिपतिर्भवेत् । आहोस्विन्मारः कामाधिपतिः । अथ महोरगेन्द्रः ।

---

१ R °चंक्रममाणो for °चंक्रम्य° . २ R पर्यन्तेन for पर्यङ्केन. ३ R निषद्य च स for निषण्णश्च. ४ R सवितर्केण सुविचारेण for सवितर्कं सविचारं. ५ R एकाभिभावा° for एकोतिभावा°. ६ R om. समाधिजं; L समाधितं. ७ R उपेक्षन्ते for उपेक्षको. ८ R °मादुःखसुखोपेक्षा° for °माददुःखसुखमुपेक्षा°. ९ R वनषण्ड° for वनखण्ड°. १० R °विस्तारिकं for °वैस्तारिकं. ११ R चापि शक्ता for चाप्यसक्ता. १२ R तत्र या for अथ या तत्र. १३ R om. इति. १४ R om. मा हैव.

अथेन्द्रो वज्रधरः । अथ रुद्रः कुम्भाण्डाधिपतिः । अथ कृष्णो महोत्साहः । उत चन्द्रो देवपुत्रः । उत सूर्यः सहस्ररश्मिः । उत राजा चक्रवर्ती भविष्यति ? तस्यां च वेलायामिमां गाथामभाषन्त –

रूपं वैश्रवणातिरेकवपुषं[1] व्यक्तं कुबेरो ह्ययं R 149
आहो वज्रधरस्य चैवं[2] प्रतिमा चन्द्रोऽथ सूर्यो ह्ययम् ।
कामाग्राधिपतिश्च[3] वा प्रतिकृती रुद्रस्य कृष्णस्य वा
श्रीमान् लक्षणचित्रिताङ्गमनघो बुद्धोऽथ वा स्यादयम् ॥ ३ ॥ इति ॥

ततः सा वनदेवता तानृषीन् गाथया प्रत्यभाषत् –

या श्री वैश्रवणे च वै निवसते या वा सहस्रेक्षणे
लोकानां परिपालकेषु चतुर्षु या चासुरेन्द्रश्रिया[4] ।
ब्रह्मे या च सहापतौ निवसते कृष्णे च या च श्रिया
सा श्री प्राप्य इमं हि शाक्यतनयं नोपैति कांचित्कलाम्[5] ॥ ४ ॥

अथ खलु[6] ते ऋषयस्तस्या देवताया वचनमुपश्रित्य धरणीतले प्रतिष्ठन्ते । ते पश्यन्ति L 131
स्म बोधिसत्त्वं ध्यायन्तमानिञ्ज्यमानेन[7] कायेन तेजोराशिमिव ज्वलन्तम् । ते बोधिसत्त्वमुपनिध्याय गाथाभिरभितुष्टुवुः । तत्रैक आह –

लोके क्लेशाग्निसंतप्ते प्रादुर्भूतो ह्ययं ह्रदः ।
अयं तं प्राप्स्यते धर्मं यज्जगद् ह्लादयिष्यति ॥ ५ ॥

अपरोऽप्याह –

अज्ञानतिमिरे लोके प्रादुर्भूतः प्रदीपकः ।
अयं तं प्राप्स्यते धर्मं यज्जगद्भासयिष्यति[8] ॥ ६ ॥

अपरोऽप्याह –

शोकसागरकान्तारे यानश्रेष्ठमुपस्थितम् ।
अयं तं प्राप्स्यते धर्मं यज्जगत्तारयिष्यति ॥ ७ ॥ R 150

अपरोऽप्याह –

क्लेशबन्धनबद्धानां प्रादुर्भूतः प्रमोचकः ।
अयं तं प्राप्स्यते धर्मं यज्जगन्मोचयिष्यति ॥ ८ ॥

अपरोऽप्याह –

जराव्याधिकिलिष्टानां प्रादुर्भूतो भिषग्वरः ।
अयं तं प्राप्स्यते धर्मं जातिमृत्युप्रमोचकम् ॥ ९ ॥

---

१ R °रेकसदृशं for °वपुषं. २ R वैष for चैव. ३ कामोऽङ्गाधि° for कामाग्राधि°. ४ R वासुरेन्द्र° for चासुरेन्द्र°. ५ R कान्तिं किल for कांचित्कलाम्. ६ R om. खलु. ७ R ध्यायन्तं मण्ड्यमानेन for ध्यायन्तमानिञ्ज्यमानेन. ८ R जगन्मोचयिष्यति for जगद्भासयि°.

अथ खलु ते ऋषयो बोधिसत्त्वमाभिर्गाथाभि[1]रभिस्तुत्वा त्रिप्रदक्षिणीकृत्य विहायसा
प्रक्रान्ताः[2] । राजापि शुद्धोदनो बोधिसत्त्वमपश्यन् बोधिसत्त्वेन विना न रमते स्म । सोऽवोचत्-
L 132 कुमारः क्व गतः ? नैनं पश्यामीति । तत्र महाजनकायो[3] निर्धावितोऽभूत् कुमारं परिगवेषमाणः ।
ततोऽन्यतम अमात्यो बोधिसत्त्वं पश्यति स्म जम्बुच्छायायां पर्यङ्कनिषण्णं ध्यायन्तम् । सर्ववृक्षाणां[4]
च तस्मिन् समये छाया परिवृत्ताभूत् । जम्बुच्छाया च बोधिसत्त्वस्य कायं न विजहाति स्म ।
स तं दृष्ट्वा आश्चर्यप्राप्तस्तुष्ट उदग्र[5] आत्तमनाः प्रमुदितः प्रीतिसौमनस्यजातः शीघ्रं शीघ्रं
त्वरमाणरूपो राजानं शुद्धोदनमुपसंक्रम्य गाथाभ्याम[6]ध्यभाषत —

पश्य देव कुमारोऽयं जम्बुच्छायाहि ध्यायति ।
यथा शक्रोऽथवा ब्रह्मा श्रिया तेजेन शोभते ॥ १० ॥
यस्य वृक्षस्य छायायां निषण्णो वरलक्षणः ।
सैनं न जहते छाया ध्यायन्तं पुरुषोत्तमम् ॥ ११ ॥

R 151 अथ राजा शुद्धोदनो येन स जम्बुवृक्षस्तेनोपसंक्रामत् । सोऽद्राक्षीद्बोधिसत्त्वं श्रिया
तेजसा च ज्वलन्तम् । दृष्ट्वा चैमां गाथामभाषत् —

हुताशनो वा गिरिमूर्ध्नि संस्थितः शशीव नक्षत्रगणानुचीर्णः[7] ।
वेपन्ति[8] गात्राणि मि पश्यतो इमं ध्यायन्तु तेजो नु[9] प्रदीपकल्पम् ॥ १२ ॥

स बोधिसत्त्वस्य पादावभिवन्द्येमां गाथामभाषत् —

यदा चासि मुने जातो यदा ध्यायसि चार्चिमन्[10] ।
एकद्विरपि ते नाथ पादौ वन्दे विनायक ॥ १३ ॥

तत्र त्रिफल[11]वाहका दारकाः शब्दं कुर्वन्ति स्म । तानमात्या एवमाहुः — मा[12] शब्दं मा शब्दं
काष्टेति[13] । तेऽवोचन् — किमेतदिति । अमात्या आहुः —

व्यावृत्ते तिमिरनुदस्य मण्डलेऽपि
व्योमाभं शुभवरलक्षणाग्रधारिम् ।
ध्यायन्तं गिरिनिचलं नरेन्द्रपुत्रं
सिद्धार्थं न जहति[14] सैव वृक्षछाया ॥ १४ ॥

L 133 तत्रेदमुच्यते —

ग्रीष्मे वसन्त समुदागत जेष्ठमासे
संपुष्पिते कुसुमपल्लवसंप्रकीर्णे ।
क्रोञ्चामयूरशुकसारिकसंप्रघुष्टे
भूयिष्ठ शाकियसुता अभिनिष्क्रमन्ति ॥ १५ ॥

---

१ R गाथाभिः स्तुत्वा for गाथाभिरभिस्तुत्वा. २ R प्राक्रामन् for प्रक्रान्ताः. ३ R महान् जननिकायो for महाजनकायो. ४ R सा च सर्ववृक्षाणां for सर्ववृक्षाणां च. ५ R उदग्रमनाः for उदग्र. ६ R गाथाभिः for गाथाभ्याम्. ७ R °गणावकीर्णः for °गणानुचीर्णः. ८ R वेधन्ति for वेपन्ति. ९ R तेजेन for तेजो नु. १० R चार्चिष्मन् for चार्चिमन्. ११ R त्रिल° for त्रिफल°. १२ R मा शब्दं (once). १३ R कायंमिति for काष्टेति. १४ R जहाति for जहति.

छन्दोऽभ्युवाच[1] परिवारितु दारिकेभिः R 152
हन्ता कुमार वनि[2] गच्छम लोचनार्थम्।
किं ते[3] गृहे निवसतो हि यथा द्विजस्य
हन्त व्रजाम वय चोदननारिसंघम्॥ १६॥

मध्याह्नकालसमये सुविशुद्धसत्त्वः
पञ्चाशतैः परिवृतैः[4] सह चेटकेभिः।
न च मातु नैव च पितुः प्रतिवेदयित्वा
सोऽबुद्ध निष्क्रमिति गच्छि कृषाणग्रामम्॥ १७॥

तस्मिंश्च पार्थिववरस्य कृषाणग्रामे
जम्बुद्रुमोऽभवदनेकविशालशाखः।
दृष्ट्वा कुमार प्रतिबुद्ध दुखेन चोत्तो
धिक्संस्कृतेति बहुदुःख कृषी करोति॥ १८॥

सो जम्बुछायमुपगम्य विनीतचित्तो
तृणकानि गृह्य स्वय संस्तरु संस्तरित्वा।
पर्यङ्कमाभुजिय उज्जु[5] करित्व कायं
चत्वारि ध्यान शुभ ध्यायि स बोधिसत्त्वः॥ १९॥

पञ्चा ऋषी खगपथेन हि गच्छमाना L 134
जम्बूय मूर्ध्नि न प्रभोन्ति पराक्रमेतुम्।
ते विस्थिता[6] निहतमानमदाश्च भूत्वा R 153
सर्वे समग्रसहिता समुदीक्षयन्तो॥ २०॥

वय मेरुपर्वतवरं तथ चक्रवालान्[7]
निर्भिद्य गच्छम जवेन असज्जमानाः।
ते जम्बुवृक्ष न प्रभोम[8] अतिक्रमेतुं
को न्वत्र हेतुरयमद्य भविष्यतीह॥ २१॥

अवतीर्य मेदिनितले च प्रतिष्ठिहित्वा
पश्यन्ति शाक्यतनयं तहि जम्बुमूले।
जम्बूनदार्चिसदृशं प्रभतेजरश्मिं
पर्यङ्कबन्धु तद ध्यायतु बोधिसत्त्वम्॥ २२॥

---

१ R छन्देत्युवाच. २ R विनिगच्छम for वनि गच्छम. ३ R वो for ते. ४ परिवृतः for °वृतैः. ५ R ऋज्जु for उज्जु. ६ R विस्मिता for विस्थिता. ७ R चक्रवालं for °वालान्. ८ R प्रभाम for प्रभोम.

ते विस्मिता दशनखा करियान मूर्ध्नि
प्रणता कृताञ्जलिपुटा निपतन् क्रमेषु ।
साधो सुजात सुमुखं करुणा[1] जगस्य
शीघ्रं विबुद्ध अमृते विनयस्व सत्त्वान् ॥ २३ ॥

परिवृत्त सूर्य न जही सुगतस्य छाया
ओलम्बते द्रुमवरं यथ पद्मपत्रम् ।
देवा सहस्र बहवः स्थित अञ्जलीभिः
वन्दन्ति तस्य चरणौ कृतनिश्चयस्य ॥ २४ ॥

R 154 शुद्धोदनश्च स्वगृहे परिमार्गमाणः
संपृच्छते क्व नु गतः स हि मे कुमारः ।
L 135 मातृस्वसा अवचि मार्गत नो लभामि
संपृच्छता नरपते क्व गतः कुमारः ॥ २५ ॥

शुद्धोदनस्त्वरितु पृच्छति काञ्चुकीयं
दौवारिकं तथपि चान्तजनं समन्तात् ।
दृष्टं कुमार मम केनेचि[2] निष्क्रमन्तो
शृणुते वैरूपगतु[3] देव कृषाणग्रामम् ॥ २६ ॥

सो शीघ्रमेव त्वरितं सह शाकियेभिः
निष्क्रान्तु प्रेक्षि कृषिग्रामगिरिं प्रविष्टम् ।
यथ सूर्यकोटिनियुतानि समुद्गतानि
तथ प्रेक्षते हितकरं शिरिया ज्वलन्तम् ॥ २७ ॥

मुकुटं च खङ्ग तथ पादुक छोरयित्वा
कृत्वा दशाङ्गुलि शिरे अभिवन्दिते तम् ।
साधू सुभूतवचना ऋषयो महात्मा
व्यक्तं कुमार अभिनिष्क्रमि बोधिहेतोः ॥ २८ ॥

परिपूर्ण द्वादशशता सुप्रसन्नदेवाः
पञ्चाशता उपगता यथ[4] शाकियानाम् ।
दृष्ट्वा च ऋद्धि सुगते गुणसागरस्य
R 155 संबोधिचित्तु जनयं दृढआशयेन ॥ २९ ॥

---

१ R करुणाश्रयस्य for करुणा जगस्य. २ R केन विनिष्क्रमन्तो for केनचि निष्क°. ३ R च रूपं for वरूप°. ४ R तथ for यथ.

  

सो कम्पयित्व त्रिसहस्र अशेषभूमिं
स्मृतु संप्रजानु प्रतिबुद्ध ततः समाधेः ।
ब्रह्मस्वरः[1] पितरमालपते द्युतीमान्
उत्सृज्य तात कृषिग्रामभतो[2] गवेषे[3] ॥ ३० ॥

यदि स्वर्णकार्यु अहु स्वर्ण प्रवर्षयिष्ये L 136
यदि वस्त्रकार्यु अहमेव प्रदास्यि वस्त्रां ।
अथ धान्यकार्यु[4] अहमेव प्रवर्षयिष्ये
सम्यक्प्रयुक्त भव सर्वजगे नरेन्द्र ॥ ३१ ॥

अनुशासयित्व पितरं जनपारिषद्यां
तस्मिन् क्षणे पुरवरं पुन सो प्रवेक्षी ।
अनुवर्तमान जगतः स्थिहते पुरेस्मिं
नैष्क्रम्ययुक्तमनसः सुविशुद्धसत्त्वः ॥ ३२ ॥ इति ॥

॥ इति श्रीललितविस्तरे कृषिग्रामपरिवर्तो नाम एकादशोऽध्यायः ॥

---

१ R ब्रह्मेश्वरः for ब्रह्मस्वरः. २ R कृषियां पुरतो for कृषिग्रामभतो. ३ R गवेषां for गवेष, ४ R वान्यकार्य for धान्यकार्यु.

## शिल्पसंदर्शनपरिवर्तो द्वादशः ।

इति हि भिक्षवः संवृद्धे कुमारे राजा शुद्धोदनोऽपरेण समयेन शाक्यगणेन सार्धं
R 156 संस्थागारे निषण्णोऽभूत् । तत्र ते महल्लकमहल्लकाः[1] शाक्या राजानं शुद्धोदनमेवमाहुः — यत्खलु
देवो[2] जानीयात् । अयं सर्वार्थसिद्धकुमारो नैमित्तिकैर्ब्राह्मणैः कृतनिश्चयैश्च देवैर्यद्भूयसैवं[3] निर्दिष्टो यदि
कुमारोऽभिनिष्क्रमिष्यति, तथागतो भविष्यत्यर्हन् सम्यक्संबुद्धः । उत नाभिनिष्क्रमिष्यति राजा भविष्यति
चक्रवर्ती चतुरङ्गो[4] विजितवान् धार्मिको धर्मराजः सप्तरत्नसमन्वागतः । तस्येमानि सप्त रत्नानि
भविष्यन्ति । तद्यथा—चक्ररत्नं हस्तिरत्नं अश्वरत्नं मणिरत्नं स्त्रीरत्नं गृहपतिरत्नं परिणायकरत्नम् ।
एवं सप्तरत्नम् । संपूर्णं चास्य पुत्रसहस्रं भविष्यति[5] शूराणां वराङ्गरूपिणां परसैन्यप्रमर्दकानाम् ।
स इमं पृथिवीमण्डलमदण्डेनाशस्त्रेणाभिनिर्जित्याध्यावसिष्यति सह धर्मेणेति । तस्मान्निवेशनं
L 137 कुमारस्य क्रियतामिति । तत्र स्त्रीगणपरिवृतो रतिं वेत्स्यति, नाभिनिष्क्रमिष्यति । एवमस्माकं
चक्रवर्तिवंशस्य चानुपच्छेदो भविष्यति । मानिताश्च भविष्यामोऽनवद्याश्च सर्वकोटराजभिः ॥

ततो राजा शुद्धोदन एवमाह — यद्येवं तेन हि व्यवलोकयत कतमा कन्या कुमारस्यानुरूपा स्यात् ।

तत्र पञ्चमात्राणि शाक्यशतानि । एकैक एवमाह — मम दुहिता अनुरूपा स्यात् कुमारस्य । सुरूपा मम दुहितेति ।

राजा प्राह[6] — दुरासदः कुमारः । तत् प्रतिवेदयिष्यामस्तावत् कुमारस्य, कतमा ते कन्या रोचत इति ।

ततश्च ते सर्वे संनिपत्य कुमारस्यैनां प्रकृतिमारोचयन्ति स्म । तान् कुमार उवाच — सप्तमे दिवसे प्रतिवचनं श्रोष्यथेति ॥

R 157 ततो बोधिसत्त्वस्यैतदभवत् —

विदितं[7] मम अनन्त कामदोषाः
सरणसवैरसशोकदुःखमूलाः[8] ।
भयकर विषपत्रसंनिकाशाः
ज्वलननिभा असिधारतुल्यरूपाः ॥ १ ॥

कामगुणि न मेऽस्ति छन्दरागो
नें[9] च अहु शोभमि इस्त्रिगारमध्ये[10] ।
यन्नु[11] अहु वने वसेय तूष्णीं
ध्यानसमाधिसुखेन शान्तचित्तः ॥ २ ॥ इति ॥

---

१ R °महल्लकाद्याः for °महल्लका. २ R देव जानीया for देवो जानीयात्. ३ R भूय एव दिष्टो for भूयसैवं निर्दिष्टो. ४ R om. चतुरङ्गो. ५ R om. भविष्यति. ६ R आह for प्राह. ७ R विदितं मयानन्त° for विदित मम अनन्त°. ८ R °सर्वरास° for °सवैरस°. ९ R न चाहं शोभे for न च अहु शोभमि. १० R ध्यागार° for इस्त्रिगार°. ११ R यो न्वहमुपवने for यन्नु अहु वने.

स पुनरपि मीमांसोपाय[1]कौशल्यमामुखीकृत्य सत्त्वपरिपाकमवेक्षमाणो महाकरुणां संजनय्य[2] तस्यां वेलायामिमां गाथामभाषत –

संकीर्णि[3] पङ्कि पदुमानि विवृद्धिमन्ति[4]
आकीर्ण राज नर[5]मध्यि लभाति पूजाम् ।
यदि[6] बोधिसत्त्व परिवारबलं लभन्ते
तद सत्त्वकोटिनयुतान्यमृते विनेन्ति ॥ ३ ॥ L 138

ये चापि पूर्वक अभूद्विदु बोधिसत्त्वाः
सर्वेभि भार्य सुत दर्शित इङ्गिगाराः ।
न च रागरक्त न च ध्यानसुखेभि भ्रष्टाः
हन्तानुशिक्षयि अहं पि गुणेषु तेषाम् ॥ ४ ॥

न च प्राकृता मम वधू अनुकूल या स्याद्
यस्या न इ[7]ष्यतु गुणा सद सत्यवाक्यम्[8] ।
या चिन्ति मह्यमभिराधयतेऽप्रमत्ता
रूपेण जन्मकुलगोत्रतया सुशुद्धा ॥ ५ ॥

सो[9] गाथलेख लिखिते गुणअर्थयुक्ता R 158
या कन्य ईदृश भवे मम तां वरेथा ।
न ममार्थु प्राकृतजनेन असंवृतेन[10]
यस्या गुणा कथयमी मम तां वरेथा ॥ ६ ॥

या रूपयौवनवरा न च रूपमत्ता
माता स्वसा व यथ वर्तति मैत्रचित्ता ।
त्यागे रता श्रमणब्राह्मणदानशीला
तां तादृशां मम वधूं वरयस्व तात ॥ ७ ॥

यस्या[11] न मानु न खिलो न च दोषमस्ति
न च शाठ्य[12] ईर्ष्य न च माय न उज्जुभ्रष्टा ।
स्वप्नान्तरेऽपि पुरुषे न परेऽभिरक्ता
तुष्टा स्वकेन पतिना शयतेऽप्रमत्ता[13] ॥ ८ ॥

न च गर्विता न पि च उद्धत न प्रगल्भा L 139
निर्मान मानविगतापि च चेटिभूता ।

---

१ R मीमांस्योपाय° for मीमांसोपाय°. २ L संजानय्य for संजनय्य. ३ R संकीर्ण° for संकीर्णि. ४ R विवृद्धिमेन्ति. ५ R जलमध्यि. ६ R यदि. ७ R ईर्ष्यदि for इष्यतु. ८ R सत्यवाक्या. ९ R सा. १० R असंस्कृतेन for असंवृतेन. ११ R यस्यावमानुरखिलो for यस्या न मानु न खिलो. १२ R द्रव्य for शाठ्य. १३ R संयता for अप्रमत्ता.

न च पानगृद्ध न रसेषु न शब्दगन्धे
निर्लोभमिध्य[1]विगता स्वधनेन तुष्टा ॥ ९ ॥

सत्ये स्थिता न पि च चञ्चल नैव भ्रान्ता
न च उद्धतोन्नतस्थिता हिरिवस्त्रछन्ना ।
न च दृष्टिमङ्गलरता सद धर्मयुक्ता
R 159 कायेन वाच मनसा सद शुद्धभावा ॥ १० ॥

न च स्त्यानमिद्धबहुला न च मानमूढा
मीमांसयुक्त सुकृता सद धर्मचारी ।
श्वश्रौ च तस्य श्वशुरे यथ शास्तृप्रेमा
दासी कलत्र जनि यादृशमात्मप्रेम ॥ ११ ॥

शास्त्रे विधिज्ञ कुशला गणिका यथैव
पश्चात् स्वपेत् प्रथममुत्थिहते च शय्यात् ।
मैत्रानुवर्ति अकुहापि च मातृभूता
एतादृशीं मि नृपते वधुकां वृणीष्व ॥ १२ ॥ इति[2] ॥

अथ खलु भिक्षवो राजा शुद्धोदन इमा गाथा वाचयित्वा पुरोहितमामन्त्रयते स्म-गच्छ त्वं महाब्राह्मण कपिलव[3]स्तुमहानगरे । सर्वगृहाण्यनुप्रविश्य कन्या व्यवलोकय । यस्या एते गुणाः संविद्यन्ते क्षत्रियकन्याया वा ब्राह्मणकन्याया वा वैश्यकन्याया वा शूद्रकन्याया वा तां कन्यामस्माकं प्रतिवेदय । तत्कस्माद्धेतोः ? न हि कुमारः कुलार्थिको न गोत्रार्थिकः । गुणार्थिक एव कुमारः ॥

L 140 तस्यां च वेलायामिमां गाथामभाषत —

ब्राह्मणीं क्षत्रियां कन्यां वैश्यां शूद्रीं तथैव च ।
यस्या एते गुणाः सन्ति तां मे कन्यां प्रवेदय ॥ १३ ॥
R 160 न कुलेन न गोत्रेण कुमारो मम विस्मितः ।
गुणे सत्ये च धर्मे च तत्रास्य रमते मनः ॥ १४ ॥ इति ॥

अथ खलु भिक्षवः स पुरोहितस्तं गाथालेखं गृहीत्वा कपिलवस्तुनि महानगरे गृहाद्गृहं व्यवलोकयन् गत्वा हिण्डन् कन्यां पर्येषते स्म । एवंगुणयुक्तामपश्यन् ( न चैव गुणयुक्तां कन्यां ) । सोऽनुपूर्वेण विचरन्[4] येन दण्डपाणेः शाक्यस्य निवेशनं तेनोपसंक्रामत् । स तं निवेशनं प्रविष्टोऽद्राक्षीत् कन्यामभिरूपां प्रासादिकां दर्शनीयां परमया शुभवर्णपुष्क[5]रतया समन्वागतां नातिदीर्घां नातिह्रस्वां नातिस्थूलां नातिकृशां नातिगौरां नातिकृष्णां प्रथमयौवना[6]वस्थां स्त्रीरत्नमिव ख्यायमानाम् ।

---

१ R °भिक्ष° for °भिध्य°. २ R om. इति. ३ R °वस्तुनि महा° for °वस्तुमहा°. ४ R विचरन्नेव for विचरन् येन. ५ °पुष्कल° R °पुष्कर°. ६ R °यौवनावस्थिता for °नावस्थां.

अथ सा दारिका पुरोहितस्य चरणौ गृहीत्वा एवमाह – केन ते महाब्राह्मण कार्यम् ?

पुरोहित आह –

> शुद्धोदनस्य तनयः परमाभिरूपो
> 　द्वात्रिंशलक्षणधरो गुणतेजयुक्तः ।
> तेनेति गाथ लिखिता गुणये वधूनां
> 　यस्या गुणास्ति हि इमे स हि तस्य पत्नी ॥ १५ ॥

स तस्यास्तं लेखमुपनामयति स्म ॥

अथ सा दारिका तं गाथालेखं वाचयित्वा स्मितमुपदर्श्य तं पुरोहितं गाथयाभ्यभाषत् –

> मह्येति ब्राह्मण गुणा अनुरूप सर्वे L 141
> 　सो मे पतिर्भवतु सौम्य सुरूपरूपः ।
> भणहि कुमारु यदि कार्य म हू[1] विलम्ब
> 　मा हीनप्राकृतजनेन भवेय वासः ॥ १६ ॥ इति[2] ॥

अथ स खलु पुरोहितो राजानं शुद्धोदनमुपसंक्रम्यैव तमर्थमारोचयति स्म – दृष्टा मया देव कन्या या कुमारस्यानुरूपा स्यात् । आह – कस्यासौ ? आह – दण्डपाणेर्देव शाक्यस्य दुहिता ॥

अथ राज्ञः शुद्धोदनस्यैतदभवत् – दुरासदः कुमारः शुभाधिमुक्तश्च । प्रायेण च मातृग्रामोऽसंविद्यमानगुणोऽपि गुणानामात्मनि[3] प्रजानीते[4] । यन्न्वहमशोकभाण्डकानि कारयेयम्, यानि कुमारः सर्वदारिकाभ्योऽनुप्रयच्छेत् । तत्र यस्यां दारिकायां कुमारस्य चक्षुरभिनिवेक्ष्यति[5], तां कुमारस्य वरयिष्यामीति ॥

अथ खलु राजा शुद्धोदनोऽशोकभाण्डानि कारयति स्म[6] सुवर्णमयानि रूप्यमयानि नानारत्नमयानि । कारयित्वा च कपिलवस्तुनि महानगरे[7] घण्टाघोषणां कारयामास – सप्तमे दिवसे कुमारो दर्शनं दास्यति, अशोकभाण्डकानि च दारिकाभ्यो विश्राणयिष्यति । तत्र सर्वदारिकाभिः संस्थागारे संनिपतितव्यमिति ॥

इति हि भिक्षवः सप्तमे दिवसे बोधिसत्त्वः संस्थागारमुपसंक्रम्य भद्रासने न्यषीदत् । राजापि शुद्धोदनोऽदृश्यपुरुषान् स्थापयति स्म – यस्यां दारिकायां कुमारस्य चक्षुः संनिविशेत्, तां ममारोचयध्वमिति ॥ R 162

इति हि भिक्षवो यावन्त्यः कपिलवस्तुनि महानगरे दारिकास्ताः सर्वा येन संस्थागारो येन च बोधिसत्त्वस्तेनोपसंक्रामन् बोधिसत्त्वस्य दर्शनाय अशोकभाण्डकानि च प्रतिगृहीतुम्[8] ॥ L 142

---

१ R मा for म हू. २ R om. इति. ३ R गुणानात्मनि for गुणानामात्मनि. ४ R प्रतिजानीते for प्रजा°. ५ R °वेक्ष्यति for °वेक्ष्यति. ६ After स्म, R adds वैडूर्यमयानि. ७ R °नगरवरे for °नगरे. ८ R ग्रहीतुम् for प्रतिगृहीतुम्.

इति हि भिक्षवो बोधिसत्त्वो यथागताभ्यस्ताभ्यो दारिकाभ्योऽशोकभाण्डकान्यनु- प्रयच्छति स्म। ताश्च दारिका न शक्नुवन्ति स्म बोधिसत्त्वस्य श्रियं तेजश्च सोढुम्। ता अशोकभाण्डकानि गृहीत्वा शीघ्रं शीघ्रमेव प्रक्रामन्ति स्म ॥

अथ दण्डपाणेः शाक्यस्य दुहिता गोपा नाम शाक्यकन्या, सा दासीगणपरिवृता पुरस्कृता येन संस्थागारो येन च बोधिसत्त्वस्तेनोपसंक्रामत्। उपसंक्रम्यैकान्तेऽस्थात् बोधिसत्त्वमनिमेषाभ्यां नयनाभ्यां प्रेक्षमाणा। तद्यदा बोधिसत्त्वेन सर्वाण्यशोकभाण्डानि दत्तानि, तदा सा बोधिसत्त्वमुपसंक्रम्य प्रहसितवदना बोधिसत्त्वमेवमाह – कुमार किं ते मयापनीतं यस्त्वं मां विमानयसि?

आह – नाहं त्वां विमानयामि, अपि तु खलु पुनस्त्वमभिपश्चादागतेति[1]। स तस्यै चानेकशतसहस्रमूल्यमङ्गुलीयकं[2] निर्मुच्य प्रादात् ॥

सा प्राह – इदमहं कुमार तवान्तिकादर्हामि? आह – इमानि मदीयान्याभरणानि, गृह्यताम्। सा आह – न वयं कुमारं व्यलंकरिष्यामः? अलंकरिष्यामो वयं कुमारम्। इत्युक्त्वा सा कन्या प्रक्रामत् ॥

R 163 ततस्तैर्गुह्यपुरुषै राजानं शुद्धोदनमुपसंक्रम्यैष वृत्तान्तो निवेदितोऽभूत् – देव दण्डपाणेः शाक्यस्य दुहिता गोपा नाम शाक्यकन्या, तस्यां कुमारस्य चक्षुर्निविष्टम्, मुहूर्तं च तयोः संलापोऽभूत् ॥

L 143 इत्येतत्खलु वचनं श्रुत्वा राजा शुद्धोदनो दण्डपाणेः शाक्यस्य पुरोहितं दौत्येन प्रेषयति स्म – या ते दुहिता, सा मम कुमारस्य[3] प्रदीयतामिति ॥

दण्डपाणिराह – आर्य कुमारो गृहे सुखसंवृद्धः। अस्माकं चायं कुलधर्मः शिल्पज्ञस्य कन्या दातव्या नाशिल्पज्ञस्येति। कुमारश्च न शिल्पज्ञो नासिधनुष्कलापयुद्धसालम्भविधिज्ञः। तत्कथमशिल्पज्ञायाहं दुहितरं दास्यामि?

इत्येतच्च राज्ञः प्रतिवेदितम्। ततो राज्ञ एतदभवत् – द्विरपीदमहं[4] सहधर्मेण चोदितः। यदापि मयोक्तं कस्माच्छाक्यकुमाराः कुमारस्योपस्थानाय नागच्छन्तीति तदाप्यहमभिहितः – किं वयं[5] मण्डकस्योपस्थानं करिष्याम इति। एतर्ह्यप्येवमिति प्रध्यायन्निषण्णोऽभूत् ॥

बोधिसत्त्वश्चैनं वृत्तान्तमश्रोषीत्। श्रुत्वा च येन राजा शुद्धोदनस्तेनोपसंक्रामत्। उपसंक्रम्यैवमाह – देव किमिदं दीनमनास्तिष्ठसि?

राजा आह – अलं ते कुमार अनेन।

कुमार आह – देव सर्वथा तावदवश्यमेवमाख्यातव्यम्। यावत्त्रिरपि बोधिसत्त्वो राजानं शुद्धोदनं परिपृच्छति स्म ॥

१ R त्वमसि पश्चा° for त्वमभिपश्चा°. २ R तदनेक° for चानेक°. ३ कुमाराय for कुमारस्य ४ R द्विरपि तदहं for द्विरपीदमहं. ५ R वयमस्योप° for वयं मण्डकस्योप°.

ततो राजा शुद्धोदनो बोधिसत्त्वाय तां प्रकृतिमारोचयति स्म । तां श्रुत्वा बोधिसत्त्व आह – देव अस्ति पुनरिह नगरे कश्चिद्यो मया सार्धं समर्थः शिल्पेन शिल्पमुपदर्शयितुम् ?

ततो राजा शुद्धोदनः प्रहसितवदनो बोधिसत्त्वमेवमाह – शक्यसि[1] पुनस्त्वं पुत्र R 164
शिल्पमुपदर्शयितुम् ? स[2] आह – बाढं शक्यामि[3] देव । तेन हि संनिपात्यन्तां सर्वशिल्पज्ञाः, L 144
येषां पुरतः स्वं शिल्पमुपदर्शयिष्यामि ॥

ततो राजा शुद्धोदनः कपिलवस्तुनि महानगरवरे घण्टाघोषणां कारयति स्म – सप्तमे दिवसे कुमारः स्वं शिल्पमुपदर्शयति[4] । तत्र सर्वशिल्पज्ञैः संनिपतितव्यम् ॥

तत्र सप्तमे दिवसे पञ्चमात्राणि शाक्यकुमारशतानि संनिपतितान्यभूवन् । दण्डपाणेश्च शाक्यस्य दुहिता गोपा नाम शाक्यकन्या जयपताका स्थापिताभूत्—यो वा अत्र असिधनुष्कलापयुद्धसालम्भेषु जेष्यति, तस्यैषा भविष्यतीति ॥

तत्र सर्वपुरतो देवदत्तः कुमारो नगरादभिनिष्क्रामति स्म । श्वेतश्च हस्ती महाप्रमाणो बोधिसत्त्वस्यार्थे नगरं प्रवेश्यते स्म । तत्र देवदत्तः कुमार ईर्ष्यया च शाक्यबलमदेन च मत्तः । स तं हस्तिनागं[5] वामेन पाणिना शुण्डायां गृहीत्वा दक्षिणेन पाणिना चपेटया एकप्रहारेणैव हतोऽभूत् ॥

तस्यानन्तरं सुन्दरनन्दकुमारोऽभिनिष्क्रामति स्म । सोऽद्राक्षीत्तं हस्तिनागं[6] नगरद्वारे R 165
हतम् । दृष्ट्वा च पर्यपृच्छत् – केनायं हत इति । तत्र महाजनकाय[7] आह – देवदत्तेनेति । स आह – अशोभनमिदं देवदत्तस्य । स तं हस्तिनागं[8] लाङ्गूले गृहीत्वा नगरद्वारादपकर्षति[9] स्म ॥

तदनन्तरं बोधिसत्त्वो रथाभिरूढोऽभिनिष्क्रामति स्म । अद्राक्षीद्बोधिसत्त्वस्तं हस्तिनं हतम् । दृष्ट्वा च पर्यपृच्छत् – केनायं हत इति । आहुः – देवदत्तेनेति । आह – अशोभनं देवदत्तस्य । केन पुनरस्मान्नगरद्वारादपकर्षित इति । आहुः – सुन्दरनन्देनेति । आह – शोभनमिदं सुन्दर- L 145
नन्दस्य । किं तु महाकायोऽयं सत्त्वः । सोऽयं क्लिन्नः सर्वनगरं दौर्गन्धेन स्फुरिष्यतीति[10] ॥

ततः कुमारो रथस्य एवैकं पादं भूमौ प्रसार्य पादाङ्गुष्ठेन तं हस्तिनागं[11] लाङ्गूले गृहीत्वा सप्त प्राकारान् सप्त च परिखानतिक्रम्य बहिर्नगरस्य क्रोशमात्रे प्रक्षिपति स्म । यत्र व प्रदेशे स हस्ती पतितस्तस्मिन् प्रदेशे महद्बिलं संवृत्तं यत्सांप्रतं हस्तिगर्तेत्यभिधीयते ॥

तत्र देवमनुजाः शतसहस्राणि हाहाकारकिलकिलाप्रक्ष्वेडितशतसहस्राणि प्रामुञ्चन् । चैलविक्षेपांश्चाकार्षुः । गगनतलगताश्च देवपुत्रा इमे गाथेऽभाषन्त –

यथ मत्तगजेन्द्रगतीनां पादाङ्गुष्ठतलेन गजेन्द्रम् ।
सप्त पुरापरिखा अतिक्रम्य क्षिप्तु बहिः स्वपुरातु[12] अयं हि ॥ १७ ॥

---

१ R शक्ष्यसि for शक्यसि. २ R om. स. ३ R शक्ष्यामि for शक्यामि. ४ R °दर्शयिष्यति for °दर्शयति. ५ R adds तया. ६ R हस्तिनं for हस्तिनागं. ७ R °काया आहुः for °काय आह. ८ R हस्तिनं for हस्तिनागं. ९ R °कर्षयति for कर्षति. १० R स्फुरयिष्यति for स्फुरिष्य°. ११ हस्तिनं for हस्तिनागं. १२ L सुपुरातु for स्वपुरातु.

निःसंशयमेष सुमेधा मानबलेन समुच्छ्रितकायान् ।
संसारपुरातु बहिर्धा एकं[1] क्षेपिष्यति[2] प्रज्ञबलेन ॥ १८ ॥

R 166 इति हि पञ्चमात्राणि शाक्यकुमारशतानि नगरान्निष्क्रम्य येनान्यतमः पृथिवीप्रदेशो यत्र शाक्यकुमाराः शिल्पमुपदर्शयन्ति स्म तेनोपसंक्रामन् । राजापि शुद्धोदनो महल्लकमहल्लकाश्च[3] शाक्या महांश्च जनकायो[4] येनासौ पृथिवीप्रदेशस्तेनोपसंक्रामन् बोधिसत्त्वस्य चान्येषां च शाक्यकुमाराणां शिल्पविशेषं द्रष्टुकामाः ॥

तत्र आदित एव ये शाक्यकुमारा लिप्यां पट्टुविधिज्ञास्ते बोधिसत्त्वेन[5] सार्धं लिपिं विशेषयन्ति स्म । तत्र तैः शाक्यैर्विश्वामित्र आचार्यः साक्षी स्थापितोऽभूत् – स त्वं व्यवलोकय कतमोऽत्र
L 146 कुमारो लिपिज्ञाने विशिष्यते यदि वा लेख्यतो यदि वा बहुलिपिनिर्याणतः[6] । अथ विश्वामित्र आचार्यः प्रत्यक्षो बोधिसत्त्वस्य लिपिज्ञाने स्मितमुपदर्शयन्निमे गाथेऽभाषत –

मनुष्यलोकेऽथ च देवलोके गन्धर्वलोकेऽप्यसुरेन्द्रलोके ।
यावन्ति केचिल्लिपि सर्वलोके तत्रैष पारंगतु शुद्धसत्त्वः ॥ १९ ॥
नामापि यूयं च अहं च तेषां लिपीनँ[7] जानाम न चाक्षराणाम् ।
यान्येष जानाति मनुष्यचन्द्रो अहमत्र प्रत्यक्षु विजेष्यतेऽयम् ॥ २० ॥

शाक्या आहुः – विशिष्यतां तावत्कुमारो लिपिज्ञाने । संख्याज्ञाने कुमारो विशेषयितव्यो जिज्ञास्यश्च । तत्रार्जुनो नाम शाक्यगणको महामात्रः संख्यागणनासु पारंगतः, स साक्षी स्थापितोऽभूत् – स त्वं व्यवलोकय कतमोऽत्र कुमारो विशिष्यते संख्याज्ञानत इति । तत्र
R 167 बोधिसत्त्वश्चोद्दिशति स्म, एकश्च शाक्यकुमारो निक्षिपति स्म, न च परिप्रापयति स्म । बोधिसत्त्वस्यैक द्वौ त्रयश्चत्वारः पञ्चदश विंशात्रिंशाच्चत्वारिंशत्पञ्चाशाच्छतं यावत्पञ्चापि शाक्यकुमारशतानि युगपत्काले निक्षिपन्ति स्म, न च परिप्रापयन्ति स्म । ततो बोधिसत्त्व आह – उद्दिशत यूयम्, अहं निक्षेप्स्यामीति । तत्रैकशाक्यकुमारो बोधिसत्त्वस्योद्दिशति स्म, न च परिप्रापयति स्म । द्वावपि त्रयोऽपि पञ्चापि दशापि विंशत्यपि त्रिंशदपि चत्वारिंशदपि पञ्चाशदपि यावत्पञ्चापि शाक्यकुमारशतानि युगपदुद्दिशन्ति स्म । न च परिप्रापयन्ति स्म बोधिसत्त्वस्य निक्षिपतः ॥

बोधिसत्त्व आह – अलमलमनेन विवादेन । सर्वे इदानीमेकीभूत्वा ममोद्दिशत, अहं
L 147 निक्षेप्स्यामीति । तत्र पञ्चमात्राणि शाक्यकुमारशतान्येकवचनोदाहारेणापूर्वचरितं समुद्दिशन्ति स्म, बोधिसत्त्वश्चासंमूढो निक्षिपति स्म । एवमपर्यन्ताः सर्वशाक्यकुमाराः, अथ[9] पर्यन्तश्च बोधिसत्त्वः ॥

ततोऽर्जुनो गणकं[10] महामात्र आश्चर्यप्राप्त इमे गाथेऽभाषत–

ज्ञानस्य शीघ्रता साधु बुद्धे संपरिपृच्छता[11] ।
पञ्चमात्रशतान्येते धिष्ठिता गणनापथे ॥ २१ ॥

---

१ R एष for एक. २ R क्षिपिष्यति for क्षपि°. ३ R °महल्लिकाद्याश्च for °महल्लकाश्च. ४ R जननिकायो for जनकायो. ५ R लिपिविधिज्ञास्तेन for पट्टुविधिज्ञास्ते बोधिसत्त्वेन. ६ R °निर्णयतः for °निर्याणतः. ७ R लिपिं न for लिपीन. ८ R om. from बोधिसत्त्व ...... प्रापयन्ति स्म. ९ R om. अथ. १० R गणको for गणकं. ११ R सुपरिपृच्छता for संपरिपृच्छता.

ईदृशी च इयं प्रज्ञा बुद्धिर्ज्ञानं स्मृतिर्मतिः।
अद्यापि शिक्षते चायं गणितं ज्ञानसागरः॥ २२॥

ततः सर्वशाक्यगण आश्चर्यप्राप्तः परमविस्मया[1]पन्नोऽभूत्। एककण्ठाश्चेमां वाचमभाषन्त—जयति जयति भोः सर्वार्थसिद्धः कुमारः। सर्वे चासनेभ्य उत्थाय कृताञ्जलिपुटा R 168 भूत्वा बोधिसत्त्वं नमस्कृत्य राजानं शुद्धोदनमेतदवोचन्—लाभास्ते महाराज परमसु[2]लब्धाः, यस्य ते पुत्र एवं शीघ्रलघुजवचपलपरिपृच्छाप्रतिभान इति॥

अथ स राजा शुद्धोदनो बोधिसत्त्वमेवमाह—शक्य[3]सि पुत्र अर्जुनेन गणक[4]महामात्रेण सार्धं संख्याज्ञानकौशल्यगणनागतिमनुप्रवेष्टुम्? तेन हि गण्यताम्। अथार्जुनो गणकमहामात्रो बोधिसत्त्वमेवमाह—जानीषे त्वं कुमार कोटिशतोत्तरां नाम गणनागतिम्? बोधि[5]सत्त्व आह—शक्यामि देव। आह—जानाम्यहम्। आह—कथं पुनः कोटिशतोत्तरा गणनागतिरनुप्रवेष्टव्या? बोधिसत्त्व आह—शतं कोटीनामयुतं नामोच्यते। शतमयुतानां नियुतो नामोच्यते। शतं नियुतानां कङ्करं नामोच्यते। शतं कङ्कराणां विवरं नामोच्यते। शतं विवराणामक्षोभ्यं नामोच्यते। शतमक्षोभ्याणां विवाहं नामोच्यते। शतं विवाहानामुत्सङ्गं नामोच्यते। शतमुत्सङ्गानां L 148 बहुलं नामोच्यते। शतं बहुलानां नागबलं नामोच्यते। शतं नागबलानां तिटिलम्भं नामोच्यते। शतं तिटिलम्भानां व्यवस्थानप्रज्ञप्तिर्नामोच्यते। शतं व्यवस्थानप्रज्ञप्तीनां हेतुहिलं नामोच्यते। शतं हेतुहिलानां कर[6]कुर्नामोच्यते। शतं करकूणां हेत्विन्द्रियं नामोच्यते। शतं हेत्विन्द्रियाणां समाप्तलम्भं नामोच्यते। शतं समाप्तलम्भानां गणनागतिर्नामोच्यते। शतं गणनागतीनां निरवद्यं R 169 नामोच्यते। शतं निरवद्यानां मुद्राबलं नामोच्यते। शतं मुद्राबलानां सर्वबलं नामोच्यते। शतं सर्वबलानां विसंज्ञागती नामोच्यते। शतं विसंज्ञागतीनां सर्वसंज्ञा नामोच्यते। शतं सर्वसंज्ञानां विभूतंगमा नामोच्यते। शतं विभूतंगमानां तल्लक्षणं नामोच्यते। इति हि तल्लक्षणगणनया सुमेरुपर्वतराजो लक्षनिक्षेपक्रियया परिक्षयं गच्छेत्। अतोऽप्युत्तरि[7] ध्वजाग्रवती नाम गणना, यस्यां गणनायां गङ्गानदीवालिका[8]समा लक्षनिक्षेपक्रियया परिक्षयं गच्छेयुः। अतोऽप्युत्तरि ध्वजाग्रनिशामणी नाम गणना। [9]अतोऽप्युत्तरि वाहनप्रज्ञप्तिर्नाम। अतोऽप्युत्तरि इङ्गा नाम। अतोऽप्युत्तरि कुरुटु नाम। अतोऽप्युत्तरि कुरुटावि नाम। अतोऽप्युत्तरि सर्वनिक्षेपा नाम गणना, यस्यां गणनायां दश गङ्गानदीवालिकासमा ल[10]क्षनिक्षेपक्रियया परिक्षयं गच्छेयुः। अतोऽप्युत्तरि अग्रसारा नाम गणना, यत्र कोटीशतं गङ्गानदीवालिकासमा लक्षनिक्षेपाः परिक्षयं गच्छेयुः। अतोऽप्युत्तरि परमाणुरजःप्रवेशानुगतानां गणना, यत्र तथागतं स्थापयित्वा बोधिमण्ड[11]वराग्रगतं च सर्वधर्माभिषेकाभिमुखं बोधिसत्त्वं नान्यः कश्चित्सत्त्वः सत्त्वनिकाये संविद्यते ये[12] एतां गणनां L 149 प्रजानाति अन्यत्राहं वा यो वा स्यान्मादृशः। एवं चरमभाविको विनिष्क्रान्तगृहवासो बोधिसत्त्वः॥

१ R °विस्मयमापन्नो for° विस्मया°. २ R परमाः सुलब्धाः for परम°. ३ R शक्ष्यसि for शक्यसि. ४ R गणकेन महा° for गणकमहा°. ५ R om. बोधिसत्त्व आह — शक्यामि देव. ६ R करहुः for करकुः. ७ R उत्तरं for उत्तरि. ८ R °वालुका° for °वालिका°. ९ R om. from अतो upto कुरुटु नाम. १० R लक्षक्षेप° for लक्षनिक्षेप°. ११ R बोधिमण्डल° for बोधिमण्ड°. १२ R यत्र एषा गणनानुप्रवेष्टव्या। अर्जुनो° for य एतां ...... अर्जुनो°.

अर्जुनोऽवोचत् – कथं कुमार परमाणुरजःप्रवेशगणनानुप्रवेष्टव्या ? बोधिसत्त्व आह – सप्त परमाणुरजांस्यणुः[1] । सप्ताणवस्त्रुटिः[2] । सप्तत्रुतेरेकं[3] वातायनरजः । सप्त वातायनरजांस्येकं R 170 शशरजः । सप्त शशरजांस्येकमेडकरजः । सप्तैडकरजांस्येकं गोरजः । सप्त गोरजांस्येकं लिक्षारजः । सप्त लिक्षाः[4] सर्षपः । सप्तसर्षपाद्यवः । सप्तयवादङ्गुलीपर्व । द्वादशाङ्गुलीपर्वाणि वितस्तिः । द्वे वितस्ती हस्तः । चत्वारो हस्ता धनुः । धनुःसहस्रं मार्ग[5]ध्वजाक्रोशः । चत्वारः क्रोशा योजनम् । तत्र को युष्माकं योजनपिण्डं प्रजानाति ? कियन्ति तानि परमाणुरजांसि भवन्ति ? अर्जुनोऽवोचत् – अहमेव तावत्कुमार संमोहमापन्नः, किमङ्ग पुनर्ये चान्येऽल्पबुद्धयः । निर्दिशतु कुमारो योजनपिण्डं कियन्ति तानि परमाणुरजांसि भवन्तीति । बोधिसत्त्वोऽवोचत् – तत्र योजनपिण्डः परमाणुरजसां परिपूर्णमक्षोभ्यनयुतमेकं त्रिंशच्च कोटीनयुतशतसहस्राणि षष्टिश्च कोटीशतानि द्वात्रिंशतिश्च कोट्यः पञ्च च दशशतसहस्राणि द्वादश च सहस्राणि एतावान् योजनपिण्डः परमाणुरजोनिक्षेपस्य । अनेन प्रवेशेनायं जम्बुद्वीपः सप्तयोजनसहस्राणि । गोदानीयोऽष्टौ योजनसहस्राणि । पूर्वविदेहो नव योजनसहस्राणि । उत्तरकुरुद्वीपो दशयोजनसहस्राणि । अनेन प्रवेशेनेमं चातुर्द्वीपकं लोकधातुं प्रमुखं कृत्वा परिपूर्णकोटीशतं चातुर्द्वीपकानां लोकधातूनां यत्र L 150 कोटीशतं महासमुद्राणाम्, कोटीशतं चक्रवालमहाचक्रवालानाम्, [6]कोटीशतं सुमेरूणां पर्वतराजानाम्, कोटीशतं चातुर्महाराजिकानां देवानाम्, कोटीशतं त्रयत्रिंशानाम्, कोटीशतं यामानाम्, कोटीशतं तुषितानाम्, कोटीशतं निर्माणरतीनाम्, कोटीशतं परनिर्मितवशवर्तीनाम्, R 171 कोटीशतं ब्रह्मकायिकानाम्, कोटीशतं ब्रह्मपुरोहितानाम्, कोटीशतं ब्रह्मपार्षद्यानाम्, कोटीशतं महाँब्रह्मणाम्[7], कोटीशतं परीत्ताभानाम्, कोटीशतं अप्रमाणाभानाम्, कोटीशतं आभास्वराणाम्, कोटीशतं परीत्तशुभानाम्, कोटीशतं अप्रमाणशुभानाम्, कोटीशतं शुभकृत्स्नानाम्, कोटीशतं अनभ्रकाणाम्, कोटीशतं पुण्यप्रसवानाम्, कोटीशतं बृहत्फलानाम्, कोटीशतं असंज्ञि[8]सत्त्वानाम्, कोटीशतं अबृहानाम्, [9]कोटीशतं अतपानाम्, कोटीशतं सुदृशानाम्[10], कोटीशतं सुदर्शनानाम्, कोटीशतं अकनिष्ठानां देवानाम् । अयमुच्यते त्रिसाहस्रमहासाहस्रलोकधातुर्विपुलश्च विस्तीर्णश्च । स यावन्ति योजनशतानि ( परमाणुरजांसि त्रिसाहस्रमहासाहस्रलोकधातौ ) यावन्ति योजनसहस्राणि, यावन्ति योजनकोट्यः, यावन्ति योजननयुतानि .... पेयालं[11] .... यावद्यावन्तो योजनाग्रसारागणनाः । कियन्त्येतानि परमाणुरजांसि इत्याह । संख्यागणना व्यतिवृत्ता ह्येषां[12] गणनानां तदुच्यतेऽसंख्येयमिति । अतोऽसंख्येयतमानि परमाणुरजांसि यानि त्रिसाहस्रमहासाहस्रलोकधातौ भवन्ति ॥

अस्मिन् खलु पुनर्गणनापरिवर्ते बोधिसत्त्वेन निर्दिश्यमाने अर्जुनो गणकमहामात्रः सर्वश्च शाक्यगणस्तुष्ट उदग्र आत्तमनाः प्रमुदित आश्चर्याद्भुतप्राप्तोऽभूत् । ते सर्वे एकैकैर्वस्त्रैः स्थिता अभूवन् । परिशिष्टैर्वस्त्राभरणैर्बोधिसत्त्वमभिछादयन्ति स्म ॥

---

१ R °रजांसि रेणुः for °रजांस्यणुः. २ R सप्त रेणवस्त्रुटिः for सप्ताणवस्त्रुतिः. ३ R सप्तत्रुतिरेकं for सप्तत्रुतेरेकं. ४ L लिख्याः for लिक्षाः. ५ R मागध° for मार्ग°. ६ R om. कोटीशतं सुमेरूणां पर्वतराजानाम्. ७ R महाब्रह्मणां. ८ R असङ्गि° for असंज्ञि°. ९ R om. कोटीशतं अतपानाम्. १० R सुदृशां for सुदृशानाम्. ११ R om. पेयालं. १२ R ह्येषां गणना for ह्येषां गणनानां.

अथ खल्वर्जुनो गणक[1]महामात्र इमे गाथेऽभाषत — L 151

कोटीशतं च अयुता नयुतास्तथैव R 172
नियुतानु कङ्करगती तथ बिम्बराश्च।
अक्षोभिणी परमज्ञानु न मेऽस्त्यतोऽर्थ-
मर्त[2] उत्तरे गणनमप्रतिमस्य ज्ञानम्॥ २३॥

अपि च भोः शाक्याः —

त्रिसाहस्रि[3] रजाश्रयन्तका तृणवन[4] ओषधियो जलस्य बिन्दून्।
हुंकारेण न्यसेय एकिनैषो को पुनि विस्मयु पञ्चभिः शतेभिः॥ २४॥

तत्र देवमनुजाः शतसहस्राणि हाहाकारकिलिकिलाप्रक्ष्वेडित[5]शतसहस्राणि प्रामुञ्चन्। गगनतलगताश्च देवपुत्रा इमा गाथा अभाषन्त —

यावन्त सत्त्व निखिलेन[6] त्रियध्वयुक्ताः
चित्तानि चैतसिकसंज्ञि वितर्कितानि।
हीनाः प्रणीत तथ संक्षिपविक्षिपा ये
एकस्मि चित्तपरिवर्ति प्रजानि सर्वान्॥ २५॥

इति हि भिक्षवोऽभिभूताः सर्वे शाक्यकुमारा अभूवन्। बोधिसत्त्व एव विशिष्यते। R 173
तदनन्तरं लङ्घिते प्लविते जविते सर्वत्र बोधिसत्त्व एव विशिष्यते स्म। गगनतलगताश्च देवपुत्रा इमां गाथामभाषन्त —

व्रततपसगुणेन संयमेन क्षमदममैत्रबलेन कल्पकोट्यः।
अथ[7] कृतुलघुकायचित्तनेता तस्य जवस्य[8] विशेषतां शृणोथ[9]॥ २६॥

इह गृहगत युष्मे पश्यथा सत्त्वसारम् L 152
अपि च दशसु दिक्षू गच्छतेऽयं क्षणेन।
अपरिमितजिनानां पूजनामेष कुर्वन्
मणिकनकविचित्रैर्लोकधातुष्वनन्ता॥ २७॥

न च पुन गति आगतिं च अस्या[10] यूयं प्रजानथ तावदृद्धिप्राप्तो।
कोऽत्र जविति[11] विस्मयो जनेया असदृश एष करोथ गौरवोऽस्मिन्॥ २८॥

एवं कृत्वा बोधिसत्त्व एव विशिष्यते स्म॥

तत्र शाक्या आहुः — युद्धेषु तावत्कुमारो विशेषयितव्यो जिज्ञास्यश्च। तत्र बोधिसत्त्व R 174
एकान्ते स्थितोऽभूत्। तानि च पञ्चमात्राणि शाक्यकुमारशतानि युगपद्युध्यन्ति स्म॥

१ R गणको for गणक°. २ R °मतोत्तरे for °मत उत्तरे. ३ R त्रिसाहस्र रजांसियन्तना for the line. ४ R तृणवरि for तृणवन. ५ L °प्रक्षेडित° for °प्रक्ष्वेडित°. ६ R निखिले for निखिलेन. ७ R तथ for अथ. ८ R जनस्य for जवस्य. ९ R शृणोथाः for शृणोथ. १० R अस्य for अस्या. ११ R जगति for जविति.

इति हि द्वात्रिंशच्छाक्यकुमाराः सालम्भाय स्थिताः। तदा नन्दश्चानन्दश्च बोधिसत्त्वमभिगतौ सालम्भाय। तौ समनन्तरं स्पृष्टावेव बोधिसत्त्वेन पाणिना। तौ बोधिसत्त्वस्य बलं तेजश्चासहमानौ धरणीतले प्रपतितावभूताम्। तदनन्तरं देवदत्तः कुमारो गर्वितश्च मानी च बलवांश्च तब्धः[1] शाक्यमानेन च तब्धो[2] बोधिसत्त्वेन सार्धं विस्पर्धमानः सर्वावन्तं रङ्गमण्डलं प्रदक्षिणीकृत्य विक्रीडमानो[3] बोधिसत्त्वमभिपतति स्म। अथ बोधिसत्त्वोऽसंभ्रान्त एवात्वरन् दक्षिणेन पाणिना सलीलं[4] देवदत्तं कुमारं गृहीत्वा त्रिर्गगनतले परिवर्त्य[5] माननिग्रहार्थमविहिंसाबुद्ध्या मैत्रेण चित्तेन धरणीतले निक्षिपति स्म। न चास्य कायं व्याबाधते स्म॥

ततो बोधिसत्त्वोऽप्याह — अलमलमनेन विवादेन। सर्व एव एकीभूत्वा इदानीं सालम्भायागच्छतेति॥

L 153 अथ ते सर्वे हर्षिता भूत्वा[6] बोधिसत्त्वमभिनिपतिताः। ते समनन्तरस्पृष्टा बोधिसत्त्वेन बोधिसत्त्वस्य श्रियं तेजश्च कायबलं स्थामं चासहमानाः स्पृष्टमात्रा एव बोधिसत्त्वेन धरणितले प्रापतन्। तत्र मरुन्मनुजशतसहस्राणि हीहीकारकिलकिलाप्रक्ष्वेडित[7]शतसहस्राण्यकार्षुः। गगनतलगताश्च देवपुत्रा महान्तं पुष्पवर्षमभिप्रवृष्यैकस्वरेणेमां गाथामभाषन्त —

यावन्त सत्त्वनयुता[8] दशसू दिशासु
ते दुष्टमल्लमहनग्नसमा भवेयुः।
R 175 एकक्षणेन निपतेयु नरर्षभस्य
संस्पृष्टमात्र निपतेयु क्षितीतलेस्मिं॥ २९॥

मेरुः सुमेरु तथ वज्रकचक्रवालाः[9]
ये चान्य पर्वत क्वचिद्दशसू दिशासु।
पाणिभ्य गृह्य मसिचूर्णनिभां प्रकुर्यात्
को विस्मयो मनुजआश्रयके असारे[10]॥ ३०॥

एषो द्रुमेन्द्रप्रवरे महदुष्टमल्लं
मारं ससैन्यसबलं सहयं ध्वजाग्रे।
मैत्रीबलेन विनिहत्य हि कृष्णबन्धुं
यावत् स्पृशिष्यति[11] अनुत्तरबोधि सान्तम्॥ ३१॥ इति॥

एवं कृत्वा बोधिसत्त्व एव विशिष्यते स्म॥

अथ दण्डपाणिः शाक्यकुमारानेतदवोचत् — जिज्ञासितमिदं दृष्टं च। हन्तेदानीमिषुक्षेप-
L 154 मुपदर्शयतेति। तत्र आनन्दस्य द्वयोः क्रोशयोरयस्मयी भेरी लक्षं स्थापिताभूत्। अस्यानन्तरं देवदत्तस्य चतुर्षु क्रोशेष्वयस्मयी भेरी स्थापिताभूत्। दण्डपाणेर्योजनद्वयेऽयस्मयी भेरी स्थापिताभूत्।

---

१ R स्तब्धः for तब्धः. २ R om. तब्धो. ३ R त्वरमाणो for विक्रीडमानो. ४ L सलीडं for सलीलं. ५ R वर्त्यमानं निग्र॰ for परिवर्त्य माननिग्र॰. ६ R एकीभूत्वा for हर्षिता भूत्वा. ७ L ॰प्रक्षेडित॰ for प्रक्ष्वेडित॰. ८ R om. ॰नयुता. ९ R ॰चक्रवालै for ॰चक्रवालाः. १० R कुमारे for असारे. ११ L पृसिष्यति for स्पृशिष्यति.

बोधिसत्त्वस्य दशसु क्रोशेष्वयस्मयी भेरी स्थापिताभूत्। तस्यानन्तरं सप्त ताला अयस्मयी वराहप्रतिमा यन्त्रयुक्ता स्थापिताभूत्। तत्रानन्देन द्वाभ्यां क्रोशाभ्यां भेर्याहताभूत्, ततोत्तरि[1] न शक्नोति स्म। देवदत्तेन चतुःक्रोशस्था भेर्याहताभूत्, नोत्तरि[2] शक्नोति स्म। सुन्दरनन्देन षट्क्रोशस्था भेर्याहताभूत्, नोत्तरि शक्नोति स्म। दण्डपाणिना द्वियोजनस्था भेर्याहताभूत्, निर्विद्धा[3] च नोत्तरि शक्नोति स्म। तत्र बोधिसत्त्वस्य[4] यद्यदेव धनुरुपानम्यते स्म, तत्तदेव विच्छिद्यते स्म। ततो बोधिसत्त्व आह – अस्तीह देव[5] नगरे किंचिदन्यद्धनुर्यन्ममारोपणं सहेत कायबलस्थामं च? राजा आह – अस्ति पुत्र। कुमार आह – क्व तद्देव? राजा आह – तव पुत्र पितामहः सिंहहनुर्नामाभूत्, तस्य यद्धनुस्तद्देव तर्हि देवकुले गन्धमाल्यैर्महीयते। न पुनस्तत्कश्चिच्छक्नोति स्म तद्धनुरारोपयितुं प्रागेव पूरयितुम्। बोधिसत्त्व आह – आनीयतां देव तद्धनुः। जिज्ञासिष्यामहे[6]॥

तावद्यावत्तद्धनुरुपनामितमभूत्। तत्र सर्वे शाक्यकुमाराः परमेणापि प्रयत्नेन व्यायच्छमाना न शक्नुवन्ति स्म तद्धनुरारोपयितुं प्रागेव पूरयितुम्। ततस्तद्धनुर्दण्डपाणेः शाक्यस्योपनामितमभूत्। अथ दण्डपाणिः शाक्यः सर्वं कायबलस्थाम संजनय्य तद्धनुरारोपयितुमारब्धोऽभूत्। न च शक्नोति R 177
स्म। यावद्बोधिसत्त्वस्योपनामितमभूत्। तद्बोधिसत्त्वो गृहीत्वा आसनादनुत्तिष्ठन्नेवार्धपर्यङ्कं कृत्वा वामेन L 155
पाणिना (गृहीत्वा) दक्षिणेन पाणिना एकाङ्गुल्यग्रेणारोपितवानभूत्[7]। तस्य धनुष आरोप्यमाणस्य सर्वं कपिलवस्तु महानगरं शब्देनाभिविज्ञप्तमभूत्। सर्वनगरजनश्च विह्वलीभूतोऽन्योन्यमपृच्छत् – कस्यायमेवंविधः शब्द इति। अन्ये[8] तदवोचन् – सिद्धार्थेन किल कुमारेण पैतामहधनुरारोपितम्, तस्यायं शब्द इति। तत्र देवमनुजशतसहस्राणि हाहाकारकिलिकिलाप्रक्ष्वेडितशतसहस्राणि प्रामुञ्चन्। गगनतलगताश्च देवपुत्रा राजानं शुद्धोदनं तं च महान्तं जनकायं[9] गाथयाध्यभाषन्त –

यथ पूरित एष धनुर्मुनिना
न च उत्थितु आसनि[10] नो च भूमी।
निःसंशयु पूर्णमभिप्रायु मुनि-
र्लघु भेष्यति जित्व च मारचमूम्॥ ३२॥

इति हि भिक्षवो बोधिसत्त्वस्तद्धनुः पूरयित्वेषुं गृहीत्वा तादृशेन बलस्थाम्ना तमिषुं क्षिपति स्म, येन या चानन्दस्य भेरी या च देवदत्तस्य यावत्सुन्दरनन्दस्य यावद्दण्डपाणेताः सर्वा अभिनिर्भिद्य तां च दशक्रोशस्थां स्वकामयस्मयीं भेरीं सप्ततालं यन्त्रयुक्तवराहप्रतिमामभिनिर्भिद्य स इषुर्धरणीतलं प्रविश्य अदर्शनाभासोऽभूत्। यत्र च प्रदेशे स इषुर्भूमितलं भित्त्वा[11] प्रविष्टस्तस्मिन् प्रदेशे कूपः संवृत्तः, यदद्यत्वेऽपि[12] शरकूप इत्यभिधीयते। तत्र देवमनुष्यशतसहस्राणि हीहीकार- R 178
किलिकिलाप्रक्ष्वेडितशतसहस्राणि प्रामुञ्चन्। सर्वश्च शाक्यगणो विस्मितोऽभूत् आश्चर्यप्राप्तः –

R 176

१ R तत उत्तरं for ततोत्तरि. २ R नोत्तरं for नोत्तरि. ३ R निविद्धा for निर्विद्धा. ४ R बोधिसत्त्वेन. ५ R om. देव. ६ R जिज्ञासिष्यामः ७ R आरोपितमभूत् for °रोपितवानभूत्. ८ R एतदवोचत् for अन्ये तदवोचन्. ९ R जननिकायं for जनकायं. १० R आसनिना च for आसनि नो च. ११ R संभित्वा for भित्त्वा. १२ R अद्यापि for अद्यत्वेऽपि.

L 156 आश्चर्यं भोः। न च नाम अनेन योग्यी[1] कृता, इदं चेदृशं शिल्पकौशलम्। गगनतलगताश्च देवपुत्रा राजानं शुद्धोदनं तं च महान्तं जनकायमेवमाहुः – कोऽत्र विस्मयो मनुजाः[2]। तत्कस्मात्?

एष धरणिमण्डे पूर्वबुद्धासनस्थः
शमथ[3]धनु गृहीत्वा शून्यनैरात्मबाणैः।
क्लेशरिपु निहत्वा दृष्टिजालं च भित्त्वा
शिवविरजमशोकां प्राप्स्यते बोधिमग्र्याम्॥ ३३॥

एवमुक्त्वा ते देवपुत्रा बोधिसत्त्वं दिव्यैः पुष्पैरभ्यवकीर्य प्राक्रामन्॥

एवं लङ्घिते प्राग्वल्लिपिमुद्रागणनासंख्यसालम्भधनुर्वेदे जविते प्लविते तरणे इष्वस्त्रे हस्तिग्रीवायामश्वपृष्ठे रथे धनुष्कलापे स्थैर्यस्थाम्नि सुशौर्ये बाहुव्यायामे अङ्कुशग्रहे पाशग्रहे उद्याने निर्याणे अवयाने मुष्टिबन्धे पदबन्धे[4] शिखाबन्धे छेद्ये भेद्ये दालने स्फालने अक्षुण्णवेधित्वे मर्मवेधित्वे शब्दवेधित्वे दृढप्रहारित्वे अक्षक्रीडायां काव्य[5]करणे ग्रन्थे[6] चित्रे रूपे रूपकर्मणि धीते[7] अग्निकर्मणि वीणायां वाद्ये नृत्ये गीते पठिते आख्याने हास्ये लास्ये नाट्ये विडम्बिते माल्यग्रथने संवाहिते मणिरागे वस्त्ररागे मायाकृते स्वप्नाध्याये शकुनिरुते स्त्रीलक्षणे
R 179 पुरुषलक्षणे अश्वलक्षणे हस्तिलक्षणे गोलक्षणे अजलक्षणे मिश्रलक्षणे कौटुभेश्वरलक्षणे निर्घण्टे निगमे पुराणे इतिहासे वेदे व्याकरणे निरुक्ते शिक्षायां[8] छन्दस्विन्यां यज्ञकल्पे ज्योतिषे सांख्ये योगे क्रियाकल्पे वैशिके वैशेषिके अर्थविद्यायां बार्हस्पत्ये आम्भिर्ये[9] आसुर्ये मृगपक्षिरुते हेतुविद्यायां
L 157 जलयन्त्रे मधूच्छिष्टकृते सूचिकर्मणि विदलकर्मणि पत्रच्छेदे गन्धयुक्तौ – इत्येवमाद्यासु सर्वकर्मकलासु लौकिकादिषु दिव्यमानुष्यकातिक्रान्तासु सर्वत्र बोधिसत्त्व एव विशिष्यते स्म॥

अथ खलु पुनस्तेन समयेन दण्डपाणिः शाक्यः स्वां दुहितरं गोपां शाक्यकन्यां बोधिसत्त्वाय[10] प्रादात्। सा च राज्ञा शुद्धोदनेनानुपूर्वेण बोधिसत्त्वस्य वृताभूत्॥

तत्र खल्वपि बोधिसत्त्वश्चतुरशीतिस्त्रीसहस्राणां मध्ये प्राप्तो लोकानुभवनतया[11] रममाणं क्रीडयन्तं परिचारयन्तमात्मानमुपदर्शयति स्म। तासां चतुरशीते स्त्रीसहस्राणां गोपा शाक्यकन्या सर्वासामग्रमहिष्यभिषिक्ताभूत्॥

तत्र खल्वपि गोपा शाक्यकन्या न कंचिद् दृष्ट्वा वदनं छादयति स्म श्वश्रूं वा श्वशुरं वान्तर्जनं वा। ते तामुपध्यायन्ति स्म, विचारयन्ति स्म – नववधूका हि नामे[12] प्रतिलीना तिष्ठति, इयं पुनर्विवृतैव सर्वदा[13] इति। ततो गोपा शाक्यकन्या एतां प्रकृतिं श्रुत्वा सर्वस्यान्तर्जनस्य पुरतः स्थित्वा इमा गाथा अभाषत –

विवृतः शोभते आर्य आसनस्थानचंक्रमे।
R 180 मणिरत्नं ध्वजाग्रे वा भासमानं प्रभास्वरम्॥ ३४॥

---

१ R योग्यता for योग्या. २ R om. मनुजाः. ३ R समर्थ for शमथ. ४ R om. °पदबन्धे. ५ R काव्यव्याकरणे. ६ R ग्रन्थरचिते for ग्रन्थे चित्रे. ७ R अधीते for धीते. ८ R शिष्यायां for शिक्षायां. ९ R आश्चर्ये for आम्भिर्ये. १० R बोधिसत्त्वाय. ११ R लोकानुभवेन तया च समानं for लोकानुभवनतया. १२ R नामाप्रति for नाम प्रति. १३ R सदा for सर्वदा.

गच्छंन्[1] वै शोभते आर्य आगच्छन्नपि शोभते ।
स्थितो वाथ निषण्णो वा आर्यः सर्वत्र शोभते ॥ ३५ ॥

कथयं शोभते आर्यस्तूष्णीभूतोऽपि शोभते ।
कलविङ्को यथा पक्षी दर्शनेन स्वरेण वा ॥ ३६ ॥

कुशा[2]चीरनिवस्तो वा मन्दचैलः कृशांतनुः ।
शोभतेऽसौ स्वतेजेन गुणवान् गुणभूषितः ॥ ३७ ॥

सर्वेण शोभते आर्यो यस्य पापं न विद्यते । L 158
कियद्विभूषितो बालः पाप[3]चारी न शोभते ॥ ३८ ॥

ये किल्बिषाः स्वहृदये मधु[4]रासु वाचं
कुम्भो विष[5]स्मिं परिषिक्तु यथामृतेन ।
दुस्पर्श शैलशिलवत् कठिनान्तरात्मा
सर्पस्य[6] वा विरसु दर्शन तादृशानाम् ॥ ३९ ॥

सर्वेषु ते नमिषु सर्वमुपैति सौम्याः
सर्वेषु तीर्थमिव सर्वगोपजीव्याः ।
दधिक्षीरपूर्णघटतुल्य सदैव आर्या
शुद्धा[7]त्मदर्शनु सुमङ्गलु तादृशानाम् ॥ ४० ॥

यैः पापमित्र परिवर्जित दीर्घरात्रं R 181
कल्याणमित्ररतनैश्च परिगृहीताः ।
पापं विवर्जयि निवेशयि बुद्धधर्मे
सफलं सुमङ्गलु सुदर्शनु तादृशानाम् ॥ ४१ ॥

ये कायसंवृत सु[8]संवृतकायदोषाः
ये वाचसंवृत सदानव[9]कीर्णवाचः ।
गुप्तेन्द्रिया सुनिभृताश्च मनःप्रसन्नाः
किं तादृशान वदनं प्रतिछादयित्वा ॥ ४२ ॥

वस्त्रा सहस्र यदि छादयि आत्मभावं
चित्तं च येषु विवृतं न हिरी न लज्जा ।
न च येषु ईदृश गुणा नपि सत्यवाक्यं
नग्ने[10] विनग्नतर ते विचरन्ति लोके ॥ ४३ ॥

---

१ R गच्छंस्तु. २ R कुशचीरी° for कुशचीर°. ३ R पापकारी. ४ R मधुराः सुवाचः for मधुरासु वाच. ५ R विषस्य. ६ R सर्वस्थ for सर्पस्य. ७ R. शुद्धं सुदर्शन for शुद्धात्मदर्शनु. ८ सुसंयत° for संवृत°. ९ R अवकीर्ण° for. °नवकीर्ण°. १० R नग्ना for नग्ने.

L 159 याश्चित्तगुप्त सततेन्द्रियसंयताश्च
न च अन्यसत्त्वमनसा स्वपतीन तुष्टाः ।
आदित्यचन्द्रसदृशा विवृतप्रकाशा
R 182 किं तादृशान वदनं प्रतिछादयित्वा ॥ ४४ ॥

अपि च –

जानन्ति आशयु मम ऋषयो महात्मा
परचित्तबुद्धिकुशलास्तथ देवसंघाः ।
यथ मह्य शीलगुणसंवरु अप्रमादो
वदनावगुण्ठनमतः प्रकरोमि किं मे ॥ ४५ ॥

अश्रोषीद्भिक्षवो राजा शुद्धोदनो नाम गोपायाः शाक्यकन्याया ईमामेवंरूपां[1] सर्वां गाथां प्रतिभाननिर्देशम् । श्रुत्वा च पुनस्तुष्ट उदग्र आत्तमनाः प्रमुदितः प्रीतिसौमनस्यजातोऽनेकरत्नप्रत्युप्तेन दूष्ययुगेन[2] कोटीशतसहस्रमूल्येन च मुक्ताहारेणाभिजातलोहितमुक्ताप्रत्युप्तया च सुवर्णमालया गोपां शाक्यकन्यामभिच्छाद्यैनमुदानमुदानयति स्म–

यथा च पुत्रो मम भूषितो गुणैः
तथा च कन्या स्वगुणा[3] प्रभासते ।
विशुद्धसत्त्वौ तदुभौ समागतौ
समेति सर्पिर्यथ सर्पिमण्डे[4] ॥ ४६ ॥ इति ॥

( अनुपूर्वेण यथापूर्ववद्बोधिसत्त्वप्रमुखाः स्वपुरं प्रक्रामन्त ॥ )

इति श्रीललितविस्तरे शिल्पसंदर्शनपरिवर्तो नाम द्वादशमोऽध्यायः[5] ॥

---

१ R om. इमाम्. २ R पुष्पयुतेन for दूष्ययुगेन. ३ R स्वगुणैः. ४ R सर्पिखण्डे for सर्पिमण्डे.
५ R om. अध्यायः.

# १३

## संचोदनापरिवर्तस्त्रयोदशः ।

इति हि भिक्षव आत्मरुतहर्षमुदीरयन्त आगता आसन् बोधिसत्त्वस्यान्तःपुरमध्यगतस्यै- R 183
अनेकैर्देवैर्नाग[1]यक्षगन्धर्वासुरगरुडकिन्नरमहोरगशक्रब्रह्मलोकपालाः, ये बोधिसत्त्वस्य पूजाकर्मणे[2] L 160
औत्सुक्यमापत्स्यन्ते स्म ॥

तत्र भिक्षवो अपरेण समयेन संबहुलानां देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगशक्रब्रह्मलोकपालानामेतदभवत् – अतिचिरं बतायं सत्पुरुषोऽन्तःपुरे विलम्बितः । ये चास्येमे दीर्घरात्रं परिपाचिताः सत्त्वा[3]श्चतुर्भिः संग्रहवस्तुभिर्दानेन प्रियवाक्येनार्थक्रियया समानार्थतया, यस्य बोधिप्राप्त[4]स्य धर्मदेशितमाज्ञास्यन्ति, तत्सहैव च तानि धर्मभाजनानि सर्वाण्यन्तर्हितानि भविष्यन्ति । बोधिसत्त्वश्च पश्चादभिनिष्क्रम्यानुत्तरां सम्यक्संबोधिमभिसंभोत्स्यते ॥

ततस्ते सगौरवाः सप्रतीक्षाः[5] प्राञ्जलीभूता बोधिसत्त्वं नमस्यन्ति स्म । एवमभिप्राया-श्चोदीक्षमाणाः स्थिता अभूवन् – कदा च नाम तद्भविष्यति यद्वयं वरप्रवरं शुद्धसत्त्वमभिनिष्क्रामन्तं पश्येम[6], अभिनिष्क्रम्य च तस्मिन् महाद्रुमराजमूलेऽभिनिषद्य सबलं मारं धर्षयित्वा अनुत्तरां सम्यक्संबोधिमभिसंबुद्धं दशभिस्तथागतबलैः समन्वागतं चतुर्भिश्च तथागतवैशारद्यैः समन्वागतमष्टादशभिश्चावेणिकैर्बुद्धधर्मैः समन्वागतं त्रिपरिवर्तं[7] द्वादशाकारमनुत्तरं धर्मचक्रं प्रवर्तयन्तं महता बुद्धविक्रीडितेन सदेवमानुषासुरलोकं यथाधिमुक्तया सुभाषितेन संतोषयन्तमिति[8] ॥ R 184

तत्र भिक्षवो बोधिसत्त्वो दीर्घरात्रमसंख्येयान् कल्पानुपादाय सततं समितमपर[9]प्रणेयोऽभूत् । सर्व[10]लौकिकलोकोत्तरेषु धर्मेषु स्वयमेवाचार्यः सर्वकुशलमूलधर्मचर्यासु दीर्घकालं च कालज्ञो वेलाज्ञः समयज्ञोऽभूदच्युतोऽभिज्ञः पञ्चाभिज्ञाभिः समन्वागतोऽभूत् । ऋद्धिपादविक्रीडतः सर्वेन्द्रियकुशलः कालाकालज्ञः कालवेषी महासागर इव प्राप्तां वेलां नातिक्रामति स्म । सोऽभिज्ञज्ञानबलेन L 161
समन्वागतः स्वयमेव सर्वं जानाति स्म । अस्यायं कालः प्रग्रहस्य, अयं कालो निग्रहस्य, अयं कालः संग्रहस्य, अयं कालोऽनुग्रहस्य, अयं काल उपेक्षायाः, अयं कालो भाषितस्य, अयं कालस्तूष्णींभावस्य, अयं कालो निष्क्रम्यस्य[11], अयं कालः प्रव्रज्यायाः, अयं कालः स्वाध्यायस्य, अयं कालो योनिशोमनस्कारस्य, अयं कालः प्रविवेकस्य, अयं कालः क्षत्रियपर्षदमुपसंक्रमितुं ... पेयालं[12] .... यावदयं कालो ब्राह्मणगृहपतिपर्षदमुपसंक्रमितुम्, अयं कालो देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगशक्रब्रह्मलोकपालभिक्षुभिक्षुण्युपासकोपासिकापर्षदमुपसंक्रमितुम्, अयं कालो धर्मदेशनायाः, अयं कालः प्रतिसंलयनस्य[13] । सर्वत्र बोधिसत्त्वो नित्यकालं कालज्ञो भवति स्म कालवेषी ॥

---

१ R °स्यानेकदेवनाग °for °स्यानेकैर्देवैर्नाग°. २ R पूजाकर्मणि for °कर्मणे. ३ सर्वाः for सत्त्वाः. ४ R बोधिसत्त्वस्य for °प्राप्तस्य. ५ R सप्रतीताः for °तीक्षाः. ६ R पश्यामो for पश्येम. ७ R °परिवर्तो for °परिवर्तं°. ८ R om. इति. ९ R परं° for अपर°. १० R सार्व° for सर्व°. ११ R निष्क्रमस्य for निष्क्रम्यस्य. १२ R om. पेयालं. १३ R प्रतिसनीलस्य for संल्यनस्य

अथ च पुनर्भिक्षवो धर्मताप्रतिलम्भ एष च चरम[1]भाविकानां बोधिसत्त्वानां यदवश्यं दशदिग्लोकधातुस्थितैर्बुद्धैर्भगवद्भिरन्तःपुरमध्यगताः संगीतितूर्यनिर्नादितैरेभिरेवंरूपैर्धर्ममुखैः संचोदितव्या भवन्ति ॥

तत्रेदमुच्यते –

R 185 ये सत्त्वाग्रा दशदिग्लोके तेषु विशेषा[2]त्तत्र रतितुरियैः[3] ।
गाथा गीता इम रतिमधुरा संचोदेन्ती नरवरप्रवरम् ॥ १ ॥
पूर्वि तुभ्यं अयु कृतु प्रणिधी दृष्ट्वा सत्त्वान् दुःखशतभरितान् ।
लेनं[4] त्राणं जग[5]निजशरणे भेष्ये नाथु हितकरु परमः ॥ २ ॥
साधो वीरा स्मर चरि पुरिमां या ते आसीज्जगहितप्रणिधिः ।
कालो वेला अयु तव समयो निष्क्रम्याही ऋषिवरप्रवरा ॥ ३ ॥
L 162 यस्यार्थे ते धनवर विविधा त्यक्ता पूर्वे शिरकरचरणा ।
भेष्ये बुद्धो नरमरुदमको लोकस्याग्रो[6] गुणशतनिचितः ॥ ४ ॥
त्वं शीलेन व्रततपचरितः त्वं क्षान्तीये जगहितकरणः ।
त्वं वीर्येणा शुभगुणनिचितो ध्याने प्रज्ञे न तु समु त्रिभवे ॥ ५ ॥
क्रोधाविष्टा खिलमलबहुला ते मैत्रीये त्वयि स्फुट सुगता ।
कारुण्यं ते बहुविधमबुधे[7] मिथ्यात्वेषू[8] शुभगुणरहिते ॥ ६ ॥
पुण्यज्ञाने शुभानिचितात्मा ध्यानाभिज्ञो प्रतपसि विरजो ।
R 186 ओभासेसी[9] दश इम दिशतो मेघा मुक्तः शशिरिव विमलः ॥ ७ ॥
एते चान्ये बहुविध रुचिरा तूर्यैर्घोषा[10] जिनरुतरवना[11] ।
ये चोदेन्ती सुरनरमहितं निष्क्रम्याही अयु तव समयु ॥ ८ ॥ इति ॥

बोधिसत्त्वस्य खलु पुनर्भिक्षवस्तस्मिन् गृहवरप्रधाने सर्वोपकरणसमृद्धिसमुदिते यथाभिप्रायसुखविहारानुकूले अमरपुरभवनप्रकाशे वितर्दिनिर्यूहतोरणगवाक्षहर्म्यकूटागारप्रासादवरप्रवरे सर्वरत्नविचित्रालंकारविविधभक्तिसुविभक्ते उच्छ्रितछत्रध्वजपताकानेकरत्नकिङ्किणीजालसमलंकृते अनेकपट्टदामशतसहस्राभिप्रलम्बिते नानारत्नप्रत्युप्ते मुक्ताहाराभिप्रलम्बिते विचित्रपट्टरत्नसंक्रमोपशोभिते अवसक्तपट्टमाल्यदामकलापे गन्ध[12]घटिकानिर्धूपिते अवश्यायपटविततवितानेसर्वर्तुकपुष्पपरमसुगन्धिसुरुचिराभिप्रकीर्णपुष्करिणीपुण्डरीकनवनलिनीजालसंस्थानपरिभोगबहुले पत्रगुप्तशुकसारिककोकिलहंसमयूरचक्रवाककुनालकलविङ्कजीवं[13]जीवकादिनानाविधद्विजगणमधुर स्वरनिकूजिते नीलवैडूर्यमये धरणीतल[14]संस्थानपरिभोगे सर्वरूपप्रतिभाससंदर्शने अतृप्तनयनाभिरम्ये

---

१ R चरमभाविनां for °भाविकानां. २ R विशेषाः for विशेषात्. ३ R रतितुर्यैः for °तुरियैः. ४ R तेन for लेनं. ५ R जगति च for जगनिज°. ६ R अग्र्यो. for अग्रो. ७ R सुबुधे for अबुधे. ८ R मिथ्यात्वे आशुभ° for मिथ्यात्वेषू शुभ°. ९ R आभासेसी. १० R तुर्या घोषा for तूर्यैर्घोषा. ११ R °रचिताः for °रवना. १२ R गन्धवटिका° for °घटिका°. १३ L °जीवजीव° for °जीवंजीव°. १४ R धरणीतले for °तल°.

परमप्रीतिप्रामोद्यसंजनने तस्मिन् गृहवरप्रधानेऽध्यावसतो बोधिसत्त्वस्योदारवरशरणभवननिवासिनोऽमलविमलनिर्मलाङ्गस्यामुक्तमाल्याभरणस्य[1] प्रवरसुरभिगन्धानुलेपनानुलिप्तगात्रस्य शुक्लशुभविमल- L 163
विशुद्धनिर्मलवस्त्रप्रावृतशरीरस्य अनेकदिव्यदूष्यसूक्ष्म[2]सुविन्यस्तमृदुकाचिलिन्दिकसुखसंस्पर्शवराङ्ग- R 187
रचितशयनतलाभिरूढस्य अमरवधूभिरिव सर्वतो अनवद्याप्रतिकूलदर्शनशुभोपचारचरितस्य अभिरूपान्तःपुरमध्यगतस्य शङ्खभेरीमृदङ्गपणवतुणववीणावल्लकिसंपताडकिपलनकुलसुघोषक[3]मधुरवेणुनिर्नादितघोषरुतनानातूर्यसंगीतिसंप्रयोगप्रतिबोधितस्य ये च नारीगणाः स्निग्धमधुरमनोज्ञस्वरवेणुनिर्नादितनिर्घोषरुतेन बोधिसत्त्वं प्रतिसंबोधयन्ति स्म, तेषां दशदिगवस्थितानां बुद्धानां भगवतामधिस्थानेन तेभ्यो वेणुतूर्यनिनादनिर्घोषरुतेभ्य इमा बोधिसत्त्वस्य संचोदना गाथा निश्चरन्ति स्म —

या नार्यो मुदित[4]मनाः प्रसन्नचित्ता
वेणुभ्यो मधुरमनोरमं रणन्ते ।
आवेशाद्दशदिग्गतां जिनोत्तमानां
गाथेमा विविधविचित्रचित्ररूपाः ॥ ९ ॥

पूर्वे[5] ते अयु ( कृतु ) प्रणिधी अभूषि वीरा
दृष्ट्वेमां जनत सदा अनाथभूताम् ।
शोचिष्ये जरमरणात्[6]तथान्यदुःखाद्
बुद्धित्वा पदमजरं परं अशोकम् ॥ १० ॥

R 188

तत्साधो पुरवर[7] इत शीघ्रं
निष्क्रम्या पुरिमर्षिभि[8] चीर्णम् ।
आक्रम्या धरणितलप्रदेशं
संबुद्ध्या असदृशजिनज्ञानम् ॥ ११ ॥

L 164

पूर्वे ते धनरतन विचित्रा
त्यक्ताभूत् करचरणप्रियात्मा ।
एषोऽद्या[9] तव समयु महर्षे
धर्मौघं जगि विभज अनन्तम् ॥ १२ ॥

शीलं ते शुभ विमलमखण्डं
पूर्वान्ते[10] वर सततमभूषी[11] ।
शीलेनानतिसदृशु महर्षे
शोचेही जगु विविधकिलेशैः ॥ १३ ॥

---

१ R °मालाभरणस्य for °माल्या°. २ R °पुष्पगुच्छसूक्ष्म° for °दिव्यदूष्यसूक्ष्म°. ३ R °संपताडावचरसुघोष° for °संपताडकिपलनकुलसुघोष°. ४ R प्रमुदित° for मुदित°. ५ R पूर्यन्ते for पूर्वंते. ६ R °मरणं for °मरणात्. ७ R पुरवरत for पुरवर इत. ८ R° ऋषिभिश्च for °ऋषिभि. ९ R एषोऽद्यं for एषोऽद्या. १० R पूर्वं ते for पूर्वान्ते. ११ R अभाषी for अभूषी.

क्षान्तीये भव शतचरितस्त्वं
क्षान्तास्ते जगि विविध दुरुक्ताः ।
क्षान्ताये क्षमदमनिरतात्म
नैष्क्रम्ये मति कुरु द्विपदेन्द्रा ॥ १४ ॥
वीर्यं ते दृढमचलमकम्प्यं
पूर्वान्ते पृथु सुगत अभूवन् ।
धर्षित्वा नमुचि[1] शठं ससैन्यं
शोषिष्ये त्रय सकलअपायात् ॥ १५ ॥
यस्यार्थे व्रततप चरितस्त्वं
ध्यायित्वा कलिकलुषकिलेशां ।
त्वं वर्षा अमृतजलमोघं
तर्पेही चिरतृषितै[2] अनाथां ॥ १६ ॥
तां पूर्वा गिरवरमनुचिन्त्या
R 189 निष्क्रम्या पुरवर इत शीघ्रम् ।
बुद्धित्वा पदममृतमशोकं
तर्पिष्ये अमृतरसि तृषार्ता ॥ १७ ॥
प्रज्ञाया परिचरिकुशल त्वं
ज्ञानं ते पृथु विपुलमनन्तम् ।
मूढानां विमतिपथस्थितानां
प्रज्ञाभां शुभरुचिर[3] कुरु त्वम् ॥ १८ ॥
मैत्रायां भव शतचरितस्त्वं
कारुण्ये वर मुदित उपेक्षे ।
यामेवा वैरचरि[4] चरितस्त्वं
तामेवा चरिं[5] विभज जगस्य ॥ १९ ॥
एवं[6] दश दिश जिनतेजै-
र्गाथा वै गुणकुसुमविचित्राः ।
तूर्येभ्यो विविधमनुरवन्ते[7]
चोदेन्ती शयनगतकुमारम् ॥ २० ॥
यदं[8] पुन प्रमुदित रतिकर प्रमदा
सुरुचिर सुमधुर प्रभणिषु तुरियैः ।

---

१ R नमुचिशतं for नमुचि शठं. २ R तृषिताननाथां. ३ R °रुचिरां for °रुचिर. ४ R om. वरचरि. ५ R वरचरि for चरिं. ६ R एतानी for एवं ता. ७ R विविधमनोरमं for विविधमनुरवन्ते. ८ R यदि for यद.

अथ जिन दशदिशि सुरनरदमका:
गिरवरमनुरवि ततु रवि तुरियैः ॥ २१ ॥
कृत त्वयि हितकर बहुगुण जनतो[1] L 165
निजिनितु निजगुण विचरति[2] गतिषू ।
स्मर स्मर पुरिमक व्रततपचरण
लघु व्रज द्रुमवरु स्पृश[3] पदममृतम् ॥ २२ ॥ R 190
सुतृषित नरमरु जिनगुणरहिता
त्वयि मति प्रतिबलु अमृतरसददा ।
दशबलगुणधर बुधजनमहितं[4]
लघु त्वयि नरपति विभजहि[5] अमृतम् ॥ २३ ॥
त्यजि त्वयि पुरि भवि धनमणिकनका
सखि प्रिय सुत महि सनगरनिगमा ।
शिरमपि त्यजि स्वकु[6] करचरनयना[7]
जगति य हितकरु जिनगुणनिरता ॥ २४ ॥
पुरि तुम नरवरसुतु नृपु[8] यदभू
नरु तव अभिमुख इम गिरमवची ।
दद मम इम महिं सनगरनिगमां
त्यजि तद प्रमुदितु न च मनु क्षुभितो ॥ २५ ॥
पुरि तुम नरपति स्वकु[9] द्विज यदभू R 191
गुरुजनि[10] परिचरि न च द्रुहि परतो ।
स्थपयिसु[11] द्विजवर बहुजन कुशले
च्युतु ततु भवगतु मरुपुरनिलयम् ॥ २६ ॥
पुरि तुम नृपसुत ऋषिवरु यदभू
छिनि तव तनुरुह कलिनृपु रुषितो ।
कृत त्वयि कुलक्रिये[12] न च मनु क्षुभितो L 166
पयु[13] तव स्रवि[14] तद करतलचरणैः ॥ २७ ॥
स्यमु[15] पुन ऋषिसुत त्वयि पुरि[16] यदभू
व्रतरतु गुरुभरु गिरिवरनिलये ।
हत भव नृपतिन विषकृत इषुणा
कृप तव तहि नृप न च मनु क्षुभितो ॥ २८ ॥

---

१ R जनता for जनतो. २ R विचरसि. ३ R स्पृशय for स्पृश. ४ R °महिते for °महितं. ५ R विभजति. ६ R स्वकुल for स्वकु. ७ R °चरण° for चर.° ८ R नृषु for नृपु. ९ R स्वकुल for स्वकु. १० R गुरुजन for °जनि. ११ R स्थपयसि. १२ R कुलक्रिये. १३ R अयु for पयु. १४ R ग्रह for स्रवि. १५ R स्मर for स्यमु. १६ R पुर for पुरि.

पुरि तुम गुणधर मृगपति यदभू
गिरिनदिबहुजलि दुयमनु पुरुषो ।
R 192 हित भव त्वयि नरु स्थल[1]पथि स्थपितो
उपनयि तव अरि[2] न च मनु क्षुभितो ॥ २९ ॥

पुरि तुम नरवर त्यजि सुतु यदभू
मणि तव प्रपतितु जलधरि विपुले ।
च्यवयितु क्षपयितु[3] त्वयँ[4] महउदधिं
लभि तदँ[5] धनमणि दृढबल वषभी ॥ ३० ॥

पुरि तुम सुपुरुष ऋषिवरु यदभू
द्विज तव उपगतु भव मम शरणम् ।
भणि ऋषि द्विजवर मम[6] रिपुउपने
त्यजि त्वयँ[7] स्वकि तनु न च द्विज त्यजसे ॥ ३१ ॥

स्यमु[8] ऋषि उपगतु पुरि द्रुमनिलये
रुचि भणि तरुरुह कति इम गणये ।
सुविदित सुगणित यथ तहि किशला
R 193 तथ तव अवितथ समगिर रचिता ॥ ३२ ॥

L 167 सुकुल[9] सुगुणधर पुरि द्रुमि वसतो
क्षयगतु न च त्यजि कृतु स्मरि पुरिमम् ।
मरुपति प्रमुदितु तव गुण स्मरतो[10]
श्रियकरि द्रुमवरि यथरिव[11] पुरिमा ॥ ३३ ॥

इति तव असदृश व्रततपचरणा
बहुगुण गुणधर गुणपथि चरतो ।
त्यजि महि सनगरि अयु तव समयो
लघु जगु स्थपयहि जिनगुणचरणे ॥ ३४ ॥

यद प्रमदरतना शुभवस्त्रा भूषितगात्रा
वरप्रवरु तुरिया[12] सुमनोज्ञा संप्रभणीषु ।
अथ दशसू[13] दिशतो जिनतेजैर्गाथ विचित्रा
R 194 इति [14]रविषू मधुरा रुतघोषा तूर्यस्वरेभ्यः ॥ ३५ ॥

---

१ R स्थलपति for° पथि. २ R पुरि for अरि. ३ R क्षपयतु. ४ R स्वय for त्वय. ५ R तद मणि पुन for तद धनमणि. ६ R नर for मम. ७ R स्वय for त्वय. ८ स्मर for स्यमु. ९ R हे सुकुलगुणधर for सुकुल सुगुण°. १० R स्मरते for स्मरतो. ११ R यथ शिव for यथरिव. १२ R तुरिय मनोज्ञा for तुरिया सुमनोज्ञा. १३ R दशदिशातो for दशसू दिशातो. १४ R रवि सुमधुरा for रविषू मधुरा.

तव प्रणिधी पुरिमे बहुकल्पां लोकप्रदीपा
जरमरणग्रसिते अहु लोके त्राणु भविष्ये ।
स्मर पुरिमप्रणिधिं नरसिंहा[1] या ति अभूषी
अयु समयो त्वमिहा द्विपदेन्द्रा निष्क्रमणाय ॥ ३६ ॥

भवनयुते त्वमिहा बहुदानं दत्तमनेकं
धनकनका रतना शुभवस्त्रा रत्नविचित्रा ।
करचरणा नयना प्रियपुत्रा[2] राज्य समृद्धं
त्वयि त्यजितं न च ते खिलदोषा याचनकेषु ॥ ३७ ॥

शिशुनृपति त्वमिहा शशिकेतो आसि सुदंष्ट्रो
कृप करुणामनसो मणिचूडो चन्द्रप्रदीपः ।
इति प्रमुखा करिया दृढशूरो राजसुनेत्रो L 168
बहु नृपति नयुता रतं[3] दाने त्वं संविकुर्वन्[4] ॥ ३८ ॥ R 195

तव सुगता चरितो[5] बहुकल्पां शीलचरीये
मणिरत्ना विमला सदृशाभूच्छीलविशुद्धिः[6] ।
त्वयि चरता चमरी[7] यथ बालं रक्षितु शीलं
कृतु त्वमिहा जगति विपुलार्थं[8] शीलरतेना ॥ ३९ ॥

गजवरु त्वमिहा रिपुलुब्धे[9] विद्धु इषूणा
कृप करुणा जनिया अतिरौद्रे छादितु शोभे ।
परित्यजि ते रुचिरा शुभदन्ता न च त्यजि शीलं
इति प्रमुखा करिया बहु तुभ्यं शीलविकुर्वी ॥ ४० ॥

त्वयि सहिता जगतोऽहित अनेका दुःखसहस्रा
बहुकटुकावचनं वधबन्धा क्षान्तिरतेना ।
परिचारित[10] पुरिमे नर[11] ये ते सर्वसुखेना
पुन वधकास्तव तेह[12] अभूवन् तच्च ति क्षान्तम् ॥ ४१ ॥ R 196

गिरिप्रवरानिलये तुम नाथा ऋक्षु यदासी
हिमकिरणा[13] सलिला भयभीतं त्वं नरु गृह्य ।
परिचरसि विविधा फलमूलैः सर्वसुखेना
लघु वधकां स तवा[14] उपनेत्री तं च ति क्षान्तम् ॥ ४२ ॥

---

१ R नरसिंहपतेऽभूद् for नरसिंहा या ति अभूषीद्. २ R प्रियसुत for °पुत्रा. ३ R रतिदाने for रत दाने. ४ R सर्वि कुर्वन् for संविकुर्वन्. ५ R चरिता for चरितो. ६ R सदृशाशील° for सदृशाभूच्छील°. ७ R चरि for चमरी. ८ R विपुलार्थः for °लार्थं. ९ R रिपु लब्धो for° लुब्धे. १० R परिवारित for °चारित. ११ R नरपते for नर ये ते. १२ R तेऽबभुवु तं च for तेह अभूवन् तच्च. १३ R हिमकिरणै-र्मलिनं for हिमकिरणा सलिला. १४ R त्वमुपनेत्री for तवा उपनेत्री.

दृढु संस्थितमचलमकम्प्यं वीर्यु तवासीत्
व्रततपसा विविधा गुणज्ञानं एषत बोधिम् ।
कृतु[1] अबलो नमुची वशवर्ती वीयबलेना
अयु समयो त्वमिहा नरसिंहा निष्क्रमणाय ॥ ४३ ॥
L 169 हयप्रवरु त्वमिहा पुरि आसी[2] हेमसुवर्णो
लघु गगने व्रजसे कृपजातो राक्षसिद्वीपम् ।
व्यसनगत[3] मनुजां[4] तद गृह्या क्षेमि थपेसी
R 197 इति प्रमुखा करिया बहु तुभ्यं वीर्यविकुर्वा ॥ ४४ ॥
दमशमथे नियमाहतक्लेशा ध्यायिन अग्रो[5]
लघु चपलं विषयै रतिलोलं चित्तु दमित्वा ।
कृतु स्वगुणो[6] त्वमिहा जगतोऽर्थे ध्यानरतेना
अयु[7] समयो त्वमिहा[8] वरसत्त्वा ध्यानविकुर्वा ॥ ४५ ॥
त्वं पुरिमे ऋषि सुस्थितु आसी ध्यानरतीये
नृपरहिता मनुजा त्वमु[9] गृह्या राज्यभिषिञ्ची ।
दशकुशली जनिता थपिता ते ब्रह्मपथेषु[10]
च्युत मनुजा व्रजिषू[11] तद सर्वे ब्रह्मनिकेतम् ॥ ४६ ॥
दिशिविदिशि विविधागतिज्ञाने त्वं सुविधिज्ञो
परचरिता जगति रुतज्ञाने इन्द्रियज्ञाने ।
नयविनये विविधामतिधारे पारगतस्त्वं
R 198 अयु समयो त्वमिहा[12] नृपसूनो निष्क्रमणाय ॥ ४७ ॥
त्वयि पुरिमा जनता इम दृष्ट्वा दृष्टिविपन्ना
जरमरणा विविधा बहुदुःखे[13] कृछ्रगता हि ।
भवविभवंकरणो[14] ऋजुमार्गे स्वामनुबद्धा
हततमस त्वमिहा कृतु लोके अर्थु महन्तो ॥ ४८ ॥
इति विविधा रुचिरा गुणयुक्ता गाथ विचित्रा
ततु रविषु तुरियेभी जिनतेजा चोदयि वीरम् ।
L 170 दुःखभरितजनते[15] इह दृष्ट्वा मा त्वमुपेक्षा
अयु समयो त्वमिहा वरबुद्धे[16] निष्क्रमणाय ॥ ४९ ॥

---

१ R कृतु लोकन for कृतु अबलो. २ R आसीद् for आसी. ३ R व्यसनशत for ° गत. ४ मनुजान्तद for मनुजां तद. ५ R अग्न्या for अग्रा. ६ R स्वगुणा for स्वगुणो. ७ R om. अयु समयो. ८ R त्वमिहावर for त्वमिहा वर°. ९ R त्वयु. १० ब्रह्मपटेषू for °पथेषु. ११ R व्रजिष्ट for व्रजिषू. १२ R om. त्वमिहा. १३ R °दुःखैः for °दुःखे. १४ R भवति तव करुणा for भवविभवंकरणो. १५ R °जनत for °जनते. १६ R वरबुद्ध for °बुद्धे.

विचित्रवस्त्ररत्नहारगन्धमाल्यभूषिता
प्रसन्नचित्त प्रेमजात नारियो प्रहर्षिता ।
प्रबोधयन्ति येऽग्रसत्त्व तूर्यसंप्रवादितैः
जिनानुभावि एकरूप गाथ तूर्य निश्चरी ॥ ५० ॥

यस्यार्थि तुभ्य कल्प नैक त्यक्तु त्याग दुस्त्यजा R 199
सुचीर्ण शीलु क्षान्ति वीर्य ध्यान प्रज्ञ[1] भाविता ।
जगद्धितार्थ सो ति कालु सांप्रतं उपस्थितो
नैष्क्रम्यबुद्धि चिन्तयाशु मा विलम्ब नायक ॥ ५१ ॥

त्यक्तु पूर्वि रत्नकोश स्वर्णरूप्यभूषणा
यष्ठा[2] ति यज्ञ नैकरूप तासु तासु जातिषु ।
त्यक्त[3] भार्य पुत्र धीत कायु राज्यु जीवितं
बोधिहेतुरप्रमेय त्यक्तु दुस्त्यजा त्वया ॥ ५२ ॥

अभूषि[4] त्वं अदीनपुण्य राज विश्रुतश्रियो[5]
निमिंधरो निमिश्च कृष्ण( बन्धु ) ब्रह्मदत्त केसरी ।
सहस्रयज्ञ धर्मचिन्ति अर्चिमान् दृढधनु[6]
सुचिन्तितार्थ दीनसत्त्व[7] ये ति त्यक्त दुर्स्त्यजा[8] ॥ ५३ ॥

सुतसोम दीप्तवीर्य पुण्यरश्मि यो सोऽभू
महत्यागवन्तु स्थामवन्तु यः कृतज्ञ त्वं अभूः ।
राजर्षि चन्द्ररूपवन्तु शूर सत्यवर्धनो R 200
सुभाषितंगवेषि राजि असि सुमतिं च सूरतो ॥ ५४ ॥

चन्द्रप्रभो[9] विशेषगामि रेणुभू[10] दिशांपति L 171
प्रदानशूर काशिराजु रत्नचूड शान्तगः[11] ।
एति चान्यि पार्थिवेन्द्र येभि त्यक्त दुस्त्यजा
यथा ति वृष्ट त्यागवृष्टि एष धर्म वर्षही ॥ ५५ ॥

दृष्टा ति पूर्वि सत्त्वसार गङ्गवालुकोपमा
कृता ति तेषं[12] बुद्धपूज अप्रमेयचिन्तिया ।
वराग्रबोधि एषमाण सत्त्वमोक्षकारणाद्
अयं स कालु प्राप्तु सूरु निष्क्रमा पुरोत्तमात् ॥ ५६ ॥

---

१ R °प्रज्ञशत for °प्रज्ञ. २ R यष्ट्वा for यष्ठा. ३ R त्यक्ता ति भार्या for त्यक्त भार्य पुत्र धीत. ४ R अभूषीसू for अभूषि. ५ R विश्रुत श्रिया for °श्रियो. ६ R दृढधनी for °धनु. ७ R दीनसत्त्वा यं for दीनसत्त्व ये ति. ८ R दुस्त्यजाः सुताः for दुस्त्यजा. ९ R चन्द्रप्रभा for प्रभो. १० R रेणुभूद्दिशा for रेणुभू दिशांपति. ११ R शान्ततः for शान्तगः. १२ R तेषु for तेषं.

प्रथमेन ते अमोघदर्शि शालपुष्पपूजितो
विरोचनः[1] प्रसन्नचित्त प्रेक्षितैः[2] क्षणान्तरम् ।
R 201 हरीतकी च एक दत्त दुन्दुभिस्वराय[3] ते
तृणोत्थं[4] गृह्य धारिता ति दृष्ट चन्दनं गृहम् ॥ ५७ ॥

पुरप्रवेशि रेणु दृष्ट क्षिप्तु चूर्णमुष्टिका
धर्मेश्वराय साधुकारु[5] दत्तु धर्म भाषतो[6] ।
नमो नमः समन्तदार्शी दृष्ट वाच भाषिता
महार्चिस्कन्धि स्वर्णमाल क्षिप्त हर्षितेन ते ॥ ५८ ॥

धर्मध्वजो दशाप्रदानि रोधु मुञ्ज मुष्टिना
अशोकपुष्पि ज्ञानकेतु ध्वाँगुपान[7] सारथिः ।
रत्नशिखी च दीपदानि पद्मयोनि ओषधी
सर्वाभिभूश्च मुक्तहारि पद्मदानि सागरो ॥ ५९ ॥

वितानदानि पद्मगर्भि सिंहु वर्षसंस्तरे
शालेन्द्र[8]राज सर्पिदानि क्षीरत्यागि पुष्पिती ।
L 172 यशोदत्तु कुरुण्टपुष्पि सत्यदार्शी भोजने[9]
R 202 कायु प्रणामि ज्ञानमेरु नागदत्तु चीवरे ॥ ६० ॥

अत्युच्चगामि चन्दनाग्रि तीक्ष्णलोहमुष्टिना
महावियूह पद्मदानि रश्मिराज रत्नभिः ।
शाक्यमुनि च सुवर्णमुष्टि[10] इन्द्रकेतु संस्तुतो
सूर्याननो वतंसके हि स्वर्णपट्टि सूमती ॥ ६१ ॥

नागाभिभू मणिप्रदानि पुष्य दूष्यसंस्तरे
भैषज्यराजु रत्नछत्रि सिंहकेतु आसने ।
गुणाग्रधारि रत्नजालि सर्ववादि काश्यपो
गन्धाग्रि चूर्णि मुक्त अर्चिकेतु पुष्पचैत्यके ॥ ६२ ॥

अक्षोभ्यराज कूटागारि माल्य लोकपूजितो
तगरशिखि च राज्यत्यागि सर्वगन्धि दुर्जयो ।
महाप्रदीप आत्मत्यागि भूषणे पद्मोत्तरो
R 203 विचित्रपुष्पि धर्मकेतु दीपकारि उत्पलैः ॥ ६३ ॥

---

१ R वैरोचनः for विरो°. २ R प्रेक्षि तत्क्षणा° for प्रेक्षितः क्षणा°. ३ R दुंदुभिः स्वरायते for दुन्दुभिस्वराय ते. ४ R तृणोल्क for तृणोत्थ. ५ R साधका रुदन्तु for साधुकारु दत्त. ६ R धर्म भाषते for धर्म भाषतो. ७ R योगयान for ध्वागुपान. ८ R सारेन्द्र° ; L सालेन्द्र° for शालेन्द्र°. ९ R भाजने for भोजने. १० R स्वर्णमुष्टिपट्टि for सुवर्णमुष्टि.

एति चान्यि सत्त्वसार ये[1] ति पूर्व पूजिता
नानारूप विचित्र पूजे[2] अन्यजन्यकुर्वता[3] ।
स्मराहि ते अतीत बुद्ध ता च पूज शास्तुनां
अनाथसत्त्व शोकपूर्ण मा उपेक्षि निष्क्रमा ॥ ६४ ॥

दीपंकरेति दृष्टमात्रि लब्ध क्षान्ति उत्तमा
अभिज्ञ पञ्च अच्युता[4] ति लब्ध आनुलोमिका ।
अतोत्तरेण[5] एकमेक बुद्ध पूजचिन्तिया
प्रवर्तिता असंख्यकल्प सर्वलोकधातुषू ॥ ६५ ॥

क्षीणा ति कल्प अप्रमेय ते च बुद्ध निर्वृता L 173
तत्रापि सर्व आत्मभावि[6] ते च नाम क गता ।
क्षयान्तधर्मि सर्वि भावु नास्ति नित्यु संस्कृते
अनित्य काम राज्यभोग निष्क्रमा पुरोत्तमात् ॥ ६६ ॥ R 204

जराँ[7] च व्याधि मृत्यु एन्ति दारुणा[8] महाभया
हुताशनो व उग्रतेज भीम कल्पसंक्षये ।
क्षयान्तधर्मि सर्वि भावु नास्ति नित्यु संस्कृते
सुकृच्छ्र प्राप्त सत्त्व * * निष्क्रमा गुणंधरा ॥ ६७ ॥

यद नारिगणस्तुणवेणुरवैः
विविधैस्तुरियैः प्रतिबोधयिषु ।
सुखशयनगतं मनुजाधिपतिं
तद तूर्यरवो अयु निश्चरते ॥ ६८ ॥

ज्वलितं त्रिभवं जरव्याधिदुखैः
मरणाग्निप्रदीप्तमनाथमिदम् ।
भवनि[9] शरणे सद मूढ जगत्
भ्रमती भ्रमरो यथ कुम्भगतो ॥ ६९ ॥

अध्रुवं त्रिभवं शरदभ्रनिभं
नटरङ्गसमा जगि रूर्मिचुती[10] ।
गिरिनद्यसमं लघुशीघ्रजवं
व्रजतायु जगे यथ विद्यु नभे ॥ ७० ॥

---

१ R येभि for ये ति. २ R om. पूज. ३ R om. °जन्य. ४ R अच्युतानि for अच्युता ति. ५ R ततोत्तरेणैकमेक for अतोत्तरेण एकमेक. ६ R आत्मभाव. ७ R जरारुजाव्याधि for जरा च व्याधिं. ८ L दारुणो for दारुणा. ९ R न च निसरणे for भवनि शरणे. १० R जन्मिच्युति for रूर्मिचुती.

भुवि देवपुरे त्रिअपायपथे
भवतृष्णअविद्यवशा जनता ।
R 205 परिवर्तिषु पञ्चगतिष्वबुधाः
यथ कुम्भकरस्य हि चक्रभ्रमी ॥ ७१ ॥

प्रियरूपवरैः सह स्निग्धरुतैः
शुभगन्धरसै वरस्पर्शसुखैः ।
परिषिक्तमिदं कलिपाश जगत्
मृगलुब्धकपा[1]शि य[2]थैव कपि ॥ ७२ ॥

सभया स[3]रणाः सद वैरकराः
बहुशोक उपद्रव कामगुणाः ।
असिधारसमा विषप[4]त्रनिभा
ज[5]हितार्यजनैर्यथ मीढघटाः ॥ ७३ ॥

स्मृतिशोककरास्तमसीकरणाः
भयहेतुकरा दुखमूल सदा ।
भवतृष्णलताय वि[6]वृद्धिकराः
सभया सरणा सद कामगुणाः ॥ ७४ ॥

L 174 यथ अग्निखदा ज्वलिता सभया
तथ काम इमे विदितार्यजनः ।
महपङ्कसमा [7]अँसिसुन्धुसमाः
मधुदिग्ध इव क्षुरधार यथा ॥ ७५ ॥

यथ सर्पिसरो यथ मीढघटाः
तथ काम इमे विदिता विदुषाम् ।
R 206 तथ शूलसमा द्विजपेशिसमाः
यथ श्वान करङ्क स[8]वैरमुखाः ॥ ७६ ॥

उदचन्द्रसमा इमि कामगुणाः
प्रतिबिम्ब इवा गिरिघोष यथा ।
प्रतिभाससमा नटरङ्गसमाः
तथ स्वप्नसमा विदितार्यजनैः ॥ ७७ ॥

---

१ R °पाणि for °पाशि. २ R हि बद्धकमपि for यथैव कपि. ३ R मरणाः for सरणा. ४ R विषयन्त्र° for विषपत्र°. ५ R त्यजहिता for जहिता°. ६ R विवृद्धकराः for विवृद्धि°. ७ R असिसिन्धुसमा for असिसुन्धु°. ८ R सवैर तथा for सवैरमुखाः. ९ R उदकचन्द्र° for उदचन्द्र°.

क्षणिका वशिका इमि कामगुणाः
तथ[1] मायमरीचिसमा अलिकाः ।
उदबुद्बुदफेनसमा वितथा
परिकल्पसमुत्थित बुद्ध बुधैः ॥ ७८ ॥

प्रथमे वयसे वररूपधरः
प्रिय इष्ट मतो इय बालचरी ।
जरव्याधिदुखै हततेज[2]वपुं
विजहन्ति मृगा इव शुष्कनदीम् ॥ ७९ ॥

धनधान्यवरो बहुद्रव्यबली
प्रिय इष्ट मतो इय बालचरी ।
परिहीनधनं पुन कृच्छ्रगतं
विजहन्ति नरा इव शून्यटवीम् ॥ ८० ॥

यथ पुष्पद्रुमो सफलेव द्रुमो
नरु दानरतस्तथ प्रीतिकरो ।
धनहीन जरार्तितु याचनको
भवते तद अप्रियु गृध्रसमः ॥ ८१ ॥

प्रभु द्रव्यबली वररूपधरः R 207
प्रियसंगमनेन्द्रियप्रीतिकरो ।
जरव्याधिदुखार्दितु क्षीणधनो
भवते तद अप्रियु मृत्युसमः ॥ ८२ ॥

जरया जरितः समतीतवयो
द्रुम वि[3]द्युहतेव यथा भवति ।
जरजीर्ण अगारु यथा स[4]भयो
जरनिःसरणं लघु ब्रूहि मुने ॥ ८३ ॥

जर शोषयते नरनारिगणं
यथ मालुलता घनशालवनम् ।
जर वीर्यपराक्रमवेगहरी
जर पङ्कनिमग्न यथा पुरुषो ॥ ८४ ॥

जर रूपसुरूपविरूपकरी
जर: तेजहरी बल[5]स्थामहरी ।

---

१ R त इमे तथ अलिकोदकसमा for तथ मायमरीचिसमा अलिकाः. २ R om. तेज°. ३ R विद्युहश्च for विद्युहतेव. ४ R समयो for सभयो. ५ R om. बलस्थाम°.

सद[१] सौख्यहरी परिभावकरी[२]
जर मृत्युकरी जर ओजहरी ॥ ८५ ॥
L 175 बहुरोगशतै घनव्याधिदुखैः
उपसृष्ट जगज्ज्वलतेव मृगाः ।
जरव्याधिगतं प्रसमीक्ष्व[३] जगत्
दुखनिःसरणं लघु देशयही ॥ ८६ ॥
शिशिरे हि यथा हिमधातु महान्
तृणगुल्मवनौषधिओजहरो ।
तथ ओजहरो अहु[४] व्याधिजरो
परिहीयति इन्द्रिय रूप बलम् ॥ ८७ ॥
R 208 धनधान्यमहार्थक्षयान्तकरो
परितापकरः सह[५]व्याधिजरो ।
प्रतिघातकरः प्रियु द्वेष[६]करः
परिदाहकरो यथ सूर्य नभे ॥ ८८ ॥
मरणं चवनं चुति कालक्रिया
प्रियद्रव्यजनेन वियोगु सदा ।
अपुनागमनं च असंगमनं
द्रुमपत्रफला नदिस्रोत यथा ॥ ८९ ॥
मरणं वशिता[७]मवशीकुरुते
मरणं हरते नदि दारु यथा ।
असहायु नरो व्रजतेऽद्वितियो
स्वककर्मफलानुगतो[८] विवशः ॥ ९० ॥
मरणो[९] ग्रसते बहुप्राणिशतं
मकरेव जला हरि भूतगणम् ।
गरुडो उरगं मृगराजु गजं
ज्वलनेव तृणोषधिभूतगणम् ॥ ९१ ॥
इम ईदृशकै बहुदोषशतैः
जगु मोचयितुं कृत या प्रणिधि ।
स्मर तां पुरिमां प्रणिधानचरीं
अयु कालु तवा अभिनिष्क्रमितुम् ॥ ९२ ॥

---

१ L सह for सद. २ R बलस्थामहरी for परिभावकरी. ३ R प्रसमीक्ष्य. ४ R बहु° for अहु. ५ R सद for सह°. ६ R दुःखकरः for द्वेष°. ७ R वशितानवशी° for वशितामवशी°. ८ R °नुगता for °नुगतो. ९ R मरणं.

यद नारिगणः प्रहर्षितो
बोधयती तुरियैर्महामुनिम् ।
तद गाथ विचित्र निश्चरी
तूर्यशब्दात् सुगतानुभावतः ॥ ९३ ॥
लघु तद्धञ्जैति[1] सर्वसंस्कृतं
अचिरस्थायि :नभेव विद्युतः ।
अयु कालु तवा उपस्थितः R 209
समयो निष्क्रमणाय[2] सुव्रत ॥ ९४ ॥
संस्कार अनित्य अध्रुवाः
आमकुम्भोपम भेदनात्मकाः ।
परकेरक[3] याचितोपमाः
पांशुनगरोपम तावकालिकाः ॥ ९५ ॥
संस्कार प्रलोपधर्मिमे
वर्षकालि चलितं व लेपनम् ।
नदिकूल इवा सवालुकं L 176
प्रत्ययाधीन स्वभावदुर्बलाः ॥ ९६ ॥
संस्कार प्रदीपअर्चिवत्
क्षिप्रउत्पत्तिनिरोधधर्मिकाः[4] ।
अनवस्थित मारुतोपमाः
फेनपिण्डेव असार दुर्बलाः ॥ ९७ ॥
संस्कार निरीह शून्यकाः
कदलीस्कन्धसमा निरीक्षितः[5] ।
मायोपम चित्तमोहना
बालउल्लापन उर्क्क[6] मुष्टिवत् ॥ ९८ ॥
हेतूभि च प्रत्ययेभि चा
सर्वसंस्कारगतं प्रवर्तते ।
अन्योन्य[7] प्रतीत्य हेतुतः
तदिदं बालजनो न बुध्यते ॥ ९९ ॥
यथ मुञ्ज प्रतीत्य बल्वँजं
रज्जु व्यायामबलेन वर्तिता ।

१ R तद्धजति for तद्धञ्जति. २ R निष्क्रमाय. ३ R परकेलिक for °केरक. ४ R °निरोधधर्मका: for °धर्मिकाः. ५ R निरीक्षत for °क्षतः. ६ R उल्क for उर्क्क. ७ R [illegible] for बल्वजं.

R 210 घटियन्त्र सचक्र वर्तते
एष एकैकश नास्ति वर्तना ॥ १०० ॥

तथ सर्वभवाङ्गवर्तिनी
अन्यमन्योपचयेन निश्रिता[1] ।
एकैकश तेषु वर्तिनी
पूर्वपरान्तत नोपलभ्यते ॥ १०१ ॥

बीजस्य सतो यथाङ्कुरो
न च यो बीज स चैव अङ्कुरो ।
न च ततो न चैव तत्[2]
एवमनुच्छेद अशाश्वत धर्मता ॥ १०२ ॥

संस्कार अविद्यप्रत्यया:
ते संस्कारे न सन्ति तत्त्वतः ।
संस्कार अविद्य चैव हि
शून्य एके[3] प्रकृतीनिरीहका: ॥ १०३ ॥

मुद्रात्प्रतिमुद्र दृश्यते
मुद्रसंक्रान्ति न चोपलभ्यते ।
न च तत्र न चैव शाश्वतो
एव संस्कारानुच्छेदशाश्वता: ॥ १०४ ॥

चक्षुश्च प्रतीत्य रूपत:
चक्षुविज्ञानमिहोपजायते ।
न च चक्षुषि रूप निश्रितं[4]
रूपसंक्रान्ति न चैव चक्षुषि ॥ १०५ ॥

नैरात्म्यशुभाश्च धर्मिमे
पुनै[5]रात्मेति शुभाश्च कल्पिता: ।
विपरीतमसद्विकल्पितं
चक्षुविज्ञान ततोपजायते ॥ १०६ ॥

R 211 विज्ञाननिरोध[6]संभवं
विज्ञानोत्पादव्ययं विपश्यति ।
अकहिं च गतं अनागतं
शून्य मायोपम योगि[7] पश्यति ॥ १०७ ॥

---

१ R निःसृता for निश्रिता. २ R om. तत्. ३ R एते for एके. ४ R निःसृतं for निश्रितं. ५ R येन पुन° for पुनै°. ६ L निरोधसंभवं for निरोध°. ७ R यो विपश्यति for योगि पश्यति.

अरणिं यथ चोत्तरारणिं L 177
हस्तव्यायाम त्रयेभि संगति ।
इति प्रत्ययतोऽग्नि जायते
जातु कृतार्थु[१] लघु निरुध्यते ॥ १०८ ॥

अथ पण्डितु कश्चि मार्गते
कुतयं आगतु कुत्र याति वा ।
विदिशो दिशि सर्वि मार्गतो
नागति नास्य[२] गतिश्च लभ्यते ॥ १०९ ॥

स्कन्धधात्वायतनानि धातवः
तृष्ण अविद्या इति कर्मप्रत्यया ।
सामग्रि तु सत्त्वसूचना
स च परमार्थतु नोपलभ्यते ॥ ११० ॥

कण्ठोष्ठ प्रतीत्य तालुकं
जिह्वापरिवर्ति अक्षरा ।
न च कण्ठगता न तालुके
अक्षरैकैक तु नोपलभ्यते ॥ १११ ॥

सामग्रि प्रतीत्यतश्च[३] सा
वाचमनबुद्धिवशेन निश्चरी ।
मन वाच अदृश्यरूपिणी
बाह्यतोऽभ्यन्तर नोपलभ्यते ॥ ११२ ॥

उत्पादव्ययं विपश्यतो
वाच रुतघोषस्वरस्य पण्डितः ।
क्षणिकां वशिकां तदा दृशी R 212
सर्वा वाच प्रतिश्रुतकोपमाम् ॥ ११३ ॥

यथ तन्त्रि[४] प्रतीत्य दारु च
हस्तव्यायाम त्रयेभि संगति ।
तुणवीणसुघोषकादिभिः
शब्दो निश्चरते तदुद्भवः ॥ ११४ ॥

अथ पण्डितु कश्चि मार्गते
कुतयं[५] आगतु कुत्र याति वा ।

---

१ R कृतु कार्यु for कृतार्थु. २ R नागतिरस्य for नागति नास्य. ३ R प्रतीतश्च for प्रतीत्यतश्च.
४ R तन्त्र for तन्त्रि. ५ R कुतोऽयं for कुतयं.

विदिशो दिशि सर्वि मार्गतः
शब्दगमनागमनं न लभ्यते ॥ ११५ ॥

तथ हेतुभि प्रत्ययेभि च
सर्वसंस्कारगतं प्रवर्तते ।
योगी पुन भूतदर्शनात्
शून्य संस्कार निरीह पश्यति ॥ ११६ ॥

स्कन्धायतनानि धातवः
शून्य अध्यात्मिक शून्य बाह्यकाः ।
सत्त्वात्मविविक्तमनाल्या[1]
धर्माकाशस्वभावलक्षणाः ॥ ११७ ॥

इय ईदृश धर्मलक्षणा
बुद्ध दीपंकर दर्शने त्वया ।
अनुबुद्ध स्वयं यथात्मना
तथ बोधेहि सदेवमानुषां ॥ ११८ ॥

L 178 विपरीतअभूतकल्पितैः
रागैदोषैः[2] परिदह्यते जगत् ।
R 213 कृपमेघसमाम्बुशीतलां
मुञ्च धाराममृतस्य नायका ॥ ११९ ॥

त्वयि यस्य कृतेन पण्डिता
दत्तु दानं बहुकल्पकोटिषु ।
संप्राप्य हि बोधिमुत्तमां
आर्यधनसंग्रह करिष्य प्राणिनाम् ॥ १२० ॥

तां पूर्वचरीमनुस्मरा
नार्य धनहीन दरिद्र दुःखिताम् ।
मा उपेक्षहि सत्त्वसारथे
आर्यधनसंग्रहि तेषु कुर्वहि ॥ १२१ ॥

त्वयि शील सदा सुरक्षितं
पिथनार्थाय अपायभूमिनाम् ।
स्वर्गामृतद्वारमुत्तमां
दर्शयिष्ये बहुसत्त्वकोटिनाम् ॥ १२२ ॥

---

१ R सत्त्वा विविक्त° for सत्त्वात्मविविक्त°, २ R रागद्वेषैः for °दोषैः.

तां पूर्वचरीमनुस्मरा
बद्ध्वा द्वार निरयाय[1] भूमिनाम्।
स्वर्गामृतद्वार मुञ्चही
ऋद्ध्यहि[2] शीलवतो विचिन्तितम्॥ १२३॥

त्वयि क्षान्ति सदा सुरक्षिता
प्रतिघक्रोधशमार्थ देहिनाम्।
भावार्णव सत्त्व तारिया
स्थापयिष्ये शिवि क्षेमि निर्ज्वले॥ १२४॥

तां पूर्वचरीमनुस्मरा
वैरव्यापादविहिंसआकुलाम्।
मा उपेक्ष विहिंसचारिणः R 214
क्षान्तिभूमीय स्थपे इमं जगत्॥ १२५॥

त्वयि[3] वीर्य यदर्थ सेवितं
धर्मनावं समुदानयित्वना।
उत्तार्य जगद्भवार्णवात्
स्थापयिष्ये[4] शिवि क्षेमि निर्ज्वले॥ १२६॥

तां पूर्वचरीमनुस्मरा
चतुरोघैरिव मुह्यते जगत्।
लघु वीर्यबलं पराक्रमा
सत्त्व संतारयही[5] अनायकां॥ १२॥

त्वय[6] ध्यानकिलेशध्येषणा
भाविता यस्य कृतेन सूरता।
भ्रान्तेन्द्रिय प्राकृतेन्द्रियां
क्वपि चित्तार्थपथे[7] स्थपेष्यहम्॥ १२८॥

तां पूर्वचरीमनुस्मरा
क्लेशजालैरिहमाकुलं जगत्।
मा उपेक्षहि क्लेशुपद्रुतां
ध्यानैकाग्रि स्थपेहिमां प्रजाम्॥ १२९॥

---

१ R निरयावभूमिनां for निरयाय भूमिनाम्. २ R ऋद्धि हि for ऋद्ध्यहि. ३ R त्वयु for त्वयि. ४ R स्थापयिष्यसि विपक्षनिर्ज्वले for the line. ५ R तारय हे नायका for संतारयही अनायकां. ६ R त्वयु for त्वय. ७ R चित्रार्थ for चित्तार्थं.

L 179 त्वयि प्रज्ञ पुरा सुभाविता
मोहविद्यान्धतमोवृते[1] जगे ।
बहुधर्मशताभिलोकने
दास्ये चक्षुषि तत्त्वदर्शनम् ॥ १३० ॥
तां पूर्वचरीमनुस्मरा
मोहविद्यान्धतमोवृते जगे ।
R 215 ददही वरप्रज्ञ सुप्रभा
धर्मचक्षुं विमलं निरञ्जनम्[2] ॥ १३१ ॥
इयमीदृश गाथ निश्चरी
तूर्यसंगीतिरवातु नारिणाम् ।
यं श्रुत्व[3] मिद्धं विवर्जिया
चित्तु प्रेषेति[4] वराग्रबोधये ॥ १३२ ॥ इति ॥

इति हि भिक्षवोऽन्तःपुरमध्यगतो बोधिसत्त्वोऽविरहितोऽभूद्धर्मश्रवणेन, अविरहितोऽभूद्धर्ममनसिकारेण । तकस्माद्धेतोः ? तथा हि भिक्षवो बोधिसत्त्वो दीर्घरात्रं सगौरवोऽभूत् । धर्मेषु धर्मभाणकेषु चाध्याशयेन धर्मार्थिको धर्मकामो धर्मरतिरतोऽभूत् । धर्मपर्यैष्ट्यतृप्तो[5] यथाश्रुतधर्मसंप्रकाशकः, अनुत्तरो महाधर्मदानपतिः, निरामिषधर्मदेशको धर्मदानेनामत्सरः, आचार्यमुष्टिविगतो धर्मानुधर्मप्रतिपन्नो धर्मप्रतिपत्तिशूरः, धर्मलयनो धर्मत्राणो धर्मशरणो धर्मप्रतिशरणो धर्मपरायणः धर्मनिध्यात्तिः क्षान्तिनिर्यातः प्रज्ञापारमिताचरित उपायकौशल्यगतिं गतः ॥

तत्र भिक्षवो बोधिसत्त्वो महोपायकौशल्य[6]विक्रीडितेन सर्वान्तःपुरस्य यथाधिमुक्त्या[7] ईर्यापथमुपदर्श्य[8], पौर्विकाणां च बोधिसत्त्वानां लोकविषयसमतिक्रान्तानां लोकानुवर्तनक्रियाधर्मतामनुवर्त्य,
R 216 दीर्घरात्रं सुविदितकामदोषः सत्त्वपरिपाकवशादकामात्कामोपभोगं[9] संदर्श्य, अपरिमितकुशलमूलोपचयपुण्यसंभारबलविशेषणासदृशीं[10] लोकाधिपतेयतां[11] संदर्श्य, देवमनुष्यातिक्रान्तं सारोदारविविधविचित्ररूपशब्दगन्धरसस्पर्श[12]परमरतिरमणीयं कामरतिसौख्यमुपदर्श्य,
L 180 सर्वकामरतिस्वविषयेष्वपर्यन्तत्वात् स्वचित्तवशवर्तितां संदर्श्य, पूर्वप्रणिधानबलसहायकुशलमूलोपचितान् सत्त्वान् समानसंवासतया परिपाच्य[13], सर्वलोकसंक्लेशमला[14]संक्लिष्टचित्ततयान्तःपुरमध्यगतो यथाभिनिमन्त्रितस्य[15] सत्त्वधातोः परिपाककालमवेक्षमाणो भूयस्या मात्रया बोधिसत्त्वस्तस्मिन् समये पूर्वप्रतिज्ञामनुस्मरति स्म, बुद्धधर्मांश्चामुखीकरोति स्म, प्रणिधानबलं चाभिनिर्हरति स्म । सत्त्वेषु च महाकरुणामवक्रामति स्म । सत्त्वप्रमोक्षं च चिन्तयति स्म । सर्वसंपदो विपत्तिपर्यवसाना इति प्रत्यवेक्षते स्म । अनेकोपद्रवभयबहुलं च संसारमुपपरीक्षते

१ R °तमावृते for °तमोवृते. २ R निरङ्गणं for निरञ्जनम्. ३ श्रुत्वमिदं for श्रुत्व मिद्धं. ४ R प्रेमेति for प्रेषेति. ५ R °पर्येष्टतृप्तो for पर्यैष्ट्यतृप्तो. ६ R °कौशल्येन for °कौशल्य°. ७ R यथा विमुक्त्या for °धिमुक्त्या. ८ R °ईर्ष्यापथ° for ईर्या°. ९ R °दकामादकामोप° for °दकामात्कामोप°. १० L °सदृशी° for °सदृशीं. ११ R °धिपत्यतां for °धिपतेयतां. १२ R om. °रस°. १३ R परिवाच्य for °पाच्य. १४ R °क्लेशसत्त्वसंक्लिष्ट° for °क्लेशमलासं°. १५ R यथाभिमन्त्रितस्य for °यथाभिनिमन्त्रितस्य.

स्म । मारकलिपाशांश्च संछिनत्ति स्म । संसारप्रबन्धाच्चात्मानमुच्चारयति[1] स्म । निर्वाणे च चित्तं संप्रेषयति स्म ॥

तत्र भिक्षवो बोधिसत्त्वः पूर्वान्तत एव सुविदितसंसारदोषः संस्कृतेनाध्याशयेनानर्थिकः
सर्वोपादानपरिग्रहैरनर्थिको बुद्धधर्मनिर्वाणाभिमुखः संसारपराङ्मुखस्तथागतगोचराभिरतः
मारविषय[2]गोचरासंसृष्टः आदीप्तभवदोषदर्शी त्रैधातुकान्निःशरणाभिप्रायः संसारदोषादीनव[3]-
निःसरणकुशलः प्रव्रज्याभिलाषी निष्क्रमणाभिप्रायो विवेकनिम्नो विवेकप्रवणो[4] विवेकप्राग्भारः R 217
आरण्यप्रारण्याभिमुखः प्रविवेकप्रशमाभिकाङ्क्षी आत्मपरहितप्रतिपन्नः अनुत्तरप्रतिपत्तिशूरो
लोकस्यार्थकामो हितकामः सुखकामो योगक्षेमकामो लोकानुकम्पको हितैषी मैत्रीविहारी
महाकारुणिकः संग्रहवस्तुकुशलः सततसमित[5]मपरिखिन्न[6]मानसः सत्त्वपरिपाकविनयकुशलः
सर्वसत्त्वेष्वेकपुत्रकप्रेमानुगतमनसिकारः सर्ववस्तुनिरपेक्षपरित्यागी दानसंविभागरतः प्रयुक्तत्यागः
प्रयत[7]पाणिः त्यागशूरो यष्टयज्ञः सुसमृद्धपुण्यः सुसंगृहीतपुण्यः परिष्कारविर्गत[8]- L 181
मलामात्सर्यसुनिगृहीतचित्तोऽनुत्तरो महादानपतिर्दत्त्वा च विपाकाप्रतिकाङ्क्षी प्रदानशूरः
इच्छामहेच्छालोभद्वेष[9]मदमानमोहमात्सर्यप्रमुखसर्वारिक्लेशगणप्रत्यर्थिकनिग्रहायाभ्युत्थितः सर्वज्ञता-
चित्तोत्पादप्रबन्धाच्चलितः[10] महात्यागचित्तसंनाहसुसंनद्धः लोकानुकम्पको हितैषीव वर्मितकवचितवीर्यः[11]
सत्त्वप्रमोक्षालम्बनमहाकरुणाबलविक्रमपराक्रमः[12] अवैवर्तिकसर्वसत्त्वसमचित्तत्यागप्रहरणो यथाभिप्राय-
सत्त्वाशयसंतोषणो बोधिभाजनीभूतः कालाक्षुण्णधर्मवेधी बोधिपरिणामप्रणिधिः अनवनामित[13]-
ध्वजस्त्रिमण्डलपरिशोधनदानपरित्यागी ज्ञानवरवज्रदृढप्रहरणः सुनिगृहीतक्लेशप्रत्यर्थिकः शीलगुण-
चारित्रप्रतिपन्नः स्वारक्षित[14]कायवाङ्मनस्कर्मान्तोऽणुमात्रावद्यभयदर्शी सुपरि[15]शुद्धशीलः अमलविमल-
निर्मलचित्तः सर्वदुरुक्तदुरागतवचनपथाक्रोशपरिभाषणकुत्सनताडनतर्जनवधबन्धनावरोधनपरि-
क्लेशालुडितचित्तोऽक्षुभितचित्तः क्षान्तिसौरभ्यसंपन्नः अक्षतोऽनुपहतोऽव्यापन्नचित्तः सर्वसत्त्व-
हितार्थायोत्तप्तवीर्यारम्भी दृढसमादानसर्वकुशलमूलधर्मसमुदानयनाप्रत्युदावर्त्यस्मृतिमान् सुसंप्रज्ञा-
सुसमाहितोऽविक्षिप्तचित्तो ध्यानैकाग्रमनसिकारो धर्मप्रविचयकुशलो लब्धालोको विगततमोन्धकारः R 218
अनित्यदुःखात्माशुभाकारपरिभावितचेताः स्मृत्युपस्थानसम्यक्प्रहाणऋद्धिपादेन्द्रियबलबोध्यङ्गमार्गार्य
सत्यसर्वबोधिपक्षधर्मसुपरिकर्मकृतमनसिकारः शमथविपश्यनासुपर्यवदातबुद्धिः प्रतीत्यसमुत्पाद-
सत्यदर्शी सत्यानुबोधादपरप्रत्ययस्त्रिविमोक्षसुखविक्रीडितो मायामरीचिस्वप्नोदकचन्द्रप्रतिश्रुत्का[16]प्रति-
भासोपमसर्वधर्मनयावतीर्णः ॥

इति हि भिक्षवो बोधिसत्त्वस्यैवं भवति प्रतिकृतिः[17] – एवं धर्मविहारी एवं गुणमाहात्म्यविहारी L 182
एवं सत्त्वार्थाभियुक्तविहारी अभूत् । भूयस्या मात्रया आभिर्दशदिग्बुद्धाधिष्ठानतूर्यसंगीतिविनिः-
सृताभिर्गाथाभिः[18] संचोदितः स तस्यां वेलायां पूर्वेषां च बोधिसत्त्वानां चरमभवोपगताना-

१ R उच्चालयति for उच्चारयति. २ R मारविषये for °विषय°. ३ R °दोषादेरव for °दोषादीनव°. ४ R विवेकप्रचरणो for °प्रवणः. ५ R सततशमितो for °समित°. ६ R अपरिच्छिन्न° for °खिन्न°. ७ R प्रतत° for प्रयत°. ८ R विगतमदमात्सर्य° for °विगतमलामा°. ९ R °दोष° for° द्वेष°. १० R प्रबन्धाचरितः for °न्धाच्चलितः. ११ R om. °वीर्य°. १२ R om. °पराक्रम°. १३ R अनव° for अव°. १४ R सुलक्षित° for स्वारक्षित°. १५ R शुद्धसुपरि° for सुपरि°. १६ R° शुल्क° for° श्रुत्का°. १७ R प्रतिकृत्येवं for प्रकृतिरेवं. १८ R om. गाथाभिः.

मन्तःपुरपरिपाचितानि चत्वारि धर्ममुखान्यामुखीकरोति स्म । कतमानि चत्वारि ? यदिदं दानं प्रियवचनमर्थक्रियां[1] समानार्थतां[2] च । चतुःसंग्रहवस्तुप्रयोगनिर्हारविशुद्धिं च नाम धर्ममुखमामुखीकरोति स्म । त्रिरत्नवंशसाधारणाभिप्रायो विप्रणाशसर्वज्ञताचित्त-प्रणिधानबलाधानावैवर्त्यविषयं[3] च नाम धर्ममुखमामुखीकरोति स्म । सर्वसत्त्वापरि-त्यागाध्याशयमहाकरुणावतारतां[4] च नाम धर्ममुखमामुखीकरोति स्म । सर्वबोधिपक्ष-धर्मपदे प्रभेदार्थाभिनिश्चयज्ञानसंसारबलविशेषसमुदानयमहाव्यूहं च नाम धर्ममुखमामुखी-
R 219 करोति स्म । इमानि चत्वारि धर्ममुखान्यामुखीकृत्य बोधिसत्त्वः सर्वस्यान्तःपुरस्य परिपाचनार्थं तस्यां वेलायां तथारूपमृद्ध्यभिसंस्कारमभिसंस्करोति स्म, यथारूपेण ऋद्ध्यभिसंस्कारेणाभि-संस्कृतेन तेभ्यः संगीतिरुतेभ्यो बोधिसत्त्वानुभावेनेमान्येवंरूपाणि धर्ममुखशतसहस्राणि निश्चरन्ति स्म । तद्यथा –

उदारछन्देन च आशयेन
अध्याशयेना करुणाय प्राणिषु ।
उत्पद्यते चित्तु वराग्रबोधये
शब्दे च रूपस्तुरियेभि निश्चरी ॥ १३३ ॥

श्रद्धा प्रसादो अधिमुक्ति गौरवं
निर्मानता ओनमना गुरूणाम् ।
परिपृच्छना किंकुशलंगवेषणा
अनुस्मृतीभावनु शब्द निश्चरी ॥ १३४ ॥

L 183 दाने दमे संयमशीलशब्दः
क्षान्तीय[5] शब्दस्तथ वीर्यशब्दः ।
ध्यानाभिनिर्हारसमाधिशब्दः
प्रज्ञा उपायस्य च शब्द निश्चरी ॥ १३५ ॥

मैत्राय शब्दः करुणाय शब्दो
मुदिताउपेक्षाय अभिज्ञशब्दः ।
चतुसंग्रहावस्तुविनिश्चयेन
R 220 सत्त्वान परिपाचनशब्द निश्चरी ॥ १३६ ॥

स्मृतेरुपस्थानप्रभेदशब्दः
सम्यक्प्रहाणास्तथ ऋद्धिपादा ।
पञ्चेन्द्रिया पञ्चबलप्रभेदा
बोध्यङ्गशब्दस्तुरियेभि निश्चरी ॥ १३७ ॥

---

१ R °क्रिया for क्रियां. २ R °र्थता for °र्थतां. ३ R °धानावर्तविषयं for °धानावैवर्त्यविषयं. ४ R °ध्यास° for °ध्याशय°. ५ R क्षान्त्याश्च for क्षान्तीय.

अष्टाङ्गिको मार्गबलप्रभेदः
शमथस्य शब्दोऽथ विपश्यनायाः ।
अनित्यदुःखार्तिअनात्मशब्दः
अशुभार्तिशब्दो तुरियेभि निश्चरी ॥ १३८ ॥

विरागशब्दश्च विवेकशब्दः
क्षयज्ञानशब्दो अनुत्पादशब्दः ।
अनिरोधशब्दश्च अनालयं च
निर्वाणशब्दस्तुरियेभि निश्चरी ॥ १३९ ॥

इम एवरूपास्तुरियेभि शब्दा[1]ः
संबोधिशब्दैश्चनुभाव[2] निश्चरी ।
यं श्रुत्व सर्वा प्रमदा नु शिक्षिता
वराग्रसत्त्वे प्रणिधेन्ति बोधये ॥ १४० ॥

इति हि भिक्षवो अन्तःपुरमध्यगतेन बोधिसत्त्वेन तानि चतुरशीतिस्त्रीसहस्राणि परिपाचितान्यभूवन् अनुत्तरायां सम्यक्संबोधौ बहूनि च देवताशत[3]सहस्राणि ये तत्र संप्राप्ता अभूवन् ॥

तथा अभिनिष्क्रमणकाले तस्मिन् समये बोधिसत्त्वस्य ह्रीदेवो नाम तुषितकायिको देवपुत्रोऽनुत्तरायाः सम्यक्संबोधेः स रात्रौ प्रशान्तायां द्वात्रिंशता देवपुत्रसहस्रैः परिवृतः पुरस्कृतो येन बोधिसत्त्वस्योपस्थानप्रासादस्तेनोपसंक्रामत् । उपसंक्रम्य गगनतलगत एव बोधिसत्त्वं R 221
गाथाभिरध्यभाषत —

च्युति दर्शिता अतियशा जन्म च संदर्शितं पुरुषसिंह ।
अन्तःपुरं विदर्शितु कृतानुवृत्तिस्त्वया लोके ॥ १४१ ॥

परिपाचिता ति बहवो देव मनुज लोकि धर्ममनुप्राप्य । L 184
अयमद्य कालसमयो निष्क्रम्ये[4] मति विचिन्तेहि ॥ १४२ ॥

न हि बद्ध मोचयाती न चान्धपुरुषेन दर्शियति मार्गं[5] ।
मुक्तस्तु मोचयाती सचक्षुषा दर्शयति मार्गः ॥ १४३ ॥

ये सत्त्व कामदासा गृहे धने पुत्रभार्यपरिश्रद्धाः[6] ।
ते तुभ्य शिष्यमाणा[7] नैष्क्रम्यमतौ स्पृहां कुर्युः ॥ १४४ ॥

ऐश्वर्य कामक्रीडा चतुद्वीपा सप्त रत्न विजहित्वा ।
निष्क्रान्त त्वां विदित्वा स्पृहयेत्सनरामरो लोकः ॥ १४५ ॥

किं चापि ध्यानसौख्यैर्विहरसि धर्मैर्न चासि कामरतः ।
अथ पुन चिरप्रसुप्तां बोधय मरुमानुषशतानि ॥ १४६ ॥

---

१ L शब्दः for शब्दाः. २ R °शब्दरनु° for °शब्दश्चनु°. ३ R देवशत° for देवताशत°. ४ R निष्क्रम्येति for निष्क्रम्ये मति. ५ R मार्गम् for मार्गः. ६ R °परिशुद्धाः for °श्रद्धाः. ७ R शिक्षमाणा for शिष्य°.

अतिपतित यौवनमिदं गिरिनदि यथ चञ्चलप्रचलवेगा[1] ।
गतयौवनस्य भवतो नैष्क्रम्यमतिर्न शोभेते ॥ १४७ ॥
R 222 तत्साधु तरुणरूपे[2] प्रथमे वरयावनेऽभिनिष्क्रम्य ।
उत्तारय प्रतिज्ञां कुरुष्व चार्थं सुरगणानाम् ॥ १४८ ॥
न च कामगुणरतीभिस्तृप्तिर्लवणोदधेर्यथाम्भोभिः ।
ते तृप्त येष प्रज्ञा आर्या लोकोत्तरा विरजा ॥ १४९ ॥
त्वमिह प्रियो मनापो राज्ञः शुद्धोदनस्य राष्ट्रस्य ।
शतपत्रसदृशवदना नैष्क्रम्यमतिं विचिन्तेहि ॥ १५० ॥
आदीप्त[3] क्लेशतापैरनिःशरणैर्गाढबन्धनैर्बद्धां ।
शीघ्रं प्रमोक्षमार्गे स्थापय शान्ते असमवीरा[4] ॥ १५१ ॥
त्वं वैद्य धातुकुशलश्चिरातुरां सत्त्वरोगसंस्पृष्टां ।
भैषज्यधर्मयोगैर्निर्वाणसुखे स्थपय शीघ्रम् ॥ १५२ ॥
L 185 अन्धातमा अनयना मोहाकुलदृष्टिजालबद्धाः ।
प्रज्ञाप्रदीपचक्षुः शोधय शीघ्रं नरमरूणाम् ॥ १५३ ॥
समुदीक्षन्ते बहवो देवासुरनागयक्षगन्धर्वाः ।
द्रक्ष्याम बोधिप्राप्तं निरुत्तरं धर्म श्रोष्यामः ॥ १५४ ॥
द्रक्ष्यति च भुजगराजो भवनं अवभासितं तव शिरीये ।
R 223 करियति अनन्तपूजा पूरेहि व्रताशयस्तस्य ॥ १५५ ॥
चत्वारि लोकपालाः ससैन्यकास्ते तव प्रदीक्षन्ते ।
दास्याम चतुरि पात्रां बोधिध्वजि पूर्णमनसस्य ॥ १५६ ॥
ब्रह्म[5] प्रशान्तचारी उदीक्षते मैत्रवाक्करुणलाभी ।
अध्योषिष्ये नरेन्द्रं वर्तेन्ति निरुत्तरं चक्रम् ॥ १५७ ॥
बोधिपरिपाचिकापि च देवत अधिवुस्त[6] बोधिमण्डेस्मिं ।
उत्पत्स्येऽयं सत्य ति[7] द्रक्ष्याम्यभिबुध्यतो[8] बोधिम् ॥ १५८ ॥
सत्यं हि बोधिसत्त्वा अन्तःपुरिये क्रिया विदर्शेन्ति ।
पूर्वंगमो भव त्वं मा भेष्यसि[9] पश्चिमस्तेषाम् ॥ १५९ ॥
मञ्जुरुत मञ्जुघोषा स्मराहि दीपंकरस्य व्याकरणम् ।
भूतं तथा अवितथा जिनघोषरुतं उदीरेहि ॥ १६० ॥

इति श्रीललितविस्तरे संचोदनापरिवर्तो नाम त्रयोदशोऽध्यायः ॥

---

१ R प्रवल° for प्रचल°. २ R तत्साधुरूप for तत्साधु तरुणरूपे. ३ R आदीप्तां for आदीप्त. ४ R असंगिवीराः for असम°. ५ R ब्रह्मा for ब्रह्म. ६ R अभिस्तुवु for अधिवुस्त. ७ R om. सत्य ति. ८ R परिद्रक्ष्यामि for द्रक्ष्यामि. ९ R भेष्यसि for भेष्यसि.

१४

## स्वप्नपरिवर्तश्चतुर्दशः ।

इति हि भिक्षवो बोधिसत्त्वः संचोदितः सन् तेन देवपुत्रेण राज्ञः शुद्धोदनस्येमं स्वप्न- R 224
मुपदर्शयति स्म – यद्राजा शुद्धोदनः सुप्तः स्वप्नान्तरगतोऽद्राक्षीत् बोधिसत्त्वं रात्रौ प्रशान्ताया- L 186
मभिनिष्क्रमन्तं देवगणपरिवृतम्। अभिनिष्क्रम्य प्रव्रजितं चाद्राक्षीत् काषायवस्त्रप्रावृतम्। स प्रतिबुद्धः त्वरितं[1] त्वरितं काञ्चुकीयं परिपृच्छति स्म – कच्चित्[2] कुमारोऽन्तःपुरेऽस्ति[3] ? सोऽवोचत् – अस्ति देवेति ॥

ततो राज्ञः शुद्धोदनस्यान्तःपुरे शोकशल्यो हृदयेऽनुप्रविष्टोऽभूत् – अभिनिष्क्रमिष्यति अवश्यं कुमारोऽयम्। यच्चे[4]मानि पूर्वनिमित्तानि संदृश्यन्ते स्म ॥

तस्यैदभवत् – न खल्व[5]व्ययं कुमारेण कदाचिदुद्यानभूमि[6]मभिनिर्गन्तव्यम्। स्त्रीगणमध्येऽभिरतः इहैव रम्यंते[7], नाभिनिष्क्रमिष्यतीति ॥

ततो राज्ञा शुद्धोदनेन कुमारस्य परिभोगार्थं त्रयो यथर्तुकाः प्रासादाः कारिता अभूवन् ग्रैष्मिको वार्षिको हैमन्तिकश्च। तत्र यो ग्रैष्मिकः स एकान्तशीतलः। यो वार्षिकः स साधारणः। यो हैमन्तिकः स स्वभावोष्णः[8]। एकैकस्य च प्रासादस्य सोपानानि पञ्च पञ्च पुरुषशतान्युत्क्षिपन्ति स्म, निक्षिपन्ति स्म। तेषां तथोत्क्षिप्यमाणानां निक्षिप्यमाणानां च शब्दोऽर्धयोजने श्रूयते स्म – मा खलु कुमारोऽनभि[9]ज्ञात एवाभिनिष्क्र[10]मिष्यतीति। नैमित्तिकैर्वैपञ्चि[11]कैश्च व्याकृतमभूत् – R 225
मङ्गलद्वारेण कुमारोऽभिनिष्क्रमिष्यतीति। ततो राजा मङ्गलद्वारस्य महान्ति कपाटानि कारयति स्म। एकैकं च कपाटं पञ्च पञ्च पुरुषशतान्युद्घाटयन्ति स्म, अपघाटयन्ति स्म। तेषां चार्धयोजनं शब्दो गच्छति स्म। पञ्च चास्य कामगुणान् सदृशानुपसंहरति स्म। गीतवादित[12]नृत्यैश्चैनं सदैव युवतय उपतस्थुः ॥

अथ भिक्षवो बोधिसत्त्वः सारथिं प्राह – शीघ्रं सारथे रथं योजय। उद्यानभूमिं गमिष्यामीति। ततः सारथी राजानं शुद्धोद्नमुपसंक्रम्यैवमाह – देव कुमार उद्यानभूमिमभिनिर्यास्यतीति ॥ L 187

अथ राज्ञः शुद्धोदनस्यैतदभवत् – न कदाचिन्मया कुमार उद्यानभूमिमभिनिष्क्रमितः सुभूमिदर्शनाय। यन्वहं[13] कुमारमुद्यानभूमिमभिनिष्क्रामयेयम्। ततः कुमारः स्त्रीगणपरिवृतो रतिं वेत्स्यते, नाभिनिष्क्रमिष्यतीति ॥

ततो राजा शुद्धोदनः स्नेहबहुमानाभ्यां बोधिसत्त्वस्य नगरे घण्टावघोषणां कारयति स्म – सप्तमे दिवसे कुमार उद्यानभूमिं निष्क्रमिष्यतीति ( सुभूमिदर्शनाय )। तत्र भवद्भिः सर्वामनापानि चापनयितव्यानि – मा कुमारः प्रतिकूलं पश्येत्। सर्वमनापानि चोपसंहर्तव्यानि विषयाभिरम्याणि ॥

---

१ R त्वरितं once. २ R अस्ति मे for कच्चित्. ३ R इति for अस्ति. ४ R यंचे° for यच्चे°. ५ R खल्वायनेन for खल्वव्ययं. ६ R °भूमिरभिगन्तव्या for °भूमिमभिनिर्गन्तव्यम्. ७ R रमन्नाभि° for रम्यते, नाभि°. ८ L स्वभावउष्णः. ९ R अभिज्ञातः for अनभि°. १० R °निष्क्रमत्विति for °निष्क्रमिष्यतीति. ११ R वैपञ्चमिकैः for वैपञ्चिकैः. १२ R °वादित्र° for वादित. १३. R योन्वहं for यन्न्वहं.

ततः सप्तमे दिवसे सर्वं नगरमलंकृतमभूत् उद्यानभूमिमुपशोभितं[1] नानारङ्गदूष्यवितानी-[2]
कृतं छत्रध्वजपताकासमलंकृतम् । येन च मार्गेण बोधिसत्त्वोऽभिनिर्गच्छति स्म, स मार्गः सिक्तः
R 226 संमृष्टो[3] गन्धोदकपरिषिक्तो मुक्तकुसुमावकीर्णो नानागन्धघटिका[4]निर्धूपितः पूर्णकुम्भोपशोभितः
कदलीवृक्षोच्छ्रितो नानाविचित्रपटवितानविततो रत्नकिङ्किणीजालहारार्धहाराभिप्रलम्बितोऽभूत्।
चतुरङ्गसैन्यव्यूहितः परिवारश्चोद्युक्तोऽभूत् कुमारस्यान्तःपुरं प्रतिमण्डयितुम् । अथ[5] शुद्धावास-
कायिका देवा निध्यापयन्ति स्म बोधिसत्त्वमाहरितुम्, तत्र बोधिसत्त्वस्य पूर्वेण नगरद्वारेणोद्यान-
भूमिमभिनिष्क्रामतो महता व्यूहेन अथ बोधिसत्त्वस्यानुभावेन शुद्धवासकायिकैर्देवपुत्रैस्तस्मिन्
L 188 मार्गे पुरुषो जीर्णो वृद्धो महल्लको धमनीसंततगात्रः खण्डदन्तो वलीनिचितकायः पलितकेशः
कुब्जो गोपानसीवक्रो विभग्नो दण्डपरायण आतुरो गतयौवनः खरखरा[6]वसक्तकण्ठः प्राग्भारेण[7]
कायेन दण्डमवष्टभ्य प्रवेपयमानः[8] सर्वाङ्गप्रत्यङ्गैः पुरतो मार्गस्योपदर्शितोऽभूत् ॥

अथ बोधिसत्त्वो जानन्नेव सारथिमिदमवोचत् –

किं सारथे पुरुष दुर्बल अल्पस्थामो
उच्छुष्कमांसरुधिरत्वचस्नायुनद्धः ।
श्वेतंशिरो विरलदन्त कृशाङ्गरूपो
आलम्ब्य दण्ड व्रजते असुखं स्खलन्तः ॥ १ ॥

सारथिराह –

एषो हि देव पुरुषो जरयाभिभूतः
क्षीणेन्द्रियः सुदुखितो बलवीर्यहीनः ।
R 227 बन्धूजनेन परिभूत अनाथभूतः
कार्यासमर्थ अपविद्धु वनेव दारु ॥ २ ॥

बोधिसत्त्व आह –

कुलधर्म एष अयमस्य हितं भणाहि
अथवापि सर्वजगतोऽस्य इयं ह्यवस्था ।
शीघ्रं भणाहि वचनं यथभूतमेतत्
श्रुत्वा तथार्थमिह योनिश चिन्तयिष्ये ॥ ३ ॥

सारथिराह –

नैतस्य देव कुलधर्म न राष्ट्रधर्मः
सर्वे जगस्य जर यौवनु धर्षयाति ।
L 189 तुभ्यं पि मातृपितृबान्धवज्ञातिसंघो
जरया अमुक्त न हि अन्य गतिर्जनस्य ॥ ४ ॥

---

१ R °भूमिरुपशोभिता for °भूमिमुपशोभितं. २ R °पुष्पवितानीकृता for दूष्यवितानीकृता. ३ R संस्पृष्टो for संमृष्टो. ४ R °वटिका° for घटिका°. ५ R om. from अथ upto °हरितुम्. ६ खुरखुरा° for खरखरा°. ७ R पुरतः प्राग्भारेण for प्राग्भारेण. ८ R प्रवेपमानः for प्रवेपयमानः.

बोधिसत्त्व आह –

धिक्सारथे अबुध बालजनस्य बुद्धिः
यद्यौवनेन मद[1]मत्त जरां न पश्येत्।
आवर्तयाशु[2] मि रथं पुनरहं प्रवेक्ष्ये[3]
किं मह्य क्रीडरतिभिर्जरयाश्रितस्य ॥ ५ ॥ R 228

अथ बोधिसत्त्वः प्रतिनिर्वत्य रथवरं पुनरपि पुरं[4] प्राविशत्[5] ॥

इति हि भिक्षवो बोधिसत्त्वोऽपरेण कालसमयेन दक्षिणेन नगरद्वारेणोद्यानभूमिमभिनिष्क्रमन् महता व्यूहेन सोऽद्राक्षीन्मार्गे पुरुषं व्याधिस्पृष्टं दग्धोदरा[6]भिभूतं दुर्बलकायं स्वके मूत्रपुरीषे निमग्नमत्राणमप्रतिशरणं कृच्छ्रेणोच्छ्वसन्तं प्रश्वसन्तम्[7]। दृष्ट्वा च पुनर्बोधिसत्त्वो जानन्नेव सारथिमिदमवोचत् –

किं सारथे पुरुष रुष्य[8]विवर्णगात्रः
सर्वेन्द्रियेभि विकलो गुरु प्रश्वसन्तः।
सर्वाङ्गशुष्क उदराकुल कृच्छ्र[9]प्राप्तो
मूत्रे पुरीषि स्वकि तिष्ठति कुत्सनीये ॥ ६ ॥

सारथिराह –

एषो हि देव पुरुषो परमं गिलानो
व्याधीभयं उपगतो मरणान्तप्राप्तः।
आरोग्यतेजरहितो बलविप्रहीनो
अत्राणद्वीप[10]शरणो ह्यपरायणश्च ॥ ७ ॥

बोधिसत्त्व आह – L 190

R 229

आरोग्यता च भवते यथ स्वप्नक्रीडा
व्याधी[11]भयं च इममीदृशु घोररूपम्।
को नाम विज्ञपुरुषो इम दृष्ट्ववस्थां
क्रीडारतिं च जनयेच्छुभ[12]संज्ञतां वा ॥ ८ ॥

अथ खलु भिक्षवो बोधिसत्त्वः प्रतिनिवर्त्य रथवरं पुनरपि पुरवरं[13] प्राविक्षत् ॥

इति हि भिक्षवो बोधिसत्त्वोऽपरेण कालसमयेन पश्चिमेन नगरद्वारेणोद्यानभूमिमभिनिष्क्रमन् महता व्यूहेन सोऽद्राक्षीत् पुरुषं मृतं कालगतं मञ्चे समारोपितं चैलवितानीकृतं ज्ञातिसंघपरिवृतं सर्वै रुदद्भिः क्रन्दद्भिः परिदेवमानैः प्रकीर्णकेशैः पांश्ववकीर्णशिरोभिरुरांसि ताडयद्भिरुत्क्रोशद्भिः पृष्ठतोऽनुगच्छद्भिः। दृष्ट्वा च पुनर्बोधिसत्त्वो जानन्नेव सारथिमिदमवोचत् –

---

१ R मदत्त for मदमत्त. २ R °याश्विह for °याशु मि. ३ L प्रवेष्ये for प्रवेक्ष्ये. ४ R om. पुरं. ५ R प्राविवेश for प्राविशत्. ६ R दग्धं ज्वरा° for दग्धोदरा°. ७ R om. प्रश्वसन्तम्. ८ R रूपविवर्णं° for रुष्य°. ९ R प्राप्तकृच्छ्रा for कृच्छ्रप्राप्तो. १० R °वीप्रशरणो for °द्वीपशरणो. ११ R व्याधिर्भयं. १२ R शुभसंज्ञितां for °संज्ञतां. १३ R पुरवरे प्राविशत्.

किं सारथे पुरुष मञ्चं[1]परि गृहीतो
उद्धूतकेशनख पांशु शिरे क्षिपन्ति ।
परिचारयित्व विहरन्त्युरस्ताडयन्तो
नानाविलापवचनानि उदीरयन्तः ॥ ९ ॥

सारथिराह –

एषो हि देव पुरुषो मृतु जम्बुद्वीपे
नहि भूयु मातृपितृ द्रक्ष्यति पुत्रदारां ।
R 230 अपहाय भोगगृह ( मातृपितृ )मित्रज्ञातिसंघं
परलोकप्राप्तु न हि द्रक्ष्यति भूयु ज्ञातीं ॥ १० ॥

L 191 बोधिसत्त्व आह –

धिग्यौवनेन जरया समभिद्रुतेन
आरोग्य धिग्विविधव्याधिपराहतेन ।
धिग्जीवितेन विदुषा[2] नचिरस्थितेन
धिक्पण्डितस्य पुरुषस्य रतिप्रसङ्गैः ॥ ११ ॥

यदि जर न भवेया नैव व्याधिर्न मृत्युः
तथपि च महदुःखं पञ्चस्कन्धं धरन्तो ।
किं पुन जरव्याधिर्मृत्यु नित्यानुबद्धाः
साधु प्रतिनिवर्त्या चिन्तयिष्ये प्रमोक्षम्[3] ॥ १२ ॥

अथ खलु भिक्षवो बोधिसत्त्वः प्रतिनिवर्त्य तं रथवरं पुनरपि पुरं प्राविक्षत्[4] ॥

इति हि भिक्षवो बोधिसत्त्वस्यापरेण कालसमयेनोत्तरेण नगरद्वारेणोद्यानभूमिमभिनिष्क्राम-
तस्तैरेव देवपुत्रैर्बोधिसत्त्वस्यानुभावेनैव तस्मिन्मार्गे भिक्षुरभिनिर्मितोऽभूत् । अद्राक्षीद्बोधिसत्त्वस्तं
भिक्षुं शान्तं दान्तं संयतं ब्रह्मचारिणमविक्षिप्तचक्षुषं[5] युगमात्रप्रेक्षिणं प्रासादिकेनैर्यापथेन[6] संपन्नं
R 231 प्रासादिकेनाभिक्रमप्रतिक्रमेण संपन्नं प्रासादिकेनावलोकितव्यवलोकितेन प्रासादिकेन समिञ्जित[7]-
प्रसारितेन प्रासादिकेन संघाटी[8]पात्रचीवरधारणेन मार्गे स्थितम् । दृष्ट्वा च पुनर्बोधिसत्त्वो
जानन्नेव सारथिमिदमवोचत् –

किं सारथे पुरुष शान्तप्रशान्तचित्तो
नोत्क्षिप्तचक्षु व्रजते युगमात्रदर्शी ।
L 192 काषायवस्त्रवसनो सुप्रशान्तचारी
पात्रं गृहीत्व न च उद्धतु उन्नतो वा ॥ १३ ॥

---

१ R मञ्चोपरी for मञ्च°. २ R पुरुषो for विदुषा. ३ R प्रमोचम् for प्रमोक्षम्. ४ R प्राविशत्. ५ R अनतिक्षिप्तचक्षुः for अविक्षिप्तचक्षुषं. ६ R प्रासादिकेनेर्ष्या° for प्रासादिकेनैर्या°. ७ R om. समिञ्जितप्रसारितेन प्रासादिकेन. ८ R पिण्डपात्र° for संघाटीपात्र°.

सारथिराह –

एषो हि देव पुरुषो इति भिक्षुनामा
अपहाय कामरतयः सुविनीतचारी ।
प्रव्रज्यप्राप्तु शममात्मन एषमाणो
संरागद्वेषविगतोऽन्वेति[1] पिण्डचर्या ॥ १४ ॥

बोधिसत्त्व आह –

साधू सुभाषितमिदं मम रोचते च
प्रव्रज्य नाम विदुभिः सततं प्रशस्ता ।
हितमात्मनश्च परसत्त्वहितं च यत्र
सुखजीवितं सुमधुरं अमृतं फलं च ॥ १५ ॥

अथ खलु भिक्षवो बोधिसत्त्वः प्रतिनिवर्त्य तं रथवरं पुनरपि पुरवरं प्राविक्षत्[2] ॥ R 232

इति हि भिक्षवो राजा शुद्धोदनो बोधिसत्त्वस्येमामेवंरूपां संचोदनां दृष्ट्वा श्रुत्वा[3] च भूयस्या मात्रया बोधिसत्त्वस्य परिरक्षणार्थं प्राकारान् मापयते स्म, परिखाः खानयति स्म, द्वाराणि च गाढानि कारयति स्म । आरक्षान् स्थापयति स्म । शूरांश्चोदयति स्म । वाहनानि योजयति स्म । वर्माणि ग्राहयति स्म । चतुर्षु नगरद्वार[4]शृङ्गाटकेषु चतुरो महासेनाव्यूहान् स्थापयति स्म बोधिसत्त्वस्य परिरक्षणार्थम् । य एनं रात्रिंदिवं रक्षन्ति स्म – मा बोधिसत्त्वोऽभिनिष्क्रमिष्यतीति । अन्तःपुरे चाज्ञां[5] ददाति स्म – मा स्म कदाचित्संगीतिं विच्छेत्स्यथ । सर्वरतिक्रीडाश्चोपसंहर्तव्याः, स्त्रीमायाश्चोपदर्शयत, निर्बन्धत[6] कुमारं यथानुरक्तचित्तो न निर्गच्छेत्प्रव्रज्यायै ॥ L 193

तत्रेदमुच्यते –

द्वारे स्थापित युद्धशौण्डपुरुषाः खड्गायुधापाणयो
हस्तीअश्वरथाश्च वर्मितनरा[7] आरूढ नागावली ।
परिखा खोटक[8]तोरणाश्च महता प्राकार उच्छ्रापिता
द्वारा बद्ध सुगाढबन्धनकृताः क्रोशस्वरामुञ्चनाः ॥ १६ ॥

सर्वे शाक्यगणा विषण्णमनसो रक्षन्ति रात्रिंदिवं R 233
निर्घोषश्च बलस्य तस्य महतः शब्दो महा श्रूयते ।
नगरं व्याकुलु भीतत्रस्तमनसो मा स्माद् व्रजेत्सूरतो
मा भूच्छाक्यकुलोदितस्य गमने[9] छिद्येत वंशो ह्ययम्[10] ॥ १७ ॥

आज्ञप्तो युवतीजनश्च सततं संगीति मा छेत्स्यथा
वस्थानं प्रकरोथ क्रीडरतिभिर्निर्बन्धथा मानसम् ।

---

१ R तिष्ठति for अन्वेति. २ R प्राविशत्. ३ R om. श्रुत्वा च. ४ R °द्वारेषु for °द्वार°. ५ R आज्ञा for चाज्ञां. ६ R बध्नीत for निर्बन्धत. ७ R वर्मितवरा for °नरा. ८ R खादक° for खोटक°. ९ R गमनं, १० R अयं for ह्ययम्.

ये वा इन्द्रियमाय नेकविविधा दर्शेथ चेष्टां बहुं
आरक्षां प्रकरोथ विघ्न कुरुथा मा खु[1] व्रजेत्सूरतः ॥ १८ ॥
तस्या निष्क्रमिकालि सारथिवरे पूर्वे निमित्ता इमे
हंसा क्रौञ्च मयूर सारिक शुका नो ते रवं मुञ्चिषु ।
प्रासादेषु गवाक्षतोरणवरेष्वातालमञ्चेषु च
जिह्मोजिह्म[2] सुदुर्मना असुखिता[3] ध्यायन्त्यधोमूर्धकाः ॥ १९ ॥
पुडिनीपुष्करिणीषु पद्म रुचिरा म्लानानि म्लायन्ति च
वृक्षाः शुष्कपलाश पुष्परहिताः पुष्पन्ति भूयो न च ।
L 194 वीणावल्लकिवंशतन्त्रिरचिता छिद्यन्त्यकस्मात्तदा[4]
R 234 भेरीश्चैव मृदङ्ग पाण्यभिहता भिद्यन्ति नो वादिषु ॥ २० ॥
सर्वं व्याकुलमासि तच्च नगरं निद्राभिभूतं भृशं
नो नृत्ते[5] न च गायिते[6] न रमिते भूयो मनः कस्यचित् ।
राजापी परमं सुदीनमनसः चिन्तापरो ध्यायते
हा धिक्शाक्यकुलस्य ऋद्धि विपुला[7] मा हैव संधक्ष्यते ॥ २१ ॥
एकस्मिं शयने स्थिते[8] स्थितमभूद्गोपा तथा पार्थिवो[9]
गोपा रात्रियि अर्धरात्रसमये[10] स्वप्नानिमां पश्यति ।
सर्वेयं पृथिवी प्रकम्पितमभूच्छैला सकूटावटी[11]
वृक्षा मारुतएरिता क्षिति पती[12] उत्पाट्य मूलोद्धृताः ॥ २२ ॥
चन्द्रासूर्य नभातु भूमिपतितौ सज्योतिषालंकृतौ
केशानद्दशि छून दक्षिणि भुजे मुकुटं च विध्वंसितम् ।
हस्तौ छिन्न तथैव छिन्न चरणौ नग्ना द्दशी आत्मनं
मुक्ताहार तथैव मेखलमणी[13] छिन्ना[14] द्दशी आत्मनः ॥ २३ ॥
R 235 शयनस्या द्दशि छिन्न पाद चतुरो धरणीतलेस्मिं छयी[15]
छत्रे दण्डु सुचित्रु श्रीम रुचिरं छिन्ना द्दशी पार्थिवे ।
सर्वे आभरणा विकीर्ण पतिता मुह्यन्ति ते वारिणा
भर्तुश्चाभरणा सवस्त्रमुकुटा शय्यागता व्याकुला ॥ २४ ॥
उल्कां पश्यति निष्क्रमन्त नगरात्तमसाभिभूतं पुरं
छिन्नां जालिकमद्दशाति सुपिने रतनामिकां शोभनां ।

---

१ R स्तु for खु. २ R जिह्माजिह्म for जिह्माजिह्म. ३ R सुदुःखिताः for असुखिता. ४ R छिद्यन्ति कस्मा for छिद्यन्त्यकस्मा°. ५ R नृत्ये for नृत्ते. ६ R गायने for गायिते. ७ L विपुलो for विपुला. ८ R om. स्थिते. ९ L पार्थिवौ. १० R अर्धकाल° for अर्धरात्र.° ११ R °वती for °वटी. १२ R क्षितिपति for क्षिति पती. १३ R मेषरमणी for मेखलमणी. १४ R छन्ना for छिन्ना. १५ R स्थपी for छ(श)यी.

मुक्ताहारु प्रलम्बमानु पतितः क्षुभितो महासागरं
 मेरुं पर्वतराजमद्दशि तदा स्थानातु संकम्पितम् ॥ २५ ॥
एतानीदृश शाक्यकन्य सुपिनां सुपिनान्तरे अद्दशी
 दृष्ट्वा सा प्रतिबुद्ध रुण्णनयना[1] स्वं स्वामिनं अब्रवीत् । L 195
देवा किं मि भविष्यते खलु भणा सुपिनान्तराणीदृशा
 भ्रान्ता मे स्मृति नो च पश्यमि पुनः शोकार्दितं मे मनः ॥ २६ ॥
श्रुत्वासौ कलविङ्कदुन्दुभिरुतो ब्रह्मस्वरः सुस्वरो
 गोपामालपते भव प्रमुदिता पापं न ते विद्यते । R 236
ये सत्त्वा कृतपुण्यपूर्वचरिता तेषेति[2] स्वप्ना इमे
 कोऽन्यः पश्यति नैक[3]दुःखविहितः स्वप्नान्तराणीदृशा ॥ २७ ॥
यत्ते दृष्टा मेदिनी कम्पमाना
 कूटा शैला मेदिनीये पतन्ता ।
देवा नागा राक्षसा भूतसंघाः
 सर्वे तुभ्यं पूज्यश्रेष्ठां करोन्ति ॥ २८ ॥
यत्ते दृष्टा वृक्षमूलोद्धृतानि
 केशां लूनां दक्षिणेनाद्दशासि ।
क्षिप्रं गोपे क्लेशजालं छिनित्वा
 दृष्टीजालं उद्धरी संस्कृतातः ॥ २९ ॥
यत्ते दृष्टौ चन्द्रसूर्यौ पतन्तौ
 दृष्टा नक्षत्रा ज्योतिषा नीपतन्तः ।
क्षिप्रं गोपे क्लेशशत्रू निहत्वा
 पूज्या लोके भाविनी त्वं प्रशस्या ॥ ३० ॥
यत्ते दृष्टा मुक्तहारं विशीर्णं R 237
 नग्नं भग्नं[4] सर्वकायाद्दशासि ।
क्षिप्रं गोपे इस्त्रिकायं जहित्वा
 पुरुषस्त्वं वै भेष्यसे नोचिरेण ॥ ३१ ॥
यत्ते दृष्टं मञ्चकं छिन्नपादं
 छत्रे दण्डं रत्नचित्रं प्रभग्नम् ।
क्षिप्रं गोपे ओघ चत्वारि तीर्त्वा
 मां द्रष्टासी एकछत्रं त्रिलोके ॥ ३२ ॥

---

१ R घूर्ण॰ for रुण्ण॰. २ R द्रक्ष्यन्ति for तेषेति. ३ R अनेक॰ for नैक॰. ४ R सर्वकायमीदृग्दशाति for भग्नं सर्वकायाद्दशासि.

यत्ते दृष्टा भूषणा उह्यमाना
चूडा वस्त्रा मह्य मञ्चेऽद्दशासि ।
क्षिप्रं गोपे लक्षणैर्भूषिताङ्गं
मां संपश्यी सर्वलोकैः स्तुवन्तम् ॥ ३३ ॥

यत्ते दृष्टा दीपकोटीशतानि
नगरान्निष्क्रान्ता तत्पुरं चान्धकारम् ।
क्षिप्रं गोपे मोहविद्यान्धकारे
प्रज्ञालोके[1] कुर्वमी सर्वलोके[2]म् ॥ ३४ ॥

L 196
R 238
यत्ते दृष्टं मुक्तहारं प्रभग्नं
छिन्नं चैव स्वर्णसूत्रं विचित्रम् ।
क्षिप्रं गोपे क्लेशजालं छिनित्वा
संज्ञा सूत्रं उद्धरी संस्कृतातः ॥ ३५ ॥

यत्ते गोपे चित्ति[3]कारं करोषी
नित्यं पूजां गौरवेणोत्तमेन ।
नास्ती तुभ्यं दुर्गती नैव शोकः
क्षिप्रं भोही प्रीतिप्रामोद्यल[4]ब्धा ॥ ३६ ॥

पूर्वे मह्यं दानु दत्तं प्रणीतं
शीलं चीर्णं भाविता नित्यक्षान्ति ।
तस्मान्मह्यं ये प्रसादं लभन्ते
सर्वे भो[5]न्ती प्रीतिप्रामोद्यलाभाः ॥ ३७ ॥

कल्पा कोटी संस्कृता मे अनन्ता
बोधी[6]मार्गो शोधितो मे प्रणीतः ।
तस्मान्मह्यं ये प्रसादं करोन्ति
सर्वे छिन्ना तेषु त्रीण्यप्यपायाः ॥ ३८ ॥

R 239
हर्षं विन्दा मा च खेदं जनेहि
तुष्टिं विन्दा संजनेही च प्रीतिम् ।
क्षिप्रं भेष्ये प्रीतिप्रामोद्यलाभी
सेही[7] गोपे भद्रका ते निमित्ता ॥ ३९ ॥

सो पुण्यतेजभरितो सिरितेजगर्भो
पूर्वे निमित्तसुपिने इमि अद्दशासि[8] ।

---

१ R प्रज्ञालोकं. २ R सर्वलोके. ३ R चित्रकार for चित्ति°. ४ R °लाभाः for °लब्धा. ५ R भान्ति for भोन्ति. ६ R बोधेर्मार्गो. ७ R मेहि for सेही. ८ R अद्दशाति for °शासि.

ये भोन्ति पूर्वशुभकर्मसमुच्चयानां
नैष्क्रम्यकालसमये नरपुंगवानाम् ॥ ४० ॥

सो अद्दशासि च कराचरणाद्भुताना
महसागरेभि चतुभिर्जल लोलयन्ता ।
सर्वामिमां वसुमतीं शयनं विचित्रं
मेरुं च पर्वतवरं शिरसोपधानम् ॥ ४१ ॥

आभा प्रमुक्त सुपिने तद अद्दशासि
लोके विलोकितु महातमसान्धकारम् ।
छत्रोद्गतं धरणिये स्फरते[1] त्रिलोकं
आभाय[2] स्पृष्ट विनिपातदुखा प्रशान्ता ॥ ४२ ॥ R 240

कृष्णा शुभा चतुरि प्राणक[3] पाद लेखी L 197
चतुवर्ण एत्व[4] शकुनाद्भुत एकवर्णाः ।
मीढगिरी परमहीन जुगुप्सनीया
अभिभूय चंक्रमति तत्र च नोपलिप्तो ॥ ४३ ॥

भूयोऽद्दशी सुपिनि नद्य जलप्रपूर्णा
बहुसत्त्वकोटिनयुतानि च उह्यमाना[5] ।
सो नाव कृत्व प्रतरित्व परां[6] प्रतार्य
स्थापेति सो स्थलवरे अभये अशोके ॥ ४४ ॥

भूयोऽद्दशाति बहु आतुर रोगस्पृष्टां
आरोग्यतेजरहितां बलविप्रहीनां ।
सो वैद्य भूत्व[7] बहु ओषध संप्रयच्छा
मोचेति[8] सत्त्वनयुतां बहुरोगस्पृष्टां ॥ ४५ ॥

सिंहासने व हि निषण्ण सुमेरुपृष्ठे R 241
शिष्यां कृताञ्जलिपुटानमरान्नमन्तां ।
संग्राममध्यि जयु अद्दशि आत्मनश्च
आनन्दशब्दममरां गगने ब्रुवन्तः ॥ ४६ ॥

एवंविधा सुपिनि अद्दशि बोधिसत्त्वो
मङ्गल्य शोभनव्रतस्य च पारिपूरिम्[9] ।
यां श्रुत्व देवमनुजा अभवन्प्रहृष्टा
न चिराद्भविष्यति अयं नरदेवदेवः ॥ ४७ ॥ इति ॥

इति श्रीललितविस्तरे स्वप्नपरिवर्तो नाम चतुर्दशोऽध्यायः ॥

१ R स्फुरते for स्फरते. २ R आभा यस्य for आभाय. ३ R प्राणिकपादलेखा for प्राणक पाद लेखी. ४ R एक for एत्व. ५ R युज्यमाना for उह्यमाना. ६ R पारं for परां. ७ R वैद्यभूत for वैद्य भूत्व. ८ R मोचेहि. ९ R यानि पूरि for पारिपूरिम्.

## अभिनिष्क्रमणपरिवर्तः पञ्चदशः ।

L 198 अथ खलु भिक्षवो बोधिसत्त्वस्यैतदभूत् — अयुक्तमेतन्मम स्यादकृतज्ञता च यदहमप्रतिवेद्य महाराज्ञः शुद्धोदनस्य अननुज्ञातश्च पित्रा निष्क्रमेयम् । स रात्रौ प्रशान्तायां स्वकादुपस्थानप्रासादादवतीर्य राज्ञः शुद्धोदनस्य प्रासादतले प्रतिष्ठितोऽभूत् । प्रतिष्ठितमात्रस्य च पुनर्बोधिसत्त्वस्य सर्वोऽसौ प्रासाद आभया स्फुटोऽभूत् । तत्र राजा प्रतिविबुद्धस्तां प्रभामद्राक्षीत् । दृष्ट्वा च
R 242 पुनस्त्वरितं त्वरितं काञ्चुकीयमामन्त्रयामास[1] — किं भोः काञ्चुकीय सूर्योऽभ्युद्गतो येनेयं प्रभा विराजते[2] ? काञ्चुकीय आह — अद्यापि तावदेव रजन्या उपार्धं नातिक्रान्तम् । अपि[3] च देव—

सूर्यप्रभाय भवते द्रुमकुड्यछाया
संतापयाति च तनुं प्रकरोति धर्मम् ।
हंसा मयूरशुककोकिलचक्रवाकाः
प्रत्यूषकालसमये स्वैरुतां[4] रवन्ति ॥ १ ॥

आभा इयं तु नरदेव सुखा मनोज्ञा
प्रह्लादनी शुभकरी न करोति दाहम् ।
कुड्या[5] च वृक्ष अभिभूय न चास्ति छाया
निःसंशयं गुणधरो इह अद्य प्राप्तः ॥ २ ॥

सो प्रेक्षते दशदिशो नृपती[6] विषण्णो
दृष्टश्च सो[7] कमललोचन शुद्धसत्त्वः ।
L 199 सोऽभ्युत्थितुं शयनि[8] इच्छति न प्रभोति
पितृ[9]गौरवं जनयते वरं[10]शुद्धबुद्धिः ॥ ३ ॥

सो च[11] स्थिहित्व पुरतो नृपतिं अवोचत्
मा भूयु विघ्न प्रकरोहि म चैव खेदम् ।
नैष्क्रम्यकालसमयो मम[12] देव युक्तो
R 243 हन्त क्षमस्व नृपते सजनः सराष्ट्रः ॥ ४ ॥

तं अश्रुपूर्णनयनो नृपती बभाषे
किंचित्प्रयोजनु भवेद्विनिवर्तने ते ।
किं याचसे मम वरं वद सर्व दास्ये
अनुगृह्ण राजकुलु मां च इदं च राष्ट्रम् ॥ ५ ॥

---

१ R आमन्त्रयति स्म for आमन्त्रयामास. २ R प्रविराजते. ३ R अपि वा. ४ R स्वरुता for °तां. ५ R कुड्मांश्च for कुड्या च. ६ R नृपतिर्निषण्णो for नृपती वि°. ७ R सोऽन्तिकेऽमललोचन for सो कमल°. ८ R शयनामिच्छति for शयनि इच्छति. ९ R पितु गौरवं for पितृ°. १० R बलशुद्ध° for वरशुद्ध°. ११ R चास्थितो हि for च स्थिहित्व. १२ R यथ for मम.

तद बोधिसत्त्व अवची मधुरप्रलापी
इच्छामि देव चतुरो वर तान् मि देहि ।
यदि शक्[1]यसे ददितु मह्य वसे ति तत्र
तद् द्रक्ष्यसे सद गृहे न च निष्क्रमिष्ये ॥ ६ ॥
इच्छामि देव जर मह्य न आक्रमेय्या
शुभवर्ण यौवनस्थितो भवि नित्यकालम् ।
आरोग्यप्राप्तु भवि नो च भवेत व्याधिः
अमितायुषश्च भवि नो च भवेत मृत्युः
( संपत्तितश्च विपुला नु[2] भवेद्विपत्तिः ) ॥ ७ ॥
राजा श्रुणित्व वचनं परमं दुखार्तो
अस्थानु याचसि कुमार न मेऽत्र शक्तिः । R 244
जरव्याधिमृत्युभयतश्च विपत्तितश्च L 200
कल्पस्थितीय ऋषयोऽपि न जातु मुक्ताः[3] ॥ ८ ॥
यदिदानि देव चतुरो वर नो ददासि
जरव्याधिमृत्युभयतश्च विपत्तितश्च ।
ह[4]न्त शृणुष्व नृपते अपरं वरैकं
अस्मा[5]च्च्युतस्य प्रतिसंधि न मे भवेया ॥ ९ ॥
श्रुत्वैव चेम वचनं नरपुंगवस्य
तृष्णा तनुं च करि छिन्दति पुत्रस्नेहम् ।
अनुमोदमी हितकरा जगति प्रमोक्षं
अभिप्रायु तुभ्य परिपूर्यतु यन्मतं ते ॥ १० ॥

अथ खलु भिक्षवो बोधिसत्त्वः प्रतिक्रम्य स्वके प्रासादेऽभिरुह्य शयने निषसाद । न चास्य कश्चिद्गमनं वा आगमनं वा संजानीते स्म ॥

इति हि भिक्षवो राजा शुद्धोदनस्तस्या रात्र्या अत्ययेन स[6]र्वं शाक्यगणं संनिपात्यैनां R 245 प्रकृतिमारोचयति स्म — अभिनिष्क्रमिष्यति कुमारः । तत्किं करिष्यामः ? शाक्या आहुः — रक्षां देव करिष्यामः । तत्कस्मात् ? अयं च महाञ्शाक्यगणः, स चैकाकी । तत्का तस्य शक्तिरस्ति बलादभिनिष्क्रमितुम् ?

तत्र तैः शाँ[7]क्यै राज्ञा शुद्धोदनेन च पञ्च शाक्यकुमारशतानि कृतास्त्राणि कृतयोग्यानि इष्वस्त्रशिक्षितानि महानग्नबलोपेतानि पूर्वे नगरद्वारे स्थापितान्यभूवन् बोधिसत्त्वस्य रक्षणार्थम् । एकैकश्च शाक्यकुमारः पञ्चरथशतपरिवारः, ए[8]कैकं च रथं पञ्चपत्तिशतपरि[9]वारं स्थापितं[10]मभूत

---

१ R शक्यते. २ न for नु. ३ After st. R adds : श्रुत्वा वचनमत्र पितुः कुमारोऽवचि. ४ R हन्तं ; L हन्तः for हन्त. ५ R अस्या° for अस्मा°. ६ R सर्वः शाक्यगणः for सर्वं शाक्यगणं. ७ R om. शाक्यैः. ८ R एकैकश्च रथः for एकैकं च रथं. ९ R °परिवारः. १० R स्थापितोऽभूत्.

बोधिसत्त्वस्य रक्षणार्थम् । एवं दक्षिणे पश्चिमे उत्तरे नगरद्वारे पञ्च पञ्च शाक्यकुमारशतानि कृतास्त्राणि कृतयोग्यानि इष्वस्त्रशिक्षितानि महानग्नबलोपेतानि । एकैकश्च शाक्यकुमारः पञ्चरथ-
L 201 शतपरिवारः, एकैकं च रथं पञ्चपत्तिशतपरिवारं स्थापितमभूत् बोधिसत्त्वस्य रक्षार्थम् । महल्लकमहल्लिकाश्च शाक्याः सर्वचत्वरशृङ्गाटक[1]पूगरथ्यास्वारक्षार्थं स्थिता अभवन् । राजा च शुद्धोदनः पञ्चभिः शाक्य[2]कुमारशतैः सार्धं परिवृतः पुरस्कृतः स्वके गृहद्वारे हयेषु च गजेषु च समभिरुह्य जागर्ति स्म । महाप्रजापती च गोतमी चेटीवर्गमामन्त्रयते स्म –

[3]ज्वालेथ दीप विमलां ध्वजाग्रि मणिरत्न [4]सर्वि स्थापेथा ।
ओलम्बयाथ हारां प्रभां कुरुत सर्वि गेहेस्मिन् ॥ ११ ॥

R 246 संगीति योजयेथा जागरथ अतन्द्रिता इमां रजनीम् ।
प्रतिरक्षथा कुमारं यथा अविदितो न गच्छेया ॥ १२ ॥

वर्मितकलापहस्ता असिधनुशरशक्तितोमरगृहीताः ।
प्रियतनयरक्षणार्थं करोथ सर्वे महायत्नम् ॥ १३ ॥

[5]द्वारां पिथेथ सर्वा [6]सुयन्त्रितां निर्गडां दृढकपाटां ।
मुञ्चथ मा च अकाले मा [7]अग्रसत्त्व इतु न व्रजेया ॥ १४ ॥

मणिहारमुक्तहारां मुखपुष्पके अर्धचन्द्र सशृङ्खलाः ।
मेखलकार्णिकमुद्रिक सुनिबद्धां नूपुरां कुरुत ॥ १५ ॥

यदि सहस निष्क्रमेया नरमरुहित मत्तवारणविचारी ।
तथ तथ पराक्रमेथा यथा विघातं न विन्देया ॥ १६ ॥

L 202 या नारि शक्तिधारी शयनं परिवारयन्तु विमलस्य ।
म च भवथ [8]मिद्धविहताः पतंग इव रक्षथा नेत्रैः ॥ १७ ॥

छादेथ रतनजालै इदं गृहं पार्थिवस्य रक्षार्थम् ।
R 247 [9]वेणूरवांश्च रवथा इमां रजनि रक्षथा विरजाम् ॥ १८ ॥

अन्योन्य बोधयेथा म वसयथा रक्षथा इमां रजनीम् ।
मा [10]हुं अभिनिष्क्रमेथा विजह्य राष्ट्रं च राज्यं च ॥ १९ ॥

एतस्य निर्गतस्या राजकुलं सर्विमं निरभिरम्यम् ।
उच्छिन्नश्च भवेया पार्थिववंशश्चिरनुबद्धः ॥ २० ॥ इति

अथ खलु भिक्षवोऽष्टाविंशतिमहायक्षसेनापतयः पाञ्चिकयक्षसेनापतिपूर्वंगमानि च पञ्चहारितीपुत्रशतान्येकस्मिन् संनिपात्यैवं मतं विचारयन्ति स्म -- अद्य मार्षा बोधिसत्त्वोऽभिनिष्क्रमिष्यति । [11]तस्यै युष्माभिः पूजाकर्मणे औत्सुक्यमापत्तव्यम् ॥

---

१ R °युग° for °पूग°. २ R om. शाक्य. ३ R द्वारे प्रदीप for ज्वालेथ दीप. ४ R विमला for सर्वि. ५ L द्वारा for द्वारां. ६ R सयन्त्रितगडां for सुयन्त्रितां निर्गडां. ७ R अत्र सत्व इति for अग्रसत्त्व इतु. ८ R सिद्धि° for मिद्ध°. ९ R वर्णरवांश्च for वेणू°. १० R च for हु. ११ R om. तस्य.

चत्वारश्च महाराजानो अलकवतीं राजधानीं प्रविश्य तां महतीं यक्षपर्षदमामन्त्रयते स्म – अद्य मार्षा बोधिसत्त्वोऽभिनिष्क्रमिष्यति । स युष्माभिर्हयवरचरणपरिगृहीतो निष्क्रामयितव्यः । सा च यक्षपर्षदाह –

वज्रदृढ अभेद्य नारायणो आत्मभावो गुरु
वीर्यबलउपेतु सोऽकम्पियो सर्वसत्त्वोत्तमः ।
गिरिवर महमेरु उत्पाव्य शक्यं नभे धारितुं केनचित्
न तु जिनगुणमेरु शैलैर्गुरुः पुण्यज्ञानाश्रितः शक्य नेतुं क्वचित् ॥ २१ ॥

वैश्रवण आह – L 203

ये मानगर्वित नरा गुरु तेषु शास्ता R 248
ये प्रेमगौरवस्थिता लघु ते विजानि ।
अध्याशयेन अभियुज्यथ गौरवेण
लघु तं हि वेत्स्यथ खगा इव तूलराशिम् ॥ २२ ॥

अहं च पुरतो यास्ये यूयं च वहथा हयम् ।
नैष्क्रम्ये बोधिसत्त्वस्य पुण्यमार्जयामो बहुम् ॥ २३ ॥

अथ खलु भिक्षवः शक्रो देवानामिन्द्रो देवांस्त्रायत्रिंशानामन्त्रयते स्म – अद्य मार्षा बोधिसत्त्वोऽभिनिष्क्रमिष्यति । तत्र युष्माभिः सर्वैः पूजाकर्मणे औत्सुक्येन भवितव्यम् ॥

तत्र शान्तमतिर्नाम देवपुत्रः स एवमाह – अहं तावत्कपिलवस्तुनि महानगरे सर्वस्त्रीपुरुषदारकदारिकाणां प्रस्वापनं करिष्यामि ।

ललितव्यूहो नाम देवपुत्रः स एवमाह – अहमपि सर्वहयगजखरोष्ट्रगोमहिषस्त्रीपुरुषदारकदारिकाणां शब्दमन्तर्धापयिष्यामि ।

व्यूहमतिर्नाम देवपुत्रः स एवमाह – अहं गगनतले सप्तरथविस्तारप्रमाणं रत्नवेदिकापरिवृतं सूर्यकान्तमणिरत्नप्रभोज्ज्वलितमुच्छ्रितछत्रध्वजपताकं नानापुष्पाभिकीर्णं नानागन्धघटिकानिधूपितं मार्गव्यूहं करिष्यामि, येन मार्गेण बोधिसत्त्वोऽभिनिष्क्रमिष्यति ।

ऐरावणो नाम नागराजा स एवमाह – अहमपि च स्वस्यां शुण्डायां द्वात्रिंशद्योजनप्रमाणं कूटागारं मापयिष्यामि । यत्राप्सरसोऽभिरुह्य तूर्यसंगीतिसंप्रभणितेन महता गीतवादितेन बोधिसत्त्वस्योपस्थानपरिचर्यां कुर्वन्त्यो गमिष्यन्ति ।

L 204
R 249

स्वयं च शक्रो देवानामिन्द्र एवमाह – अहं द्वाराणि विवरिष्यामि । मार्गं च संदर्शयामि ।

धर्मचारी देवपुत्र आह – अहं विकृतमन्तःपुरमुपदर्शयिष्यामि ।

संचोदको देवपुत्र आह – अहं बोधिसत्त्वं शयनादुत्थापयिष्यामि ।

---

१ R om. °वर°. २ गिरिरिव महामेरु for गिरिवर महमेरु. ३ R उत्पाद्य for उत्पाव्य. ४ R शक्यो. ५ R शक्यते for शक्य. ६ R अर्जमो for आर्जयामो. ७ R om. सर्वैः. ८ R शान्तसुमति°. ९ R °गन्धधूपवटिकानिधूपितं for °गन्धघटिकानि°. १० R संदर्शयिष्यामि.

तत्र वरुणश्च नाम नागराजो मनस्वी च नागराजः सागरश्च नागराजोऽनवतप्तश्च नागराजो नन्दोपनन्दौ नागराजावेवमाहुः — वयमपि बोधिसत्त्वस्य पूजाकर्मणे कालानुसारिमेघमभिनिर्माय उरगसारचन्दनचूर्णवर्षमभिवर्षयिष्यामः ॥

इति हि भिक्षवो देवनागयक्षगन्धर्वैश्चायमेवंरूपो[1] निश्चयाभिप्रायश्चिन्तितोऽभूद् व्यवसितश्च। बोधिसत्त्वस्यैवं धर्मचिन्तानुप्रविष्टस्य संगीतिप्रासादेषु सुखशयनगतस्य अन्तःपुरमध्यगतस्य पूर्वबुद्धचरितं विचिन्तयतः सर्वसत्त्वहितमनुचिन्तयतश्चत्वारि पूर्वप्रणिधानपदान्यामुखीभवन्ति स्म।
R 250 कतमानि चत्वारि ? पूर्वं मया स्वयंभुवामाधिपतेयताम्[2]अभिलषता सर्वज्ञतां प्रार्थयमानेनैवं संनाहः संनद्धोऽभूत् — सत्त्वान् दुःखितान् दृष्ट्वा अहो बताहं संसारमहाचारकबन्धनप्रक्षिप्तस्य लोकसंनिवेशस्य संसारचारकं भित्त्वा बन्धनप्रमोक्षशब्दं चोदीरयेयं तृष्णया सनिगडगाढबन्धनबद्धांश्च सत्त्वान् प्रमोचयेयम्। इदं प्रथमं पूर्वप्रणिधानपदमामुखीभवति स्म।

L 205 अहो बताहं संसारमहाविद्यान्धकारगहनप्रक्षिप्तस्य लोकस्याज्ञानपटलतिमिरावृतनयनस्य प्रज्ञाचक्षुर्विरहितस्याविद्यामोहान्धकारस्य[3] महान्तं धर्मालोकं कुर्याम्। ज्ञानप्रदीपं चोपसंहरेयम्[4]। त्रिविमोक्षसुखज्ञानवतौषधिसंप्रयोगेण चोपायप्रज्ञाज्ञानसंप्रयुक्तेन सर्वाविद्यान्धकारतमोहतं[5] महत्तिमिरपटलकालुष्यमपनीय प्रज्ञाचक्षुर्विशोधयेयम्। इदं द्वितीयं पूर्वप्रणिधानपदमामुखीभवति स्म।

अहो बताहं मानध्वजोच्छ्रितस्य लोकस्याहंकारममकाराभिनिविष्टस्यात्मनीय[6]ग्राहानुगमानसस्य संज्ञाचित्तदृष्टिविपर्यासविपर्यस्तस्यासंग्रहगृहीतस्यार्यमार्गोपदेशेनास्मिमानध्वजप्रपातनं कुर्याम्। इतीदं तृतीयं पूर्वप्रणिधानपदमामुखीभवति स्म।

अहो बताहं व्युपशान्तस्य लोकस्य तन्द्राकुलजातस्य गुणावगुण्ठितभूतस्याजवंजवसमापन्नस्यास्माल्लोकात् परं लोकं[7] परलोकादिमं लोकं संधावतः संसरतः संसारादभिनिर्वृत्तस्या[8]लातचक्रसमारूढस्योपशमिकं प्रज्ञातृप्तिकरं धर्मं संप्रकाशयेयम्। इतीदं चतुर्थं पूर्वप्रणिधानपदमामुखीभवति स्म। इमानि चत्वारि पूर्वप्रणिधानपदान्यामुखीभवन्ति स्म ॥

R 251 तस्मिंश्च क्षणे धर्मचारिणा देवपुत्रेण शुद्धावासकायिकैश्च देवपुत्रैर्विकृतविगलितमन्तःपुरमुपदर्शितमभूत्। विसंस्थितं बीभत्सरूपमुपदर्श्य च गगनतलस्थास्ते बोधिसत्त्वं गाथाभिरध्यभाषन्त —

अथाब्रुवन् देवसुता महर्द्धयो
विबुद्धपद्मायतलोचनं तम्।
कथं तवास्मिन्नुपजायते रतिः
श्मशानमध्ये समवस्थितस्य ॥ २४ ॥

L 206 संचोदितः सोऽथ सुरेश्वरेभिः
निरीक्षतेऽन्तःपुर तं मुहूर्तम्।

१ R °रूपाभिप्राय° for °रूपो निश्चयाभि°. २ R आधिपत्यम् for अधिपतेयताम्. ३ R °मोहान्धस्य for °मोहान्धकारस्य. ४ R उपसंदर्देयं for °संहरेयम् ५ R om. °हतं. ६ R आत्मीय° for आत्मनीय° ७ R om. लोकं. ८ R अभिनिवृत्तस्य for अभिनिर्वृ°.

संप्रेषते[1] पश्यति तां बिभेत्सां[2]
श्मशानमध्ये वसितो[3]ऽस्मि भूतम् ॥ २५ ॥

अद्राक्षीत् खल्वपि बोधिसत्त्वः सर्वावन्तं नारीगणम् । व्यवलोकयन् पश्यति । तत्र काश्चिद्व्यपकृष्टवस्त्राः काश्चिद्विधूतकेश्यः काश्चिद्विकीर्णाभरणाः काश्चिद्विभ्रष्टमुकुटाः काश्चिद्विहतैरंसैः काश्चिद्विगोपितगात्र्यः काश्चिद्विसंस्थितमुखाः काश्चिद्विपरिवर्तितनयनाः काश्चित्प्रस्रवन्ती[4] लालाभिः काश्चिच्छ्वसन्त्यः काश्चित्प्रहसन्त्यः काश्चित्काशन्त्यः[5] काश्चित्प्रलपन्त्यः काश्चिद्दन्तान् कटकटायन्त्यः काश्चिद्विवर्णवदनाः काश्चिद्विसंस्थितरूपाः काश्चित्प्रलम्बितबाहवः काश्चिद्विक्षिप्तचरणाः[6] काश्चिदुद्घाटितशीर्षाः काश्चिदवगुण्ठितशीर्षाः काश्चिद्विपरिवर्तितमुखमण्डलाः[7] काश्चित्प्रध्वस्तशरीराः काश्चिद्विभुग्नगात्र्यः काश्चिन्निकुब्जाः खुरखुरायमाणाः काश्चिन्मृदङ्गमुपगुह्य परिवर्तितशीर्षशरीराः काश्चिद्वीणावल्लक्याद्यपरिबद्धपाणयः काश्चिद्वेणुं दन्तैः कटकटायन्त्यः काश्चित्किम्पलनकुलसंपताडापकर्षितवाद्यभाण्डाः काश्चिन्निमेषोन्मेषपरिवृत्त[8]नयनाः काश्चिद्विवृतास्याः । एवं तद्विकृतं R 252
धरणीतलगतमन्तःपुरं निरीक्षमाणो बोधिसत्त्वः श्मशानसंज्ञामुत्पादयति स्म ॥

तत्रेदमुच्यते —

तां दृष्ट्व उद्विग्न स लोकनाथः
करुणं विनिश्वस्य इदं जगाद ।
अहो बता कृच्छ्रगता व्रजेयं
कथं रतिं विन्दति राक्षसीगणे[9] ॥ २६ ॥

अतिमोहतमावृत दुर्मति कामगुणैर्निगुणैर्गुणसंज्ञिनः ।
विहग पञ्जरमध्यगता यथा न हि लभन्ति कदाचि विनिःसृतिम् ॥ २७ ॥

अथ बोधसत्त्वोऽनेन पुनरपि धर्मालोकमुखेनान्तःपुरं प्रत्यवेक्षमाणो महाकरुणापरिदेवितेन L 207
सत्त्वान् परिदेवते स्म — इह ते बाला हन्यन्ते आघातन इव वध्याः । इह ते बाला रज्यन्ते चित्रघटेष्विवामेध्यपरिपूर्णेष्वविद्वांसः । इह ते बाला मज्जन्ति गजा इव वारिमध्ये । इह ते बाला रुध्यन्ते चौरा इव चारकमध्ये । इह ते बाला अभिरता वराहा इवाशुचिमध्ये । इह ते बाला अध्यवसिताः कुक्कुरा इवास्थिकरङ्कमध्ये । इह ते बालाः प्रपतिता दीपशिखास्विव पतंगाः । इह ते बाला बध्यन्ते कपय इव लेपेन । इह ते बालाः परिदह्यन्ते जालोत्क्षिप्ता इव जलजाः । इह ते बालाः R 253
परिक्रूर्ध्यन्ते[10] सूनाकाष्ठेष्विवोरभ्राः । इह ते बाला अवसज्जन्ते किल्बिषकारिण इव शूलाग्रे । इह ते बालाः संसीदन्ति जीर्णगजा इव पङ्के । इह ते बाला विपद्यन्ते भिन्नयानपात्र इव महासमुद्रे । इह ते बालाः प्रपतन्ते महाप्रपात इव जात्यन्धाः । इह ते बालाः पर्यादानं[11] गच्छन्ति पातालसंधिगतमिव वारि । इह ते बाला धूमायन्ते कल्पसंक्षय इव महापृथिवी । आभिर्बाला भ्राम्यन्ते कुम्भकारकचक्रमिवाविद्धम् । इह ते बालाः परिभ्रमन्ति[12] शैलान्तर्गता

१ R संक्षेपतः for संप्रेषते. २ R विलग्नां for बिभत्सां. ३ R हि स्थितां स्म भूतां for वसितोऽस्मि भूतम्. ४ R प्रस्रवन्त्यो for प्रस्रवन्ती. ५ R om. काश्चित्काशन्त्यः. ६ R °क्षिप्तवदनाः for °चरणाः. ७ R विपरीत° for विपरिवर्तित°. ८ R °परिवर्त° for °परिवृत्त°. ९ R °गणैः for °गणे. १० R परिक्रुध्यन्ते. ११ R पर्यवदान for पर्यादान. १२ R परिभ्राम्यन्ते.

इव जात्यन्धाः । इह ते बाला विपरिवर्तन्ते कुर्कुरा[1] इव शर्दूलबद्धाः । इह ते बाला म्लायन्ते
ग्रीष्मकाल इव तृणवनस्पतयः । इह ते बालाः परिहीयन्ते शशीव कृष्णपक्षे । आभिर्बाला
भक्ष्यन्ते गरुडेनेव पन्नगाः । आभिर्बाला ग्रस्यन्ते महामकरेणेव पोतः । आभिर्बाला लुप्यन्ते
चोरसंघेनेव सार्थः । आभिर्बाला भिद्यन्ते मारुतेनेव शालाः । आभिर्बाला हन्यन्ते दृष्टीविषैरिव[2]
L 208 जन्तवः । आस्वादसंज्ञिनो बालाः क्षण्यन्ते मधुदिग्धाभिरिव क्षुरधाराभिर्बालजातीयाः । आभिर्बाला
उह्यन्ते दारुस्कन्धा इव जलौघैः । आभिर्बालाः क्रीडन्ति दारका इव स्वमूत्रपुरीषैः । आभिर्बाला
आवर्त्यन्ते[3]ऽङ्कुशेनेव गजाः । आभिर्बाला बध्यन्ते धूर्तकैरिव बालजातीयाः । इह
ते बालाः कुशलमूलानि क्षपयन्ति द्यूताभिरता इव धनम् । आभिर्बाला भक्ष्यन्ते
R 254 राक्षसीभिरिव वणिजाः । इत्येभिर्द्वात्रिंशताकारैर्बोधिसत्त्वोऽन्तःपुरं परितुलयित्वा[4] कायेऽशुभसंज्ञां
विचारयन् प्रतिकूलसंज्ञामुपसंहरन् जुगुप्ससंज्ञामुत्पादयन् स्वकायं[5] प्रतिविभावयन् काय-
स्यादीनवं संपश्यन् कायात्कायाभिनिवेशमुच्चारयन् शुभसंज्ञां विभावयन् अशुभसंज्ञामवक्रामयन्
अधः पादतलाभ्यां यावदूर्ध्वं मस्तकपर्यन्तं पश्यति स्म अशुचिसमुत्थितमशुचिसंभवमशुचिस्रवं
नित्यम् । तस्यां च वेलायामिमां गाथामभाषत —

कर्मक्षेत्र[6]रुहं तृषा[7]सलिलजं सत्कायसंज्ञीकृतं
अश्रुस्वेदकफार्द्र[8]मूत्रविकृतं शोणीतबिन्द्वाकुलम् ।
बस्तीपूयवसासमस्तकरसैः पूर्णं तथा किल्बिषैः
नित्यप्रस्रवितं ह्यमेध्य सकलं दुर्गन्ध नानाविधम् ॥ २८ ॥

अस्थीदन्तसकेशरोमविकृतं चर्मावृतं लोमशं
अन्तःप्लीहयकृद्व[9]पोष्णरसनैरेभिश्रितं दुर्बलैः ।
मज्जास्नायुनिबद्धयन्त्रसदृशं मांसेन शोभीकृतं
नानाव्याधिप्रकीर्णशोककलिलं क्षुत्तर्षसंपीडितम् ।
जन्तूनां निलयं[10] अनेकसुषिरं मृत्युं जरां चाश्रितं
दृष्ट्वा को हि विचक्षणो रिपुनिभं मन्ये शरीरं स्वकम् ॥ २९ ॥

L 209 एवं च बोधिसत्त्वः काये कायानुगतया स्मृत्या विहरति स्म ॥

R 255 गगनतलगताश्च देवपुत्रा धर्मचारिणं देवपुत्रमेवमाहुः — किमिदं मार्षाः ? सिद्धार्थो
विलम्बतेऽन्तःपुरं चावलोकयति स्म । तं चोदपर्शयति चित्तं चोद्वेजयति । भूयश्चक्षुर्निवेशयति ।
अथवा जवजलनिधिगम्भीरोऽयम्, न शक्यमस्य प्रमाणं ग्रहीतुम् । अथवा असङ्गस्य मा खलु विषये
सज्जते मनः । मा खल्वमरैर[11]संचोदितो विस्मरति पूर्वप्रतिज्ञामिति ॥

---

१ R कुकुरा. २ R दृष्टविषैः for दृष्टी°. ३ R बध्यन्ते for आवर्त्यन्ते. ४ R परिपूरयित्वा for परितुल°. ५ R स्वकमायुः for स्वकायं. ६ L °क्षत्र° for °क्षेत्र°. ७ R तृष्णा for तृषा°. ८ R °स्वेदकदाह° for स्वेदकफार्द्र°. ९ L °जकृद्वपोष्णा°; R जकृद्वसोष्ठ° for °यकृद्वसोष्ण°. १० R निरयं for निलयं. ११ अमलैः संचोदितो for अमरैरसंचोदितो.

धर्मचार्याह — किमेवं कथयत ? ननु[1] यूयमस्य प्रत्यक्षपूवेमव बोधाय चरतस्तथाविधा निःसङ्गताभूत् । नैष्क्रम्यत्यागे च किमङ्ग पुनरेतर्हि[2] चरमभवावस्थितस्य सङ्गो[3] भविष्यति ?

अथ खलु भिक्षवो बोधिसत्त्वः कृतनिश्चयः संवेजित[4]मानसो व्यवसितबुद्धिः सलीलमविलम्बितं पर्यङ्कादवतीर्य सङ्गीतिप्रासादे पूर्वाभिमुखः स्थित्वा दक्षिणेन पाणिना रत्नजालिकामवनाम्य प्रासादकोटीगतो दशनखकृतकरपुटो भूत्वा सर्वबुद्धान् समन्वाहृत्य सर्वबुद्धेभ्यश्च नमस्कारं कृत्वा गगनतलमवलोकयति स्म । सोऽद्राक्षीद् गगनतलगतममराधिपतिं दशशतनयनं देवशतसहस्रपरिवृतं पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरछत्रध्वजपताकावतंसकरत्नहारदामपरिगृहीतमवनतकायं बोधिसत्त्वं नमस्यमानं स्थितम् । चतुरश्च लोकपालान् यक्षराक्षसगन्धर्वभुजगगणसंपरिवृतान् संनद्धदृढवर्मितकवचितान् असिधनुशरशक्तितोमरत्रिशूलहस्तान् सलीलं मणिमुकुटविलम्बितचूडान् बोधिसत्त्वं नमस्यमानान् स्थितान् पश्यति स्म । चन्द्रसूर्यावपि देवपुत्रौ L 210
वामदक्षिणयोः पार्श्वयोः[5] स्थितावपश्यत् । पुष्यश्च नक्षत्राधिपतिरुपस्थितोऽभूत् । अर्धरात्रिं[6] च समयं R 256
संप्राप्तम् । दृष्ट्वा च बोधिसत्त्वश्छन्दकमामन्त्रयते स्म —

छन्दका चपँलु[7] मा विलम्बहे
अश्वराज दद मे अलंकृतम् ।
सर्वसिद्धि मम एति मङ्गला
अर्थसिद्धि ध्रुवमद्य मेष्यते ॥ ३० ॥

अथ छन्दक इदं वचनं श्रुत्वा उद्विग्नमना एवमाह —

क्व गमिष्यसे विकसितभ्रू
कमलदल शुभलोचन
नृपसिंह शरदिन्दुपूर्ण
कुमुदशशाङ्कमुदिता ॥ ३१ ॥
नवनलिनकोमलविबुद्धपद्मवदना
हाटक[8]सुधान्तरवितरुणविमलशशितेज ।
घृतहुतार्चिरग्निमणिविद्युतत्प्रभोज्ज्वलिततेजो ।
वारणमत्तलीलगजगामि ।
गोवृषमृगेन्द्रहंसक्रम सुक्रमा सुचरणा ॥ ३२ ॥

बोधिसत्त्व आह —

छन्दक यस्य अर्थि मयि पूर्व त्यक्त करचरणनयन ।
तथ उत्तमाङ्ग[9] तनय भार्य प्रियाश्च राज्यधनकनकवसन ।
रत्नपूर्ण गज तुरगानिलजववेग विक्रमबलाः ॥ ३४ ॥

---

१ R नूनमस्य for ननु यूयमस्य. २ R पुनरेव तर्हि for पुनरेतर्हि. ३ R असङ्गो for सङ्गो. ४ R संवर्णित° for संवेजित°. ५ R पार्श्वयोरुस्थितोऽपश्यत्. ६ R °रात्रेश्च for °रात्रिं च. ७ R च खलु for चपलु. ८ R हाटकसौधान्तरितारुण° for हाटकसुधान्तरवितरुण°. ९ R उत्तमाङ्गन भार्य° for उत्तमाङ्ग तनय भार्य.

शीलु मि रक्षि क्षान्ति परिभावि
वीर्यबलध्यानप्रज्ञानिरतश्चा[1]स्मि बहुकल्पकोटिनयुता ।
किं तु स्पृशित्व बोधिशिवशान्तिम्
R 257 जरामरणपञ्जरनिरुद्धसत्त्वपरिमोचनस्य समयोऽद्युपस्थितु मम ॥ ३५ ॥

L 211 छन्दक आह — श्रुतं मया आर्यपुत्र यथा त्वं जातमात्र एव नैमित्तिकानां ब्राह्मणाना-
मुपनामितो दर्शनाय । तैश्चासि राज्ञः शुद्धोदनस्याग्रतो व्याकृतः — देव वृद्धिस्ते राजकुलस्य ।
आह — किमिति ? ते आहुः —

अयं कुमारः शतपुण्यलक्षणो
जातस्तवा आत्मज पुण्यतेजितः ।
स चक्रवर्ती चतुद्वीपईश्वरो
भविष्यति सप्तधनैरुपेतः ॥ ३६ ॥
स चेत्पुनर्लोकमवेक्ष्य दुःखितं
विजह्य[2]मान्तःपुरि निष्क्रमिष्यति ।
अवाप्य बोधिं अज[3]रामरं पदं
तर्पे[4]ष्यते धर्मजलैरिमां प्र[5]जाम् ॥ ३७ ॥

हन्त आर्यपुत्र अस्ति ता[6]वदेव तद्व्याकरणं नेदं न स्ति । किं तु शृणु तावन्ममार्थकामस्य
वचनम् । आह — किमिति । आह — देव यस्यार्थे इह केचिदनेकविधानि व्रततपांस्यारभन्तेऽजिन-
जटामकुटचीरवल्कलध[7]रा दीर्घनखकेशश्मश्रु च, अनेकविधानि कायस्यातापनपरितापनानि
समुत्सहन्ते । तीव्रं च व्रततपमारभन्ते । किमिति ? वयं देवमनुष्यसंपत्तिं प्रतिलभेमहीति ।
सा च संपत्त्वयार्यपुत्र प्रतिलब्धा । इदं च राज्यमृद्धं[8] च स्फीतं[9] च क्षेमं सुभिक्षं रमणीयमाकीर्ण-
बहुजनमनुष्यम् । इमानि चोद्यानानि वरप्रवराणि नानाविधपुष्पफलमण्डितानि नानाशकुनिगण-
R 258 निकूजितानि । पुष्करिण्यश्चोत्पलपद्मकुमुदपुण्डरीकोपशोभिता हंसमयूरकोकिलचक्र[10]वाकक्रोञ्चसारस-
निकूजिताः पुष्पितसहकाराशोकचम्पककुरबकतिलककेशरादिनानाद्रुमतीरोपरिबद्धा नानारत्न-
वृक्षवाटिकासमलंकृता अष्टापदविनिबद्धा रत्नवेदिकापरिवृता रत्नजालसंछन्ना यथर्तुकालपरिभोगा
L 212 ग्रीष्मवर्षाशरद्धेमन्तसुखसंवा[11]सा: । इमे च शरदभ्रनिभाः कैलासपर्वतसदृशा महाप्रासादा वैजयन्तसमा
धर्मसुधर्मक्षेम[12]समा शोकविगतप्रभृतयो वितर्दिनिर्यूहतोरणगवाक्षहर्म्यकूटागारप्रासादतल[13]समलंकृता
रत्नकिङ्किणीजालसमीरिताः । इदं चार्यपुत्र अन्तःपुरं तुणवपणववीणावेणुसंपताडावचराकिम्पलनकुल-
सुघोषकमृदङ्गपटहनृत्यगीतवादित्रसंगीतिसंप्रयोगसुशिक्षितं हास्यलास्यक्रीडितरमितसुखिल[14]मधुरोप-
चारम् । त्वं च देव[15] युवा अनभि[16]क्रान्तयौवनो नवो दहरस्तरुणः कोमलशरीरः शिशुः कृष्णकेशः ।

---

१ R °श्चासि for °श्चास्मि. २ R विजह्यान्तःपुरं for विजह्यमान्तःपुरि. ३ R अजरामरणं. ४ R तर्पयिष्यते. ५ R om. प्रजाम्. ६ R तावदेतद्व्याकरणं for तावदेव तद्व्याक°. ७ L °वल्कलधारा for °धरा. ८ R ऋद्धि for ऋद्धं. ९ R समृद्धं च स्फुटं for स्फीतं. १० R om. °चक्रवाक°. ११ R °संवास्याः for °संवासाः. १२ R °क्षेत्र° for °क्षेम°, १३ R om. °तल°. १४ R °सुखित° for सुखिल°. १५ R देवपुत्रो for देव. १६ R अतिक्रान्त° for अनभिक्रान्त°

अविक्रीडितः कामैः । अभिरमस्व[1] तावदमराधिपतिरिव दशशतनयनस्त्रिदशाधिपतिः । ततः पश्चाद् वृद्धीभूता अभिनिष्क्रमिष्यामः । तस्यां च वेलायामिमां गाथामभाषत –

रमतां च रतिविधिज्ञां अमराधिपतिर्यथा त्रिदशलोके ।
पश्चाद्[2] वृद्धीभूता व्रततपसं आरभिष्यामः ॥ ३९ ॥

बोधिसत्त्व आह – अलं छन्दक । अनित्याः खल्वेते कामा अध्रुवा अशाश्वता विपरिणामधर्माणः प्रद्रुताश्चपला गिरिनदीवेगतुल्याः । अवश्यायबिन्दुवदचिरस्थायिन उल्लापना रिक्तमुष्टिवदसाराः कदलीस्कन्धवद्दुर्बला आमभाजन[3]वद्भेदनात्मकाः शरदभ्रनिभाः क्षणाद्भूत्वा न भवन्ति । अचिरस्थायिनो विद्युत इव नभसि सविष[4]भोजनमिव परिणामदुःखा मालुतालतेवासुखदा R 259 अभिलिखिता बालबुद्धिभिरुदकबुद्बुदोपमाः क्षिप्रं विपरिणामधर्माणः । मायामरीचिसदृशाः संज्ञाविपर्याससमुत्थिताः । मायासदृशाश्चित्तविपर्यासविधापिताः । स्वप्नसदृशा दृष्टिविपर्यासपरिग्रहयोगेनातृप्ति[5]कराः । सागर इव दुष्पूरा[6] लवणोदक इव तृषाकराः[7] । सर्पशिरोवद्दुःस्पर्शनीया L 213 महाप्रपातवत्परिवर्जिताः पण्डितैः । सभयाः सरणाः सादीनवः सदोषाः इति ज्ञात्वा विवर्जिताः प्राज्ञैर्विगर्हिता विद्वद्भिर्जुगुप्सिता आर्यैर्विवर्जिताः बुधैः परिगृहीता अबुधैर्निषेविता बालैः । तस्यां च वेलायामिमां गाथामभाषत –

विवर्जिता सर्पशिरो यथा बुधैः
विगर्हिता मीढघटो[8] यथाशुचिः ।
विनाशका सर्वशुभस्य[9] छन्दका
ज्ञात्वा हि कामान्न मि जायते[10] रतिः ॥ ४० ॥

तदा छन्दकः शल्यविद्धो यथा क्रन्दमानस्ततोऽश्रुनेत्रो दुःखी एवं वाक्यमब्रवीत् –

देवा यस्यार्थि केचिदिहा तीव्रे[11] नेकविधा आरभन्ते व्रतान्
अजिनजटाधर सुदीर्घकेशानखा श्मश्रुचीरास्तथा ।
वल्कलाधार शुष्काङ्ग नेके[12] व्रतानाश्रिता
शाकश्यामाकगर्दूलभक्षाश्च ओमूर्धका[13]श्चापरे गोव्रतां संश्रिताः ॥ ४१ ॥

किं तु वय भवेम श्रेष्ठा विशिष्टा जगे R 260
चक्रवर्तिवरा लोकपालास्तथा ।
शक्र वज्रंधरा याम देवाधिपा निर्मिता ।
ब्रह्मलोके च ध्यानासुखाकाङ्क्षिणः ॥ ४२ ॥
तदिद नरवरिष्ठ राज्यं तव स्फीतमृद्धं सुभिक्षं तथा
आरामोद्यानप्रासादउच्छ्रेपितं वैजयन्तासमम् ।

---

१ R रमस्व for अभिरमस्व. २ R ततः पश्चाद् for पश्चाद्. ३ R °भोजन° for °भाजन°. ४ R विष° for सविष°. ५ R आप्तिकराः for अतृप्ति°. ६ R दुःखपूरा for दुष्पूरा. ७ R तृषाकुलाः for °कराः. ८ R मीढघटा for °घटो. ९ R सर्वसुखस्य for °शुभस्य. १० R विजायते for मि जायते. ११ R आतीव्रानेकविधान् for तीव्रनेकविधा. १२ R अनेके for नैके. १३ R ऊर्ध्वमुखा for ओमूर्धकाः.

इन्निगारस्[1]वयं वेणुवीणारवै गीतवाद्यै रती नृत्यसंगीति संयोगि[2] संशिक्षितं
भुञ्ज कामानिमान् मा व्रजा सूरता ॥ ४३ ॥

L 214 बोधिसत्त्व आह –

छन्दक शृणु यानि दुःखाशतार्[3]मर्पिता पूर्वि जन्मान्तरे
बन्धना रुन्धना ताडना तर्जना कामहेतोर्मया ।
नो च निर्विण्ण[4]भूत् संस्कृते मानसम् ॥ ४४ ॥

प्रमदवशगतं च मोहाकुलं दृष्टिजालावृतं अन्धभूतं पुरा ।
आत्मसंज्ञाग्रहाकारका वेदनावीतिवृत्ता इमे धर्म अज्ञानतः ॥ ४५ ॥

R 261 संभूता चपलचलऽनित्य मेघैः समा विद्युभिः सदृशाः ।
ओसबिन्दूपमा रिक्ततुच्छा असारा अनात्मा च शून्यस्वभावा इमे सर्वशः ॥ ४६ ॥

न च मम विषयेषु संरज्यते मानसं
देहि मे छन्दका कण्ठकालंकृतं अश्वराजोत्तमम् ।
पू[5]र्ण मे मङ्गलै[6] ये पुरा चिन्तिता
भेष्यि सर्वाभिभू सर्वधर्मेश्वरो धर्मराजो मुनिः ॥ ४६ ॥

छन्दक आह –

इमां विबुद्धाम्बुजपत्रलोचनां
विचित्रहारां मणिरत्नभूषिताम् ।
घनप्रमुक्तामिव विद्युतां नभे
नोपेक्षसे शयनगतां विरोचतीम् ॥ ४८ ॥

इमांश्च वेणून् पणवां सुघोषकां
मृदङ्गवंशांश्च संगीतवादिताम् ।
चको[7]रंसोरां कलविङ्कनादितां
यथालयं किन्नरिणां विहास्यसे ॥ ४९ ॥

सुमनोत्पलां वार्षिकचम्पकांस्तथा
सुगन्धमालां गुणपुष्पसंचयाम् ।
R 262 कालागुरूनुत्तमगन्धधूपनां
नोपेक्षसे ताननुले[8]र्पनान् वरान् ॥ ५० ॥

सुगन्धगन्धांश्च रसां प्रणीतां
सुसाधितां व्यञ्जनभोजनांस्तथा ।

---

१ R स्ववेणु° for स्वयं वेणु°. २ R °संयोग for °संयोगि. ३ R मर्षिता for अर्पिता. ४ R निर्विदभूत् for निर्विण्णभूत्. ५ R पूर्णमेवं for पूर्ण मे. ६ L मङ्गलायै for मङ्गला ये. ७ R चकोरस्वरां for °सोरां. ८ R °लेप ताम्बराम् for °लेपनान्तान्.

सशर्करां पानरसां सुसंस्कृतां
नोपेक्षसे देव कहिं गमिष्यसि ॥ ५१ ॥
शीते च उष्णाननुलेपनाम्बरां L 215
उष्णे च तानुरगसारचन्दनां ।
तां काशिकावस्त्रवराम्बरां शुभां
नोपेक्षसे देव कहिं गमिष्यसि ॥ ५२ ॥
इमे च ते ( देव ) कामगुणा हि पञ्च
समृद्ध देवेष्विव देवतानाम् ।
रमस्व तावद्रतिसौख्यअन्वितः
ततो वनं यास्यति[1] शाक्यपुङ्गवः ॥ ५३ ॥

बोधिसत्त्व आह –

अपरिमितानन्त कल्पा मया छन्दका भुक्त कामानि[2] रूपाश्च शब्दाश्च गन्धा रसा स्पर्शा[3] नानाविधा ।
दिव्य ये मानुषा नो च तृप्तीरभूत् । R 263
नृपतिवरसुतेन ऐश्वर्य कारापितं चातुर्द्वीपे यदा[4] राज भूचक्रवर्ती समन्वागतः सप्तभी रत्नभिः
इस्त्रिगारस्य मध्ये गतः ।
त्रिदशपतिसुयामदेवाधिपत्यं च कारापितं येभ्यश्चाहं च्यवित्वा इहाभ्यागतो निर्मितो निर्मितेषु
मानो आत्मिका च श्रिया उत्तमा । भुक्त पूर्वे मया ।
सुरपुरि[5] वशवर्ति मारेश्वत्वं च कारापितं
भुक्त कामाः समृद्धा वरा[6] नो च तृप्तीरभूत् ।
किं पुनो[7] अद्य मां हीनसंसेवतस्तृप्ति गच्छेदहं स्थानमेतन्न संविद्यते ॥ ५४ ॥

अपि च –

इमु[8] जगं अपेक्षाम्यहं[9] छन्दका दुःखितं शोककान्तारसंसार[10]मध्ये स्थितम् ।
क्लेशव्यालाकुले उह्यमानं[11] सदा ।
अशरणमपरायणं मोहविद्यान्धकारे जराव्याधिमृत्यूभयैः पीडितम् । L 216
जन्मदुःखैः समभ्याहतं[12] व्याहतं शत्रुभिः ।
अहमिह[13] समुदानिया धर्मनावं महात्याग[14]शीलव्रतक्षान्तिवीर्याबलां दारुसंभारसंघातितां[15] R 264
सारमध्याशयैर्वज्रकैः संगृहीतां दृढाम् ।
स्वयमहमभिरुह्य नावामिमात्मानोऽवतीर्य संसारओघे[16] अहं तारयिष्ये अनन्तं जगत् ।
शोकसंसारकान्ताररोषोर्मिरागग्रहाँ[17]वर्तवैराकुले दुस्तरे । एव चित्तं मम ॥ ५५ ॥

---

१ R यास्यसि for यास्यति. २ R कामानिमां for कामानि. ३ R स्पर्शता for स्पर्शा. ४ R महाराज for यदा राज. ५ R सुरपति for सुरपुरि. ६ R बलान्नो for वरा नो. ७ R पुनरद्य for पुनो अद्य. ८ R इदं for इमु. ९ R उपेक्षाम्यहं for अपेक्षा°. १० R om. °संसार°. ११ R दह्यमानं for उह्यमानं. १२ R समत्याहतं for समभ्या°. १३ R इमं for इह. १४ R om. °त्याग°. १५ R दानसंभारसंघातां for दारुसंभारसंघातितां. १६ R संसारओघे for °ओघे. १७ R °महाव्याकुले for °ग्रहावर्तवैराकुले.

तदात्मनोत्तीर्य इदं भवार्णवं
सवैरदृष्टिग्रहक्लेशराक्षसम् ।
स्वयं तरित्वा च अनन्तकं जगत्
स्थले स्थपेष्ये अजरामरे शिवे ॥ ५६ ॥

तदा छन्दको भूयस्या मात्रया प्ररुदन्नेवमाह – देव एष व्यवसायस्य निश्चयः ? बोधिसत्त्व आह –

शृणु छन्दक मह्य निश्चयं
मोक्षसत्त्वार्थ हितार्थमुद्यतम् ।
अचलाचलमव्ययं दृढं
मेरुराजेव यथा सुदुश्चलम् ॥ ५७ ॥

R 265 छन्दक आह – कीदृश आर्यपुत्रस्य निश्चयः ?

बोधिसत्त्व आह –

वज्राशनिः परशुशक्तिशरांश्च वर्षे[1]
विद्युत्प्रतानज्वलितः क्वथितं च लोहम् ।
आदीप्तशैलशिखरा प्रपतेयु मूर्ध्नि
नैवा[2] अहं पुन जनेय गृहाभिलाषम् ॥ ५८ ॥

L 217 तदा अमर नभगताः किलकिला मुञ्चिषु कुसुमवृष्टिः[3] ।
जय हे परममतिधरा जगति अभयदायका नाथ ॥ ५९ ॥
न रज्यते पुरुषवरस्य मानसं
नभो यथा तमरजधूमकेतुभिः ।
न लिप्यते विषयसुखेषु निर्मलो
जले यथा नवनलिनं समुद्भवम् ॥ ५९ ॥

अथ खलु भिक्षवो बोधिसत्त्वस्य निश्चयं विदित्वा शान्तमतिश्च देवपुत्रो ललितव्यूहश्च देवपुत्रः कपिलवस्तुनि महानगरे[4] सर्वस्त्रीपुरुषदारकदारिकानामपस्वापनमकुरुताम्, सर्वशब्दांश्चान्तर्धापयामासतुः ॥

अथ खलु भिक्षवो बोधिसत्त्वः सर्वं नगरजनं प्रसुप्तं विदित्वा अर्धरात्रिसमयं चोपस्थितं
R 266 ज्ञात्वा पुष्यं च नक्षत्राधिपतिं युक्तं ज्ञात्वा सांप्रतं निष्क्रमणकाले[5] इति ज्ञात्वा छन्दकमामन्त्रयते स्म – छन्दक मां मेदानीं खेदय । प्रयच्छ मे कण्ठकं समलंकृत्य, मा च विलम्बिष्ठाः ॥

समनन्तरोदाहृता[6] च बोधिसत्त्वेनेयं[7] वाक् । अथ तत्क्षणमेव चत्वारो लोकपाला बोधिसत्त्वस्य वचनमुपश्रुत्य स्वकस्वकानि च भवनानि गत्वा बोधिसत्त्वस्य पूजाकर्मणे स्वैः स्वैर्व्यूहैस्त्वरितं त्वरितं[8] पुनरपि कपिलवस्तुमहानगरमागच्छन्ति स्म ॥

---

१ R °शराश्मवर्षे for शराश्च वर्षे. २ R नो वा for नैवा. ३ R °वृष्टिं for °वृष्टिः. ४ R °नगरवरे for °नगरे. ५ R °कालमिति for °काल इति. ६ R °हृतास्य for °हृता. ७ R बोधिवाक् for बोधिसत्त्वेनेयं वाक्. ८ R त्वरितं once for त्वरितं त्वरितं.

तत्र धृतराष्ट्रो महाराजो गन्धर्वाधिपतिः पूर्वस्या दिश[1] आगतोऽभूत् सार्धमनेकैर्गन्धर्वकोटिनियुतशतसहस्रैर्नानातूर्यसंगीतिसंप्रवादितेन । आगत्य च कपिलवस्तुमहानगरं प्रदक्षिणीकृत्य यथागतः पूर्वां दिशमुपनिश्रित्यास्थात् बोधिसत्त्वं नमस्यमानः ॥

दक्षिणस्या दिशो[2] विरूढको महाराजोऽभ्यागतोऽभूत् सार्धमनेकैः कुम्भाण्डकोटिनियुतशतसहस्रैर्नानामुक्ताहारपाणिप्रलम्बितैर्नानामणिरत्नपरिगृहीतैर्विविधगन्धोदकपूर्णघटपरिगृहीतैः । आगत्य च कपिलवस्तु[3]महानगरं प्रदक्षिणीकृत्य यथागत एव दक्षिणां दिशमुपनिश्रित्यास्थात् बोधिसत्त्वं नमस्यमानः ॥ L 218

पश्चि[4]माया दिशो विरूपाक्षो महाराज आगतोऽभूत् सार्धमनेकैर्नागकोटिनियुतशतसहस्रैर्नानामुक्ताहारपा[5]णिप्रलम्बितैर्नानामणिरत्नपरिगृहीतैर्गन्धचूर्णपुष्पवर्षमेघसमुत्थितैश्च मृदुभिः सुगन्धिभिर्नानावातैः प्रवायद्भिः । आगत्य च कपिलवस्तुमहानगरं प्रदक्षिणीकृत्य यथागत एव पश्चिमां दिशमुपनिश्रित्यास्थात् बोधिसत्त्वं नमस्यमानः ॥ R 267

उत्तरस्या दिशः कुबेरो महाराज आगतोऽभूत् सार्धमनेकैर्यक्षकोटिनियुतशतसहस्रैर्ज्योतीरसमणिरत्नपरिगृहीतैर्दीपिकापाणिपरिगृहीतैश्च ज्वलितोल्कापाणिपरिगृहीतैर्धनुरसिशरशक्तितोमरत्रिशूलचक्रकणयभिन्दिपा[6]लादिनानाप्रहरणपरिगृहीतैर्दृढसंनद्धवर्मितकवचितैः । आगत्य कपिलवस्तुमहा[7]नगरं प्रदक्षिणीकृत्य यथागत एवोत्तरां दिशमुपनिश्रित्यास्थात् बोधिसत्त्वं नमस्यमानः ॥

शक्रश्च देवानामिन्द्रः सार्धं त्रायत्रिंशदेवैरागतोऽभूत् दिव्यपुष्प[8]गन्धमाल्यविलेपनचूर्णचीवरछत्रध्वजपताका[9]वतंसकाभरणपरिगृहीतैः । आगत्य कपिलवस्तुमहानगरं प्रदक्षिणीकृत्य यथागत एव सपरिवार उपर्यन्तरिक्षेऽस्थात् बोधिसत्त्वं नमस्कुर्वन् ॥

इति हि भिक्षवश्छन्दको बोधिसत्वस्य वचनमुपश्रुत्याश्रुपूर्णनयनो बोधिसत्वमेवमाह—आर्यपुत्र त्वं च कालज्ञो वेलज्ञश्च समयज्ञः । अयं च[10] अकालोऽसमयो गन्तुम् । तत्किमाज्ञापयसि इति ॥

बोधिसत्व आह—छन्दक, अयं स कालः ।

छन्दक आह—कस्यार्यपुत्र कालः ? L 219

बोधिसत्व आह— R 268

यत्तन्मया प्रार्थितु दीर्घरात्रं
सत्त्वा[11]नमर्थं परिमार्गता हि ।
अवाप्य बोधिं अजरामरं पदं
मोचे[12] जगत्तस्य क्षणो उपस्थितः ॥ ६० ॥

इयमत्र धर्मता ॥

---

१ R दिशि for दिश. २ R दिशि for दिशो. ३ R °वस्तुनि for °वस्तुमहानगरं. ४ R एवं पश्चि° for पश्चि°. ५ R om. °पाणि°. ६ R °पालनाना° for °पालादिनाना°. ७ R °नगरवरं for नगरं. ८ R पुष्पधूप° for °पुष्पगन्ध°. ९ R om. °वतंसका°. १० R च कालो for चाकालो. ११ R सत्त्वत्राणार्थं for सत्त्वानमर्थं. १२ R मोचिज्जगत् for मोचे जगत्.

तत्रेदमुच्यते —

भौमान्तरीक्षाश्च तथैव पालाः
शक्रश्च देवाधिपतिः सयक्षः ।
यामाश्च देवास्तुषिताश्च निर्मिताः
परनिर्मितोद्युक्त तथैव देवाः ॥ ६१ ॥
वरुणो मनस्वी अपि नागराजा
अनावतप्तश्च तथैव सागरः
अभियुक्त ते चाप्यभिपूजनार्थं
नैष्क्रम्यकाले नरपुंगवस्य ॥ ६२ ॥
ये चापि रूपावचरेषु देवाः
प्रशान्तचारी सह ध्यानगोचराः ।
अभियुक्त ते चाप्यभिपूजनार्थं
त्रैलोक्यपूज्यस्य नरोत्तमस्य ॥ ६३ ॥
दशादिशोऽभ्यागत शुद्धसत्त्वाः
सहायकाः पूर्वचारिं चरन्तः[1] ।
द्रक्ष्यामहे निष्क्रमणं जिनस्य
पूजां करिष्यामि तथानुरूपाम् ॥ ६४ ॥
स चापि गुह्याधिपतिर्महात्मा
प्रदीप्तवज्रो[2] नभसि प्रतिस्थितः ।
संनद्धगात्रो बलवीर्यविक्रमः
करेण गृह्य ज्वलमानु वज्रम् ॥ ६५ ॥
चन्द्रश्च सूर्यो उभि देवपुत्रौ
प्रदक्षिणं वामकु सुप्रतिस्थितौ ।
R 269 दशाङ्गुली अञ्जलिभिर्[3]गृहीत्वा
नैष्क्रम्यशब्दोऽनुविचारयन्ति ॥ ६६ ॥
पुष्यश्च नक्षत्र[4] सपारिषद्यो
औदारिकं[5] निर्मिणि आत्मभावम् ।
स्थित्वाग्रतस्तस्य नरोत्तमस्य
मनोज्ञघोषाभिरुतं प्रमुञ्चत् ॥ ६७ ॥
सर्वेऽद्य सिद्धाः शुभ तुभ्य मङ्गलाः
पुष्यश्च युक्तः समयश्च गन्तुम् ।

---

१ R च रत्नाः for चरन्तः. २ R आदीप्त° for प्रदीप्त°. ३ R अञ्चलिभिः. ४ R नक्षत्रे for नक्षत्र. ५ R औदारिक निर्मित for °रिकं निर्मिणि.

अहं पि[1] यास्यामि त्वयैव सार्धं
अनुत्तरायो भव रागसूदनः ॥ ६८ ॥

संचोदकश्चोदयि देवपुत्र L 220
उत्तिष्ठ शीघ्रं बलवीर्यउद्गतः ।
दुःखैर्हतांस्तारय सर्वसत्त्वान्
नैष्क्रम्यकालः समुपस्थितस्ते ॥ ६९ ॥

समागता देवसहस्रकोट्यः
प्रवर्षमाणा कुसुमान् मनोज्ञान् ।
स चापि पर्यङ्कवरे निषण्णो
देवैर्वृतो भ्राजति दीप्ततेजैः[2] ॥ ७० ॥

नगरे इस्त्रिक दारकाश्च पुरुषा याश्चाभवन् दारिकाः
सर्वे ते शयिता किलान्तमनसो ईर्यापथेभ्यश्च्युताः[3] ।
हस्तिं[4] अश्वगवाश्च सारिकशुकाः क्रोञ्चा मयूरास्तथा
सर्वे ते शयिता किलान्तमनसः पश्यन्ति रूपं न ते ॥ ७१ ॥

ये चा ते दृढवज्रतोमरधरा शाक्यैः सुताः स्थापिताः
हस्तिअश्वरथेषु[5] तोरणवरे ते चाप्यवस्वापिताः ।
राजा राजकुमार पार्थिवजनः सर्वे प्रसुप्ता भवन् R 270
अपि चा नारिगणा विनग्नवसना[6] सुप्ता न ते बुद्धिषू ॥ ७२ ॥

सो च ब्रह्मरुतो मनोज्ञवसनः कलविङ्कघोषस्वरो
रात्रौ निर्गत अर्धरात्रसमये तं छन्दकं अब्रवीत् ।
साधू छन्दक देहि कण्ठकु मम स्वालंकृतं शोभनं
मा विघ्नं कुरु मे ददाहि चपलं यदि मे प्रियं मन्यसे ॥ ७३ ॥

क्व त्वं यास्यसि सत्त्वसारथिवरा किं अश्वकार्यं च ते
कालज्ञः समयज्ञ धर्मचरणो[7] कालो न गन्तुं क्वचित् ।
द्वारास्ते पिथिता[8] दृढार्गलकृता को दास्यते तां तव ।
शक्रेणा मनसाथ चेतनवशात्ते द्वार मुक्ता कृताः
दृष्ट्वा छन्दक हर्षितो पुन दुखी अश्रूणि सोऽवर्तयी ।
हा धिक्को मि[9] सहायु किं तु[10] कुरुमी धावामि कां वा दिशं L 221
उग्रंतेज[11]धरेण वाक्यु भणितं शक्यं न संधारितुम् ॥ ७४ ॥

---

१ R प्रयास्यामि for पि यास्यामि. २ R दीप्ततेजाः for °तेजः. ३ R ईर्षापथेभ्यः for ईर्या°. ४ R हस्त्यश्वश्च for हस्तिअश्व°. ५ R हस्त्यश्व° for हस्तिअश्व°. ६ R विलग्न° for विनग्न°. ७ R धर्मचरणे for °चरणो. ८ R पिहिता for पिथिता. ९ R सि for मि. १० R किं च for किं तु. ११ R° तेजवरेण for °धरेण.

सा सेना चतुरङ्गिनी बलवती किं भू[1] करोतीह हा
राजा राजकुमार पार्थिव जनो नेमं हि बुध्यन्ति ते ।
स्त्रीसंघः शयितस्तथा यशवती ओस्वापिता देवतैः
R 271 हा धिग्गच्छेति[2] सिध्यतेऽस्य प्रणिधिर्यश्चिन्तितः पूर्वशः ॥ ७५ ॥

देवाः कोटिसहस्र हृष्टमनसस्तं छन्दकं अब्रुवन्
साधू छन्दक देहि कण्ठकवरं मा खेदयी नायकम् ।
भेरीशङ्खमृदङ्गतूर्यनयुता देवासुरैर्वादिताँ[3]
नैवेदं प्रतिबुध्यते पुरवरं ओस्वापितं देवतैः ॥ ७६ ॥

पश्य छन्दक अन्तरीक्ष विमलं दिव्या प्रभा शोभते
पश्य त्वं बहुबोधिसत्वनयुतां ये पूजनायागताः ।
शक्रं पश्य शचीपतिं बलवृतं द्वारस्थितं भ्राजते
देवांश्चाप्यसुरांश्च किन्नरगणां ये पूजनार्थागताः ॥ ७७ ॥

श्रुत्वा छन्दक देवतान वचनं तं कण्ठकं आलपी
एष्वागच्छति[4] सत्वसारथिवरः त्वं ताव हेषिष्यसे ।
सो तं वर्षिकुँ[5]वर्ण काञ्चनखुरं स्वालंकृतं कृत्वना
उपनेती गुणसागरस्य वहनं रोदन्तको दुर्मना ॥ ७८ ॥

एषा ते वरलक्षणा हितकरा अश्वः सुजातः शुभो
गच्छ सिध्यतु तुभ्य एव प्रणिधिर्यश्चिन्तितः पूर्वशः ।
ये ते विघ्नकरा व्रजन्तु प्रशमं आँसां[6] व्रतं सिध्यतां
R 272 भवँही[7] सर्वजगस्य सौख्यददनः स्वर्गस्य शान्त्यास्तथा ॥ ७९ ॥

L 222 सर्वा कम्पित षड्विकार धरणी शयनाद्यदा सोत्थितः
आरूढः शशिपूर्णमण्डलनिभं तं अश्वराजोत्तमम् ।
पालाँ[8] पाणिविशुद्धपद्मविमला न्यँसयिंसु[9] अश्वोत्तमे
शक्रो ब्रह्म उभौ च तस्य पुरतो दर्शयन्ति मार्गों[10] ह्ययम् ॥ ८० ॥

आभा तेन प्रमुक्त अच्छविमला ओभासिता मेदिनी
सर्वे शान्त अपाय सत्त्व सुखिता क्लेशैर्न बाध्यी तदा ।
पुष्पा वर्षिषु तूर्यकोटि रणिषू देवासुरास्तुष्टुवुः
सर्वे कृत्व प्रदक्षिणं पुरवरं गच्छन्ति हर्षान्विताः ॥ ८१ ॥

---

१ R नु for भू. २ R गच्छतु for गच्छति. ३ R चोदिताः for वादिताः. ४ R एषागच्छति for एष्वागच्छति. ५ R वर्षिषु for वर्षिकु°. ६ R सा सा for आसां. ७ R देवो भवहि for भवही. ८ R माला for पाला, ९ R न्यसन्न for न्यसयिंसु. १० R मार्गोत्तम for मार्गो ह्ययम्.

पुरवरोत्तमि देवते[1] दीनमना
उपगम्य गच्छति महापुरुषे ।
पुरतः स्थिता करुणदीनमना
गिरया समालपति पद्ममुखम् ॥ ८२ ॥

तमसाकुलं भुविमु[2] सर्वपुरं
नगरं न शोभति त्वया रहितम् ।
न ममात्र काचि रति प्रीतिकरी R 273
त्यक्तं त्वया च यदिदं भवनम् ॥ ८३ ॥

न पुनः श्रुणिष्यि रुतु पक्षिगणे
अन्तःपुरे मधुरवेणुरवम् ।
मङ्गल्य[3]शब्द तथ गीतरवं
प्रतिबोधनं तव अनन्तयशः[4] ॥ ८४ ॥

दर्शे[5] न भूयु सुरसिद्धगणां
कुर्वन्तु पूज तव रात्रिदिवम् ।
घ्रायिष्यि गन्ध न च दिव्य पुनः
त्वयि निर्गते निहतक्लेशगणे ॥ ८५ ॥

निर्मुक्तमाल्यमिव पर्युषितं
त्यक्तं त्वयाद्य भवनं हि तथा ।
नटरङ्गकल्प प्रतिभायति मे
त्वयि निर्गते न भुयु तेजशिरि ॥ ८६ ॥

ओजो बलं हरसि सर्वपुरे
न च शोभते अटवितुल्यमिदम् ।
वितथं ऋषीण वचनाद्य भुतं
येही वियाकृतु[6] भुवि चक्रबलो ॥ ८७ ॥

अबलं[7] बलं भुविमु शाक्यबलं R 274
उच्छिन्न वंश इह राजकुले ।
आशा प्रनष्ट इह शाक्यगणे
त्वयि निर्गते महति पुण्यद्रुमे ॥ ८८ ॥

अर्हमेव[8] तुभ्य गति गच्छयमी L 223
यथ त्वं प्रयासि अमला विमला ।

---

१ R देवतलक्ष्मी for देवत. २ R भूमिषु for भुविमु. ३ R मङ्गल° for मङ्गल्य°. ४ R °यशैः for °यशः. ५ R द्रक्षेण for दर्शेन. ६ R व्याकृतु° for वियाकृतु. ७ R अचल बलन्तु विषु for अबलं बलं भुविमु. ८ R अथ त्वं for अर्हमेव.

अपि चा कृपा करुण संजनिय
व्यवलोकयस्व भवनं त्वमिदम्[1] ॥ ८९ ॥
व्यवलोक्य चैव भवनं मतिमान्
मधुरस्वरो गिरमुदीरितवान् ।
नाहं प्रवेक्षि कपिलस्य पुरं
अप्राप्य जातिमरणान्तकरम् ॥ ९० ॥
स्थानासनं शयनचंक्रमणं
न करिष्यहं कपिलवस्तुमुखम् ।
यावन्न लब्ध वरबोधि मया
अजरामरं पदवरं ह्यमृतम् ॥ ९१ ॥
यदसौ जगत्प्रधानो निष्क्रान्तु बोधिसत्त्वो
तस्या नभे व्रजन्तो स्तवयिंसु अप्सरोणाम्[2] ।
एष मह दक्षिणीयो एष मह पुण्यक्षेत्रं
R 275 पुण्यर्थिकान क्षेत्रं अमृताफलस्य दाता ॥ ९२ ॥
एन[3] बहुकल्पकोटी दानदमसंयमेना
समुदानितास्य बोधिः सत्त्वकरुणायमाना[4] ।
एष परिशुद्धशीलो सुव्रत अखण्डचारी
न च काम नैव भोगां प्रार्थेन्तु शीलरक्षी ॥ ९३ ॥
एष सद क्षान्तिवादी छिद्यन्ति[5] अङ्गमङ्गे
न च[6] क्रोधु नैव रोषः सत्त्वपरित्रायणार्थम् ।
एष सद वीर्यवन्तो अविखिन्न[7] कल्पकोट्यः
समुदानितास्य बोधिर्यष्टा च यज्ञकोटीः ॥ ९४ ॥
एष सद ध्यानध्यायी शान्तप्रशान्तचित्तो
ध्यायित्व सर्वक्लेशां मोचेष्यि सत्त्वकोटीः ।
एषो असङ्ग प्राज्ञः कल्पैर्विकल्पमुक्तो
कल्पैर्विमुक्तचित्तो जिनु भेष्यते स्वयंभूः ॥ ९५ ॥
L 224 एष सद मैत्रचित्तो करुणाय पारप्राप्तो
मुदितो उपेक्षध्यायी ब्राह्मे[8] पथि विधिज्ञः ।
एषोऽतिदेवदेवो देवेभि पूजनीयो
R 276 शुभविमलशुद्ध[9]चित्तो गुणनियुतपार[10]प्राप्तः ॥ ९६ ॥

---

१ त्वमिदं for त्व°. २ R अप्सराणि for °राणाम्. ३ R एष for एन. ४ R °करुणाय मनो हि for °करुणायमाना. ५ R छिन्दन्तां for छिद्यन्ति. ६ R न चैव for न च. ७ R अविच्छिन्नः for अविखिन्न.° ८ R ब्राह्मपथे for ब्राह्मे पथि. ९ R °विशुद्ध° for °शुद्ध°. १० R °पारमि° for °पार°.

शरणं भयार्दितानां दीपो अचक्षुषाणां
    लयनो[1] उपद्रुतानां वैद्यश्चिरातुराणाम् ।
राजेव[2] धर्मराजो इन्द्रः सहस्रनेत्रो
    ब्रह्मस्वयंभुभूतः[3] कायप्रशब्धचित्तो[4] ॥ ९७ ॥
धीरः प्रभूतप्रज्ञो वीरो विविक्तचित्तः[5]
    शूरः क्लिेशघाती अजितंजयो जितारिः ।
सिंहो भयप्रहीणो नागः सुदान्तचित्तो
    ऋषभो गणप्रधानः क्षान्तः[6] प्रहीणकोपः ॥ ९८ ॥
चन्द्रः प्रभासयन्तः सूर्योऽवभासकारी[7]
    उल्का प्रद्योतकारी सर्वतमोविमुक्तः ।
पद्मं अनोपलिप्तं पुष्पं सुशीलपत्रं
    मेरूरकम्पि शास्ता पृथिवी यथोपजीव्यो
    रतनाकरो अक्षोभ्यः ॥ ९९ ॥
एन जितु क्लेशमारो एन जितु स्कन्धमारो
    एन जितु मृत्युमारो निहतोऽस्य देव( पुत्र )मारो ।
एष मह सार्थवाहो कुपथप्रतिस्थितानां
    अष्टाङ्गमार्गश्रेष्ठं देशेष्यते[8] नचिरेणा ॥ १०० ॥ R 277
जरमरणक्लेशघाती तमतिमिरविप्रमुक्तो[9] L 225
    भुवि दिवि च संप्रघुष्टो[10] जिनु भेष्यते स्वयंभूः ।
स्तुत स्तवितु अप्रमेयो वरपुरुषरूपधारी
    यत्पुण्य त्वां स्तवित्वा भोम[11] यथ वादिसिंहः ॥ १०१ ॥

इति हि भिक्षवोऽभिनिष्क्रान्तो[12] बोधिसत्त्वोऽतिक्रम्य शाक्यानतिक्रम्य क्रोड्यानतिक्रम्य मल्लान् मैनेयानामनुवैनेये निगमे[13] षट्सु योजनेषु । तत्र बोधिसत्त्वस्य रात्रिप्रभातोऽभूत्[14]। ततो बोधिसत्त्वो कण्ठकादवतीर्य धरणीतले स्थित्वा तं महान्तं देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगसंघं विसर्जयति स्म । विसर्ज्य[15] चास्यैतदभूत् – इमान्याभरणानि कण्ठकं च छन्दकस्य हस्ते विसर्जयामीति ॥

अथ बोधिसत्त्वश्छन्दकमामन्त्र्यैतदवोचत् — गच्छ त्वं छन्दक, इमान्याभरणानि कण्ठकं च गृहीत्वा निवर्तयस्व । यत्र च प्रदेशे छन्दको निवृत्तस्तत्र चैत्यं स्थापितमभूत् । अद्यापि तच्चैत्यं छन्दकनिवर्तनमिति ज्ञायते ॥

---

१ R नयनो for लयनो. २ R राजा वरधर्मं° for राजेव धर्मं°. ३ R °स्वयंभूतः for °स्वयंभुभूतः. ४ R °प्रशस्त for °प्रशब्ध°. ५ R विनिर्मुक्त° for विविक्त°. ६ R om. क्षान्तः. ७ R सूर्यावभाष° for सूर्योऽवभास°. ८ R देशयिष्यते for देशेष्यते. ९ R °प्रमुक्तो for विप्र°. १० R संघुष्टो for संप्रघुष्टो. ११ R भवामो यथा for भोम यथ. १२ R निष्क्रान्तः for अभिनि°. १३ R निर्गमे for निगमे. १४ R रात्रिः for रात्रि°. १५ R विसृज्य for विसर्ज्य.

पुनश्च बोधिसत्त्वस्यैतदभवत्—कथं च नाम चूडा च प्रव्रज्या चेति। स खड्गेन चूडां छित्त्वा अन्तरिक्षे क्षिपति स्म। सा च त्रायत्रिंशता देवैः परिगृहीताभूत् पूजार्थम्। अद्यापि च R 278 त्रायत्रिंशत्सु देवेषु चूडामहो वर्तते। तत्रापि चैत्यं स्थापितमभूत्। अद्यापि च तच्चूडाप्रतिग्रहणमिति ज्ञायते॥

पुनरपि बोधिसत्त्वस्यैतदभूत्—कथं हि नाम प्रव्रज्या च काशिकानि वस्त्राणि। [1]सचेद्वनवासानुरूपाणि काषायाणि वस्त्राणि लभेयम्, शोभनं स्यात्। अथ शुद्धावासकायिकानां L 226 देवानामेतदभूत्—काषायैर्बोधिसत्त्वस्य कार्यमिति। तत्रैको देवपुत्रो दिव्यं रूपमन्तर्धाप्य लुब्धकरूपेण काषायवस्त्रप्रावृतो बोधिसत्त्वस्य पुरतोऽस्थात्। अथ बोधिसत्त्वस्तमेतदवोचत्—[1]सचेन्मे त्वं मार्षा काषायाणि वस्त्राणि दद्याः, इमानि तेऽहं काशिकानि वस्त्राणि दद्याम्। सोऽवोचत्—एतानि वस्त्राणि तव शोभन्ते। इमानि मम। बोधिसत्त्व आह—अहं त्वां याचामि। ततस्तेन लुब्धकरूपिणा[2] देवपुत्रेण बोधिसत्त्वाय काषायाणि वस्त्राणि दत्तान्यभूवन्। काशिकानि गृह्णीते स्म। अथ स देवपुत्रो गौरवजातस्तानि वस्त्राणि उभाभ्यां पाणिभ्यां[3] शिरसि कृत्वा तत एव देवलोकमगमत् तेषां पूजार्थम्। तच्छन्दकेन दृष्टमभूत्। तत्रापि चैत्यं स्थापितम्। अद्यापि तच्चैत्यं काषायग्रहणमित्येवं ज्ञायते॥

R 279 यदा च बोधिसत्त्वेन चूडां छित्त्वा काषायाणि वस्त्राणि प्रावृतानि, तस्मिन् समये देवपुत्रशतसहस्रा हृष्टास्तुष्टा उदग्रा आत्तमनसः परमप्रमुदिताः प्रीतिसौमनस्यजाता हीहीकारकिलिकिलाप्रक्ष्वेडितानिर्नादनिर्घोषशब्दमकार्षुः[4][5]। सिद्धार्थो भो मार्षाः कुमारः प्रव्रजितः। सोऽयमनुत्तरां सम्यक्संबोधिमभिसंबुध्य धर्मचक्रं प्रवर्तयिष्यति। असंख्येयाञ्जातिधर्मणः[6] सत्त्वान् जात्या परिमोचयिष्यति। यावज्जराव्याधिमरणशोकपरिदेवदुःखदौर्मनस्योपायासेभ्यः परिमोच्य L 227 संसारसागरात् पारमुत्तार्यानुत्तरे क्षेमेऽभयेऽशोके निरुपद्रवे शिवे विरजसेऽमृते[7] धर्मधातौ प्रतिष्ठापयिष्यतीति। स च शब्दः शब्दपरंपरया यावदकनिष्ठभवनमभ्युद्गतोऽभूत्॥

ततोऽन्तःपुरिकाभिः कुमारमपश्यन्तीभिः ग्रैष्मिकवार्षिकहैमन्तिकेषु प्रासादेष्वासनेषु च गृहेषु परिमार्गमाणा यदा न पश्यन्ति स्म, तदा एकीभूताभिः कुररीभिरिवोत्क्रुष्टमभूत्। तत्र काश्चित्स्त्रियः परमशोकार्ता हा तातेति क्रन्दन्ति स्म। काश्चिद्भ्रातः काश्चिद्भर्त इति क्रन्दन्ति स्म। काश्चिद्धा नाथेति क्रन्दन्ति स्म। काश्चिद्धा स्वामिन्निति। काश्चिन्नानाप्रियवचनप्रलापैः, काश्चिन्नानाकायपरिसर्पिकया रुदन्ति स्म। काश्चिच्छीर्षोपकर्षिकया[8], काश्चिदन्योन्यमुखावलोकितया रुदन्ति स्म। काश्चिच्चक्षुःपरिवर्तिकया, काश्चित्स्ववदनानि वस्त्रैरुच्छाद्य[9] रुदन्ति स्म। काश्चिदूरू पाणिभिः R 280 प्रस्फोटयन्त्यः, काश्चिद्धृदय पाणिभिस्ताडयन्त्यः, काश्चिद्बाहून् पाणिभिः प्रस्फोटयन्त्यः, काश्चिच्छिरांसि, काश्चिच्छिरः पांशुभिरवकिरन्त्यो रुदन्ति स्म। काश्चिद्विक्षिप्तकेश्यः, काश्चित्केशं विलुञ्चन्त्यः, काश्चिदूर्ध्वबाहवः उच्चैरुत्क्रोशन्ति स्म। काश्चिन्मृग्य इव दिग्धविद्धाः सहसा प्रधावन्त्यो

१ R om. सचेत्. २ R °रूपेण for °रूपिणा. ३ R om. पाणिभ्यां. ४ R °निर्नादित° for निर्नाद. ५ R शब्दान् for शब्दम्. ६ R जातिधर्मान् for °धर्मणः. ७ R विरजस्के. ८ R शिरोपकर्षया for शीर्षोपकर्षिकया. ९ R आच्छाद्य for उच्छाद्य.

रुदन्ति स्म । काश्चिन्मारुतकम्पिता इव कदल्यः प्रविकम्प्यमाना[1] रुदन्ति स्म । काश्चिद्धरणीतले विनिपतिताः किंचित्प्राणाः, काश्चिज्जालोत्क्षिप्तमत्स्या इव पृथिव्यां परिवर्त्यमाना रुदन्ति स्म । काश्चिन्मूलछिन्ना इव वृक्षाः सहसा धरणीतले निपत्य रुदन्ति स्म ॥

तं च शब्दं राजा श्रुत्वा शाक्यानामन्त्रयते स्म – किमेतदुच्चैरन्तःपुरे शब्दः श्रूयते ? शाक्या विज्ञाय कथयन्ति स्म – कुमारः किल महाराज अन्तःपुरे न दृश्यते । राजा आह – क्षिप्रं L 228 नगरद्वाराणि पिथयत । कुमारमभ्यन्तरे मृगयामः । ते सान्तर्बहिर्मृगयन्ते स्म । सान्तर्बहिर्मृगयमाना न पश्यन्ति स्म ॥

महाप्रजापत्यपि गौतमी परिदेवमाना महीतले परिवर्तते स्म । राजानं शुद्धोदनमेवमाह – क्षिप्रं मां महाराज पुत्रेण समङ्गिनीं[2] कुरुष्वेति ॥

ततो राजा चतुर्दिशमश्वदूतान्[3] प्रेषयति स्म । गच्छत, यावत्कुमारं न पश्यथ, तावन्मा निवर्तयथ ॥

नैमित्तिकैर्वैपञ्चिकैश्च व्याकृतमभूत् – मङ्गलद्वारेण बोधिसत्त्वोऽभिनिष्क्रमिष्यतीति । ते R 281 मङ्गलद्वारेण गच्छन्तः पश्यन्ति स्म अन्तरापथि पुष्पवर्षं प्रपतितम् । तेषामेतदभूत् – अनेन पथा कुमारोऽभिनिर्गत इति ॥

ते स्वल्पमन्तरं गत्वा तं देवपुत्रं पश्यन्ति स्म बोधिसत्त्वस्य काशिकवस्त्राणि शिरसि कृत्वा आगच्छन्तम् । तेषामेतदभूत् – इमानि खलु कुमारस्य काशिकवस्त्राणि । मा खल्वनेनैषां वस्त्राणामर्थे कुमारो जीविताद्व्यपरोपितः स्यात् । गृह्णीतैनमिति । भूयः पश्यन्ति स्म । तस्य पृष्ठतश्छन्दकं कण्ठकमाभरणानि चादायागच्छन्तम् । ततस्ते परस्परमूचुः – मा[4] तावद्भोः साहसं मा कार्ष्ट[5] । एष छन्दकोऽभ्यागच्छति कण्ठकमादाय, यावदेनं प्रक्ष्यामः ॥

ते छन्दकं परिपृच्छन्ति स्म – हे छन्दक, मा खल्वनेनैव पुरुषेण काशिकानां वस्त्राणामर्थाय[6] कुमारो जीविताद्व्यपरोपितः स्यात् । छन्दक आह – न ह्येतत् । अपि तु अनेन कुमाराय काषायाणि L 229 वस्त्राणि दत्तानि । कुमारेण चास्यैतानि काशिकानि वस्त्राणि दत्तानि । अथ स देवपुत्रस्तानि R 282 वस्त्राण्युभाभ्यां पाणिभ्यां शिरसि कृत्वा तत एव देवलोकमगमत् तेषां पूजार्थम् ॥

एवं[7] च ते भूयश्छन्दकं परिपृच्छन्ति स्म – तत्किं मन्यसे छन्दक गच्छामो वयम् ? शक्यः कुमारः प्रतिनिवर्तयितुम् ? स आह – मा खलु । अनिवर्त्यः कुमारो दृढवीर्यपराक्रमः । एवं च तेनोक्तम् – न तावदहं पुनरपि कपिलवस्तुमहानगरं प्रवेक्ष्यामि, यावन्मे नानुत्तरां[8] सम्यक्संबोधिमभिसंबुध्येति । यथा च कुमारेणोक्तं तथैव तद्भविष्यति । तत्कस्मात् ? अनिवर्त्यः कुमारो दृढवीर्यपराक्रमः ॥

ततश्छन्दकः कण्ठकमाभरणानि चादायान्तःपुरं प्राविक्षत् । ततस्तान्याभरणानि चिरेण कालेन भद्रिकस्य शाक्यकुमारस्य महानाम्नोऽनिरुद्धस्य चावध्यन्त[9] स्म । तानि महानारायण-

---

१ R प्रविकम्पमानाः. २ R सङ्गिनीं for समङ्गिनीं. ३ R अश्वरोहदूतान् for अश्वदूतान्. ४ R om. मा. ५ R कार्षीः for कार्ष्ट. ६ R अर्थे for अर्थाय. ७ R om. एवं च. ८ R नानुत्तरा सम्यक्सं बोधि रभिसंबोध्येति. ९ R चाबाधन्ते for चावध्यन्ते.

संघटनकार्यार्थमन्ये[1] नारायणसंहननेना[2] न शक्नुवन्ति स्म धारयितुम्। यदा न कश्चित्तानि धारयितुं शक्नोति स्म, तदा महाप्रजापत्या गौतम्या चिन्तितमभूत्–यावदहमिमान्याभरणानि पश्यामि,
R 283 तावन्मम हृदये शोको भविष्यति। यन्न्वहमिमान्याभरणानि[3] पुष्करिण्यां प्रक्षिपेयमिति। ततो महाप्रजापती गौतमी तान्याभरणानि पुष्करिण्यां प्रक्षिपति स्म। अद्यापि सा आभरणपुष्करिणीत्येवं संज्ञायते॥

तत्रेदमुच्यते–

निष्क्रान्तु शूरो यद विदु बोधिसत्त्वो
नगरं विबुद्धं कपिलपुरं समग्रम्।
L 230 मन्यन्ति सर्वे शयनगतो कुमारो
अन्योन्य हृष्टाः प्रमुदित आलभन्ते॥ १०२॥
गोपा विबुद्धा तथ अपि इस्त्रिगारा[4]
शयनं निरीक्षी न[5] च दृशि बोधिसत्त्वम्।
उत्क्रोशु मुक्तो[6] नरपतिनो अगारे
हा वञ्चिताः स्मः कहि गतु बोधिसत्त्वो॥ १०३॥
राजा श्रुणित्वा धरणितले निरस्तो
उत्क्रोशु कृत्वा अहो मम एकपुत्रो।
सो स्तेमितो[7] ही जलघटसंप्रसिक्तो
आश्वासयन्ती[8] बहुशत शाकियानाम्॥ १०४॥
गोपा शयातो धरणितले निपत्य
R 284 केशां लुनाती अवशिरि भूषणानि।
अहो सुभाष्टं[9] मम पुरि नायकेना
सर्वप्रियेभिर्नचिरतु विप्रयोगः॥ १०५॥
रूपा सुरूपा विमलविचित्रिताङ्गा[10]
अच्छा विशुद्धा जगति प्रिया मनापा।
धन्या प्रशस्ता दिवि भुवि पूजनीया
क्व त्वं गतोऽसि मम शयि छोरयित्वा॥ १०६॥
न पास्यि[11] पानं न च मधु न प्रमादं
भूमौ शयिष्ये जटमकुटं धरिष्ये।
स्नानं जहित्वा व्रततप आचरिष्ये
यावन्न द्रक्ष्ये गुणधरु बोधिसत्त्वम्॥ १०७॥

१ R °कायस्यार्थम् for °कायार्थम्. २ R °संघतना for °संहनना. ३ R नन्वहम् for यन्न्वहम्. ४ R इस्त्रिगारे for °गारा. ५ R नवदर्शि for न च दृशि. ६ R मुक्त्वा for मुक्तो. ७ R स्तोमितो for स्तेमितो. ८ R आश्वासयितो for °सयन्ती. ९ R भ्रष्टं for सुभाष्टं. १० R सुविमलचित्रिताङ्गा for विमलविचित्रि°. ११ R पास्ये for पास्यि.

उद्यान सर्वे अफ[1]ल अपत्रपुष्पा L 231
हारा विशुद्धा तमरजपांशुतुल्याः ।
वेश्मं न शोभी अटवि पुरं प्रकाशं
यत्तेन त्यक्तं नरवरपुंगवेन ॥ १०८ ॥
हा गीतवाद्याः सुमधुर मञ्जुघोषाः
हा इङ्गिगारा विगलित भूषणाभिः ।
हा हेमजालैः परिस्फुटमन्तरिक्षं R 285
न भूयु द्रक्ष्ये गुणधरविप्रहीणा ॥ १०९ ॥
मातृस्वसा चा परमसुकृच्छ्रप्राप्ता
आश्वासयाति म रुदेहि[2] शाक्यकन्ये ।
पूर्वे च उक्तं नरवर[3]पुंगवेन
कर्तास्मि लोके जरमरणात्प्रमोक्षम् ॥ ११० ॥
सो चा महर्षी कुशलसहस्र चीर्णः
षड् योजनानि प्रतिगतु रात्रिशेषे ।
छन्दस्य देती हयवरु भूषणानि
छन्दा गृहीत्वा कपिलपुरं प्रयाहि ॥ १११ ॥
मातापितणां मम वचनेन पृच्छे
गतः कुमारो न च पुन शोचयेथा ।
बुद्धित्व बोधिं पुनरिह[4]मागमिष्ये
धर्मं श्रुणित्वा भविष्यथ शान्तचित्ताः ॥ ११२ ॥
छन्दो रुदन्तो[5] प्रतिभणि नायकस्य
न मेऽस्ति शक्तिर्बल[6]त पराक्रमो वा ।
हनेयु मह्यं नरवरज्ञातिसंघाः L 232
छन्दा क्व नीतो गुणधरु बोधिसत्त्वो ॥ ११३ ॥
मा ताँहि[7] छन्दा प्रतिभणि बोधिसत्त्वो R 286
तुष्टा भवित्वा अपि मम ज्ञातिसंघाः ।
शार्स्तारसंज्ञा[8] त्वयि सद भाविष्यन्ति
प्रेमेण मह्यं त्वयमपि[9] वर्तिष्यन्ते ॥ ११४ ॥
छन्दो गृहीत्वा हयवरु भूषणानि
उद्यानप्राप्तो नरवरपुंगवस्य ।

---

१ R अफलपत्र॰ for अफल अपत्र॰. २ R रुद for रुदहि. ३ R om. ॰वर॰. ४ R पुनरहम् for पुनरिह॰. ५ R रुदित्वा for रुदन्तो. ६ R बलत for बल. ७ R त्राहि for ताहि. ८ R शास्ता रसज्ञा for शास्तारसंज्ञा. ९ R त्वयि नो विवर्ति for त्वयमपि वर्ति॰.

उद्यानपालः प्रमुदितु वेगजातो
आनन्दशब्दं प्रतिभणि शाकियानाम् ॥ ११५ ॥
अयं कुमारो हयवरु छन्दकश्च
उद्यानप्राप्तो न च पुन शोचितव्यो ।
राजा श्रुणित्वा परिवृतु शाकियेभिः
उद्यानप्राप्तो प्रमुदितु वेगजातो ॥ ११६ ॥
गोपा विदित्वा दृढमति बोधिसत्त्वं
नो चापि हर्षी न च गिर श्रद्दधाति ।
अस्थानमेतद्विनिगतु यत्कुमारो
अप्राप्य बोधिं पुनरिह आगमेया ॥ ११७ ॥
दृष्ट्वा तु राजा हयवरु छन्दकं च
R 287 उत्क्रोशु कृत्वा धरणितले निरस्तो ।
हा मह्य पुत्रा सुकुशलगीतवाद्या
क्व त्वं गतोऽसि विजहिय सर्वराज्यम् ॥ ११८ ॥
L 233 साधू भणाहि वचन ममेह छन्दा
किं वा प्रयोगः क्व[1] च गतु बोधिसत्त्वः ।
केनाथ नीतो विवरित केन द्वारा
पूजा च तस्या कथ कृत देवसंघैः ॥ ११९ ॥
छन्दो भणाती शृणु मम पार्थिवेन्द्रा
रात्रौ प्रसुप्ते नगरि[2] सबालवृद्धे ।
सो मञ्जुघोषो मम भणि बोधिसत्त्वो
छन्दा ददाहि मम लघु अश्वराजम् ॥ १२० ॥
सो बोधयामि नरगणि[3] नारिसंघं
सुप्ता प्रसुप्ता न च गिर ते श्रुणन्ति ।
सो रोदमानो ददि अहु अश्वराजं
हन्त व्रजाही हितकर येन कामम् ॥ १२१ ॥
शक्रेण द्वारा विवरित यन्त्रयुक्ताः
पालाश्चतस्रो हयचरणे शिलिष्टाः[4] ।
R 288 आरूढि[5] शूरे प्रचलित त्रिसहस्राः
मार्गो नभेऽस्मिन् सुविपुल येन क्रान्तो ॥ १२२ ॥

---

१ R को गन्तु for क्व च गतु. २ R नगरेषु बाल° for नगरि सबाल°. ३ R नरगणनारि for नरगणि नारि°. ४ R विश्लिष्य for शिलिष्टाः. ५ R आरूढ शूरः for आरूढि शूरे.

आभा प्रमुक्ता विहततमोन्धकारा
पुष्पा पर्तिसू[1] तुरियशता रणिषू।
देवाः स्तविंसू तथपि हि चाप्सराणि
नभसा प्रयातो परिवृतु देवसंघैः ॥ १२३ ॥
छन्दो गृहीत्वा हयवरु भूषणानि
अन्तःपुरे सो उपगतु रोदमानो।
दृष्ट्वा तु गोपा हयवरु छन्दकं च L 234
संमूर्छयित्वा धरणितले निरस्ता ॥ १२४ ॥
उद्युक्त सर्वा[2] सुविपुल नारिसंघाः[3]
वारिं गृहीत्वा स्नपयिषु शाक्यकन्याम्।
मा[4] हैव कालं करिष्यति शोकप्राप्ता
द्वाभ्यां प्रियाभ्यां बहु भवि विप्रयोगो ॥ १२५ ॥
स्थामं जनित्वा सुदुःखित शाक्यकन्या
कण्ठे[5]ऽवलम्ब्या हयवरअश्वराजे।
अनुस्मरित्वा पुरिमक[6] कामक्रीडां
नाना[7]प्रलापी प्रलपति शोकप्राप्ता ॥ १२६ ॥ R 289
हा मह्य प्रीतिजनना हा मम नरपुंगवा विमलचन्द्रमुखा।
हा मम सुरूपरूपा हा मम वरलक्षणा विमलतेजधरा ॥ १२७ ॥
हा मम अनिन्दिताङ्गा सुजात अनुपूर्वउद्गता असमा।
हा मम गुणाग्रधारिं नरमरुभिः पूजिता परमकारुणिका ॥ १२८ ॥
हा मम बलोपपेता नरायणस्थामवन्निहतशत्रुगणा।
हा मम सुमञ्जघोषा कलविङ्करुतस्वरा मधुरब्रह्मरुता ॥ १२९ ॥
हा मम अनन्तकीर्ते शतपुण्यसमुद्गता विमलपुण्यधरा।
हा मम अनन्तवर्णा गुणगणप्रतिमण्डिता ऋषिगणप्रीतिकरा ॥ १३० ॥
हा मम सुजातजाता लुम्बिनिवन उत्तमे भ्रमरगीतरुते।
हा मम विघुष्टशब्दा दिवि भुवि अभिपूजिता विपुलज्ञानद्रुमा ॥ १३१ ॥
हा मम रसारसाग्रा बिम्बोष्ठा कमललोचना कनक[8]निभा। R 290
हा मम सुशुद्ध[9]दन्ता गोक्षीरतुषारसंनिभसहितदन्ता ॥ १३२ ॥
हा मम सुनास सुभ्रू[10] ऊर्णाभ्रु मुखान्तरे स्थिता विमला[11]। L 235
हा मम सुवृत्तस्कन्धा चापोदर एणेयजङ्घवृत्तकटी ॥ १३३ ॥

---

१ R पतितः for पर्तिसू. २ R सर्वो for सर्वा. ३ R नारिसंघः. ४ R आहैव for मा हैव. ५ R कण्ठे बलव्याहयवराश्व अश्वराजं for the line. ६ R पुरि मूक for पुरिमक. ७ R नानाप्रकारां for °प्रलापी. ८ R कनकवर्णनिभा for कनकनिभा. ९ R शुद्ध° for सुशुद्ध°. १० R om. सुभ्रू. ११ R तेजविमला for विमला.

हा मम गजहस्तोरू[1] करचरणविशुद्धशोभना ताम्रनखा ।
इति तस्य भूषणानि पुण्येहि कृतानि पार्थिवे प्रीतिकरा ॥ १३४ ॥
हा मह्य गीतवाद्या वरपुष्पविलेपना शुभऋतुप्रवरे ।
हा मह्य पुष्पगन्धा अन्तःपुरि गीतवादितैर्हर्षकरा ॥ १३५ ॥
हा कण्ठका सुजाता मम भर्तु सहायकस्त्वया क्व नीतो ।
हा छन्दका निकरुणा न बोधयसि गच्छमानके नरवरिष्ठे ॥ १३६ ॥
गच्छत्ययं हितकरो एका गिर तस्मिन्नन्तरि न भसि[2] कस्मात् ।
इतु अद्य पुरवरातो गच्छति नरदम्यसारथिः कारुणिकः ॥ १३७ ॥
कथ वा गतो हितकरो केन च निष्क्रमितो इतु स राजकुलात् ।
कतमां दिशामनुगतो धन्या वनगुल्मदेवता यास्य[3] सखी ॥ १३८ ॥
R 291 अतिदुःख मह्य छन्दा निधिदर्शिय[4] नेत्रउद्धृता चक्षुददा ।
सर्वैर्जनैश्च छन्दा मातापितृनित्यवर्णितो[5] पूजनियाः ॥ १३९ ॥
तानपि जहित्व निर्गतु किं पुनरिम इस्त्रिकामरतिम् ।
हा धिक् प्रियैर्वियोगो नटरङ्गस्वभावसंनिभा अनित्या ॥ १४० ॥
संज्ञाग्रहेण बाला दृष्टिविपर्यासनिश्रिता जन्मच्युति ।
प्रागेव तेन भणितं नास्ति जरामरणसंस्कृते काश्चि सखा ॥ १४१ ॥
परिपूर्यतोऽस्य आशा स्पृशतू वरबोधिमुत्तमां द्रुमवरिष्ठे ।
बुद्धित्व बोधिविरजां पुनरपि एतू[6] इहाँ[7] पुरवरे अस्मिन् ॥ १४२ ॥

छन्दकः परमदीनमानसो
गोपिकाय वचनं श्रुणित्वना[8] ।
साश्रुकण्ठ गिर संप्रभाषते
साधु गोपि निशृणोहि मे वचः ॥ १४३ ॥
L 236 रात्रिये रहसि यामि मध्यमे
सर्वनारिगणि संप्रसुप्तके ।
सो तदा च शतपुण्यउद्गतो
आलपेति मम देहि कण्ठकम् ॥ १४४ ॥
तं निशाम्य वचनं तदन्तरं
तुभ्य प्रेक्षमि शयानि सुप्तिकाम् ।
उच्चघोषु अहु तत्र मुञ्चमी[9]
उत्थि गोपि अयु याति ते प्रियो ॥ १४५ ॥

---

१ R गजदन्तीहस्तोरू for गजहस्तोरू. २ R भणसि for भसि. ३ R याऽस्य समुखी for यास्य सखी. ४ R निधिदर्शय for °दर्शिय. ५ R °वर्तिता for °वर्णिता. ६ R एति for एतू. ७ R om. इहा. ८ R श्रुणित्वैनां for श्रुणित्वना. ९ R [illegible] for मुञ्चमी.

देवता वचनु तं निरोधयि
एक इञ्जि नैपि[1] काचि बुध्यते । R 292
रोदमान[2] समलंकरित्वना
अश्वराजु ददमी नरोत्तमे ॥ १४६ ॥
कण्ठको हिषति[3] उग्रतेजस्वी
क्रोशमात्रु स्वरु तस्य गच्छती ।
नो च कश्चि शृणुते पुरोत्तमे
देवताभि ओस्वापनं कृतम् ॥ १४७ ॥
स्वर्णरूप्यमणिकोटिता मही
कण्ठकस्य चरणैः पराहता ।
सा[4] रणी मधुरभीष्मशोभना[5]
नो च केचि शृणुवन्ति मानुषाः ॥ १४८ ॥
पुष्ययुक्तु अभु तस्मि अन्तरे
चन्द्रज्योतिष नभे प्रतिस्थिता ।
देवकोटि गगने कृताञ्जली
ओनमन्ति[6] शिरसाभिवन्दिषू[7] ॥ १४९ ॥
यक्षराक्षसगणैरुपस्थिता
लोकपाल चतुरो महर्द्धिकाः ।
कण्ठकस्य चरणां करे न्यसी
पद्मकेशरविशुद्धनिर्मलम् ॥ १५० ॥
सो च पुण्यशततेजउद्गतो
आरुही कुमुदवर्णिकोपमम् ।
षड्विकार धरणी प्रकम्पिता
बुद्धक्षेत्र स्फुट[8] आभनिर्मला ॥ १५१ ॥
शक्र देवगुरुः शचीपतिः
स्वाम द्वारे[9] विवरी तदन्तरे ।
देवकोटिनयुतैः पुरस्कृतो R 293
सो व्रजी अमरनागपूजितो ॥ १५२ ॥
संज्ञमात्र इह जाति कण्ठको
लोकनाथु वहती नभोऽन्तरे ।

---

१ R न कापि विबुध्यते for नपि काचि बुध्यते. २ R चोद्यमान for रोदमान. ३ R हि पति for हिषति. ४ R सो for सा. ५ R °शोभनो for °शोभना. ६ R ओनमन्त for °मन्ति. ७ R °भिवदिषु for °भिवन्दिषू. ८ R स्पुटाभ for स्फुट आभ. ९ R द्वाराश्च for द्वार.

देवदानवगणा सइन्द्रिका:
ये वहन्ति सुगतस्य गच्छत: ।। १५३ ।।

अप्सरा कुशलगीतवादिते
बोधिसत्त्वगुणभाषमानिका: ।
कण्ठकस्य बलु ते ददन्तिका:
मुञ्चि घोषु मधुरं मनोरमम् ।। १५४ ।।

L 237 कण्ठका[1] वहहि लोकनायकं
शीघ्र शीघ्र म जनेहि खेदताम् ।
नास्ति मे भयमपायदुर्गतिं
लोकनाथमभिधारयित्वना ।। १५५ ।।

एकमेक अभिनन्दते सुरो
वाहनं[2] स्मि अहु लोकनायके ।
नो च किंचिदपि[3] देशु विद्यते
देवकोटिचरणैर्न मर्दितम् ।। १५६ ।।

पश्य कण्ठक नभोन्तरे इमं
मार्गु संस्थितु विचित्रशोभनम् ।
रत्नवेदिकविचित्रमण्डितं
दिव्यसारवरगन्धधूपितम् ।। १५७ ।।

एन कण्ठक शुभेन कर्मणा
त्रायत्रिंशभवने सुनिर्मितो[4] ।
अप्सरै परिवृत: पुरस्कृतो
दिव्यकामरतिभी रमिष्यसे ।। १५८ ।।

साधु गोपि म[5] खु भूयु रोदही
तुष्ट भोहि परमप्रहर्षिता ।
द्रक्षसे नचिरतो नरोत्तमं
बोधिप्राप्तममरै: पुरस्कृतम् ।। १५९ ।।

R 294 ये नरा: सुकृतकर्मकारका:
ते न गोपि सद रोदितव्यका: ।
सो च पुण्यशततेजउद्गतो
हर्षितव्य न स रोदितव्यक: ।। १६० ।।

---

१ R कण्ठको वहति for कण्ठका वहहि. २ R वाहनस्मि अह for वाहनं स्मि अहु. ३ R किंचिह for किंचिदपि. ४ R सुनिर्मिते for °तो. ५ R मा खलु for म खु.

सप्तरात्र भणभानु गोपिके
    सा वियूह नपि शक्य क्षेपितुम्[1] ।
यो[2] वियूह अभु तत्र पार्थिवे
    निष्क्रमन्ति नरदेवपूजिते ॥ १६१ ॥
लाभे[3] तुभ्य परमा अचिन्तिया
    यं त्युपस्थितु[4] जगे हितंकरो ।
मह्य संज्ञि स्वकमेव वर्तते
    त्वं हि भेष्यसि यथा नरोत्तमः ॥ १६२ ॥ इति ॥

॥ इति श्रीललितविस्तरेऽभिनिष्क्रमणपरिवर्तो नाम पञ्चदशमोऽध्यायः ॥

---

१ R ज्ञेपितुम् for क्षेपितुम्. २ R यो for या. ३ R लोभ for लाभ. ४ R यत्त्युपस्थितु for यं त्युप°.

## १६

## बिम्बिसारोपसंक्रमणपरिवर्तः षोडशः ।

एवं खलु भिक्षवश्छन्दको बोधिसत्त्वाधिस्थानेन राज्ञः शुद्धोदनस्य गोपायाः शाक्यकन्यायाश्च सर्वस्य चान्तःपुरस्य सर्वस्य च शाक्यगणस्य शोकविनोद[1]कथामकार्षीत् ॥

L 238 इति हि भिक्षवो बोधिसत्त्वो लुब्धकरूपाय देवपुत्राय काशिकानि वस्त्राणि दत्त्वा तस्य सकाशात्काषायानि वस्त्राणि गृहीत्वा स्वयमेव प्रवज्यां लोकानुवर्तनामुपादाय सत्त्वानुकम्पायै सत्त्वपरिपाचनार्थम् ॥

R 295 अथ बोधिसत्त्वो येनैव शाक्या ब्राह्मण्या आश्रमस्तेनोपसंक्रामत् । सा बोधिसत्त्वं वासेन भक्तेन चोपनिमन्त्रयते स्म । ततो बोधिसत्त्वः पद्माया ब्राह्मण्या आश्रमं गच्छति स्म । तयापि बोधिसत्त्वो वासेन भक्तेन चोपनिमन्त्रितोऽभूत् ॥

ततो रैवतस्य ब्रह्मर्षेराश्रममगमत् । असावपि बोधिसत्त्वं तथैवोपनिमन्त्रयते स्म । तथैव राजकोऽपि दतृमदण्डिकपुत्रो बोधिसत्त्वमुपनिमन्त्रयते स्म ॥

इति हि भिक्षवो बोधिसत्त्वोऽनुपूर्वेण वैशालीं महानगरीमनुप्राप्तोऽभूत् ॥

तेन खलु पुनः समयेनाराडः कालापो[2] वैशालीमुपनिसृत्य प्रतिवसति स्म महता श्रावकसंघेन सार्धं त्रिभिः शिष्यशतैः । स शिष्येभ्य आकिंचन्यायतनसहव्रतायै धर्मं देशयति स्म । स बोधिसत्त्वं दूरत एवागच्छन्तं दृष्ट्वा आश्चर्यप्राप्तः शिष्यानामन्त्रयते स्म — पश्यत पश्यत भो रूपमस्येति। तेऽब्रुवन् — एवं ह्येतत्[3]पश्यामः । एनमतिविस्मयनीयम् ॥

ततोऽहं भिक्षवो येनाराडः कालापस्तेनोपसंक्रम्याराड कालापमेतदवोचत् — चरेयमहं भो आराडे कालापे ब्रह्मचर्यम् । सोऽवोचत् — चर भो गौतम तथारूपेण धर्माख्याने यस्मिन् श्राद्धः कुलपुत्रोऽल्पकृच्छ्रेणाज्ञामाराधयति ॥

L 239 तस्य मे भिक्षव एतदभूत् — अस्ति मे छन्दोऽस्ति वीर्यमस्ति स्मृतिरस्ति समाधिरस्ति प्रज्ञा,
R 296 यन्त्वहमेकोऽप्रमत्त आतापी व्यपकृष्टो विहरेयं तस्यैव धर्मस्य प्राप्तये साक्षात्क्रियायै ॥

अथ खल्वहं भिक्षवो एकोऽप्रमत्त आतापी व्यपकृष्टो विहरन्नल्पकृच्छ्रेणैवं तं धर्ममध्यव[4]गच्छन् साक्षादकार्षम् ॥

अथ खल्वहं भिक्षवो येनाराडः कालापस्तेनोपसंक्रम्यैतदवोचत् - एतावद्भो त्वया आराड धर्मोऽधिगतः साक्षात्कृतः? सोऽवोचत् — एवमेतद्भो गौतम । तमहमवोचत् — मयापि भो एष धर्मः साक्षात्कृतोऽधिगतः । सोऽवोचत् - तेन हि भो गौतम यदहं धर्मं जानामि, भवानपि तं जानाति, यं भवान् जानाति, अहमपि तं जानामि । तेन ह्यावामुभावपीमं शिष्यगणं परिहरावः ॥

इति हि भिक्षव आराडः कालापः परमया पूजया मां पूजयति स्म । अन्तेवासिषु च मां समानार्थतया स्थापयति स्म ॥

---

१ R °विनोदनकथा° for °विनोदकथा°. २ R कालामो for कालापो almost throughout.
३ R ह्येतं for ह्येतत्. ४ R अभ्यगच्छत् for अध्यवगच्छन्.

तस्य मे भिक्षव एतदभूत् — अयं खल्वाराडस्य धर्मो न [1]नैर्याणिको न निर्याति, तत्कतरस्य सम्यग्दुःखक्षयाय ? यन्न्वहमत उत्तरि पर्येषमाणश्चरेयम् ॥

अथ खल्वहं भिक्षवो यथाभिरामं वैशाल्यां विहृत्य मगधेषु च प्रक्रान्तोऽभूत् । सोऽहं मगधेषु चर्यां चरन् येन मागधकानां राजगृहं नगरं तदनुसृतो येन च पाण्डवः पर्वतराजस्तेनोप- R 297
संक्रान्तोऽभूवम् । तत्राहं पाण्डवे पर्वतराजपार्श्वे व्याहार्षमेकाक्यद्वितीयोऽसहायोऽनेकैर्देवकोटि-नयुतशतसहस्रैः संरक्षितः ॥

ततोऽहं [2]कल्यमेव संनिवास्य पात्रचीवरमादाय तपो[3]दद्वारेण राजगृहं महानगरं पिण्डाय L 240
प्राविक्षत् प्रासादिकेनाभिक्रान्तेन प्रतिक्रान्तेन व्यवलोकितेन संमिञ्जितेन प्रसारितेन प्रासादिकेन संघाटीपटपात्रचीवरधारणेनाविक्षिप्तैरिन्द्रियैरबहिर्गतेन मानसेन निर्मितवत्तैलपात्रधरवद्युगमात्रं पश्यन् । तत्र मां राजगृहका मनुष्या दृष्ट्वा विस्मिता अभूवन् — किं स्विदयं ब्रह्मा भविष्यति शक्रो देवानामिन्द्र [4]आहोस्विद्वैश्रवणो आहोस्वित्किंचिद्गिरिदैवतम् ॥

तत्रेदमुच्यते —

अथ विमलधरो ह्यनन्त[5]तेजो
स्वयमिह प्रव्रजियान बोधिसत्त्वः ।
शान्तमनु दान्त ईर्यवन्तो
विहरति पाण्डवशैलराजपार्श्वे ॥ १ ॥

रजनि विगतु ज्ञात्व बोधिसत्त्वः
परमसुदर्शनियं निवासयित्वा ।
पात्र प्रतिगृहीय नीच[6]मानो R 298
प्रविशति राजगृहं सपिण्डपात्रम् ॥ २ ॥

कनकमिव सुधातुजातरूपं
क्व[7]चितु लक्षणत्रिंशता द्विभिश्च ।
नरगण तथ नारि प्रेक्षमाणो
न च भवते कँचि तृप्ति दर्शनेन ॥ ३ ॥

वीथि रचित रत्नवस्त्रधार्यै
अवशिरिया जनु याति पृष्ठतोऽस्य ।
को नु अयु अदृष्टपूर्वसत्त्वो
यस्य प्र[8]भाय पुरं विभाति सर्वम् ॥ ४ ॥

उपरि स्थिहिय नारिणां सहस्रा
तथरि[9]वं द्वारि तथैव वातयाने ।

१ R निर्याणिको for नैर्या°. २ R कल्पमेव. ३ R तप्तोद° for तपोद°. ४ L अहोस्वित् for आहोस्विद्. ५ R अनन्ततेजाः for °तेजो. ६ R स्थिरमानसेन for नीचमानो. ७ R क्वचित्तु for क्वचि. ८ प्रभा for प्रभाय. ९ R तथसि for तथरिवं.

रथ्य भरित गेहि शून्य[1] कृत्वा
नरवरु प्रेक्षिषु ते अनन्यकर्मा[2]: ॥ ५ ॥
न च भुयु क्रयविक्रयं करोन्ती[3]
न च पुन सौण्ड पिबन्ति मद्य[4]पानम् ।
R 299 न च गृहि न च वीथिये रमन्ते
पुरुषवरस्य निरीक्षमाण रूपम् ॥ ६ ॥
पुरुष त्वरितु[5] गच्छि राजगेहं
अवचिषु राज स बिम्बिसार तुष्टो ।
देव परम तुभ्य लब्ध लाभा
स्वयमिह ब्रह्म पुरे चराति पिण्डम् ॥ ७ ॥
L 241 केचि अवचि शक्र देवराजो
अपरि भणन्ति सुयाम देवपुत्रः ।
तर्थ[6] अपि संतुषितं व निर्मितश्च
अपरि भणन्ति सुनिर्मितेषु देवः ॥ ८ ॥
केचि पुन भणन्ति चन्द्रसूर्यौ
तथपि च राहु बलिश्च वेमचित्री ।
केचि पुन भणन्ति वाचमेवं
अयु सो पाण्डवशैलराजवासी ॥ ९ ॥
वचनमिमु श्रुणित्व पार्थिवोऽसौ
परमउदग्रमना स्थितो गवाक्षे ।
R 300 प्रेक्षति वरसत्त्व बोधिसत्त्वं
ज्वलतु शिरीय सुधातुकाञ्चनं वा ॥ १० ॥
पिण्ड ददिय राज बिम्बिसारः
पुरुषमवोचन्निरीक्ष क्व प्रयाती ।
दृष्ट्व गिरिवरं स गच्छमानो
अवचिषु देव गतः स शैलपार्श्वम् ॥ ११ ॥
रजनि विगतु[7] ज्ञात्व बिम्बिसारो
महत जनैः परिवारितो नरेन्द्रः ।
उपगमि पाण्डवशैलराजमूले
शिरिय ज्वलन्तु तमद्दशाति शैलम् ॥ १२ ॥

---

१ R गेहं शून for गेहि शून्य. २ R अनन्यकामा. ३ R करोति. ४ R om. मद्य°. ५ त्वरित्व गच्छित्व° for त्वरितु गच्छि. ६ R तथापि for तथ अपि. ७ R विगतु for विगँतु.

धरणि व्रजितु यानि ओरुहित्वा
परमसुगौरव प्रेक्षि बोधिसत्त्वम्।
मेरुरिव यथा ह्यकम्पमानो
न्यसिय तृणानि निषण्ण सोस्तिकेन[1] ॥ १३ ॥
शिरसि चरणि वन्दयित्व राजा
विविधकथां समुदाहरित्व वोचत्।
ददमि तव उपार्धु सर्वराज्याद्
रम इह कामगुणैरहं च पिण्डम् ॥ १४ ॥ R 301
प्रभणति गिरि बोधिसत्त्व श्लक्ष्णं
धरणिपते चिरमायु पालयस्व।
अहमपि प्रविजह्य राज्यमिष्टं
प्रव्रजितो निरपेक्षि शान्तिहेतोः ॥ १५ ॥
दहरु तरुणयौवनैरुपेतः
शुभतनुवर्णनिभोऽसि वेगप्राप्तः।
विपुल धन प्रतीच्छ नारिसंघं
इह मम राज्यि वसाहि भुङ्क्ष्व कामां ॥ १६ ॥
परमप्रमुदितोऽस्मि दर्शनात्ते
अवचिषु स मागधराज बोधिसत्त्वम्।
भवहि मम सहायु सर्वराज्यं
अह्नु तव दास्यि प्रभूत भुङ्क्ष्व कामां ॥ १७ ॥
मा च पुन वने वसाहि शून्ये
म भुयु तृणेषु वसाहि भूमिवासम्।
परमसुकुमारु तुभ्य कायो
इह मम राज्यि वसाहि भुङ्क्ष्व कामां ॥ १८ ॥ R 302
प्रभणति गिरि बोधिसत्त्व श्लक्ष्णं L 242
अकुटिल प्रेमणिया हितानुकम्पी।
स्वस्ति धरणिपाल तेऽस्तु नित्यं
न च अह्नु कामगुणेभिरर्थिकोऽस्मि ॥ १९ ॥
कामे[2] विषसमा अनन्तदोषा
नरकप्रपातन प्रेततिर्यग्योनौ।
विदुभि विगर्हित चाप्यनार्य कामा
जहित मया यथा पक्वखेटपिण्डम् ॥ २० ॥

---

१ स्वस्तिकेन for सोस्तिकेन. २ R कामे for कामे.

काम द्रुमफला यथा पतन्ती
यथमिव[1] अभ्रबलाहका व्रजन्ति ।
अध्रुव चपलगामि मारुतं वा
विकिरण सर्वशुभस्य वञ्चनीया ॥ २१ ॥
काम अलभमान दह्ययन्ते[2]
तथ अपि लब्ध न तृप्ति विन्दयन्ती ।
यद[3] पुन अवशस्य भक्षयन्ते
तद् महदुःख जनेन्ति घोर कामाः ॥ २२ ॥
R 303 काम धरणिपाल ये च दिव्या
तथ अपि मानुष काम ये प्रणीता ।
एकु नरु लभेत[4] सर्वकामां
न च सो तृप्ति लभेत भूयु एषन्[5] ॥ २३ ॥
ये तु धरणिपाल शान्तदान्ता
आर्य अनाश्रव धर्मपूर्णसंज्ञा ।
प्रज्ञविदुष तृप्त ते सुतृप्ता
न च पुन कामगुणेषु काचि तृप्तिः ॥ २४ ॥
काम धरणिपाल सेवमाना
पुरिम[6] न विद्यति कोटि संस्कृतस्य ।
लवणजल यथा हि नारु[7] पीत्वा
भुयु तृष्ण वर्धति काम सेवमाने ॥ २५ ॥
अपि च धरणिपाल पश्य कायं
अध्रुवमसारकु दुःखयन्त्रमेतत् ।
नवभि व्रणमुखैः सदा स्रवन्तं
R 304 न मम नराधिप कामछन्दरागः ॥ २६ ॥
अहमपि विपुलां विजह्य कामां
तथपि च इस्त्रिसहस्र दर्शनीयां ।
अनभिरतु भवेषु निर्गतोऽहं
परमशिवां वरबोधि प्राप्तुकामः ॥ २७ ॥

राजा आह[8] —

कतम दिशि[9] कुतो गतोऽसि भिक्षो
क च तव जन्म क ते पिता क माता ।

---

१ R यथा इव for यथमिव. २ R दह्यन्ते for दह्ययन्ते. ३ R यदा पुरे for यद पुन. ४ R लभेति for लभेत. ५ R एषः for एषन्. ६ R मनु न विद्याति for पुरिम न विद्यति. ७ R नरो for नारु. ८ R प्रह for आह. ९ R दिशं for दिशि.

क्षत्रिय अथ ब्राह्मणोऽथ राजा
परिकथ भिक्षु[1] यदी न भारसंज्ञा ॥ २८ ॥

बोधिसत्त्व आह –

श्रुतु ति धरणिपाल शाकियानां
कपिलपुरं परमं सुऋद्धिस्फीतम् । L 243
पितु मम शुद्धोदनेति नाम्ना
तनु अहु प्रव्रजितो गुणाभिलाषी ॥ २९ ॥

राजा आह –

साधु तव सुदृष्टदर्शनं ते
यनु[2] तव जन्म वयं पि तस्य शिष्याः ।
अपि च मम क्षमस्व आशयेना R 305
यमपि निमन्त्रितु कामवीतरागो ॥ ३० ॥

यदि त्वय अनुप्राप्तु भोति बोधिः
तद मम सेति भोति धर्मस्वामिम् ।
अपि च मम पुरा सुलब्ध लाभा
मम विजिते वससीह यत्स्वयंभो ॥ ३१ ॥

पुनरपि चरणानि वन्दयित्वा
कृत्व प्रदक्षिणु गौरवेण राजा ।
स्वकजनपरिवारितो नरेन्द्रः
पुनरपि राजगृहं अनुप्रविष्टः ॥ ३२ ॥
मगधपुरि प्रवेशि लोकनाथो
विहरिय शान्तमना यथाभिप्रायम् ।
अर्थु करिय[3] देवमानुषाणां
उपगमि तीरु निरञ्जना नरेन्द्रः ॥ ३३ ॥

॥ इति श्रीललितविस्तरे बिम्बिसारोपसंक्रमणपरिवर्तो नाम षोडशमोऽध्यायः ॥

---

१ R भिक्षुय दीनभार° for भिक्षु यदी न. २ R यत्तु for यनु. ३ R करिये for करिय.

## दुष्करचर्यापरिवर्तः सप्तदशः ।

R 306 तेन खलु पुनर्भिक्षवः समयेन रुद्रको नाम रामपुत्रो राजगृहं नाम महानगरमुपनिसृत्य विहरति स्म महता शिष्यगणेन सार्धं सप्तभिः शिष्यशतैः । स तेभ्यो नैवसंज्ञानासंज्ञायतनसहव्रतायै धर्मं देशयति स्म । अद्राक्षीत् खल्वपि भिक्षवो बोधिसत्त्वो रुद्रकं रामपुत्रं संघेगणिनं गणाचार्यं ज्ञातमभीप्सितं बहुजन[1]पूजितं पण्डित[2]संमतम् । दृष्ट्वा चास्यैतदभूत्—अयं खल्वपि रुद्रको रामपुत्रः संघे[3]गणी गणाचार्यः ज्ञातोऽभीप्सितो बहुजनपूजितः पण्डितसंमतः । सचेदहमस्यान्तिकमुपसंक्रम्य व्रततपमारभेयम्, नैष ममान्तिके विशिष्टसंज्ञो भवेन्नापि प्रत्यक्षज्ञानेन ज्ञातो भवेन्नापि संस्कृतानां साश्रवानां सोपादानानां ध्यानसमाधिसमापत्तीनां दोषो दत्तो भवेत् । यन्न्वहं तथा[4]रूपमुपायमुपसंदर्शयेयं येनैते च प्रत्यक्षा भवेयुः । ध्यानगोचराणां च समापत्त्या[5]रम्बणानां लौकिकसमाधीनाम[6]निःसरणता दर्शिता भवेत् । यन्न्वहं रुद्रकस्य रामपुत्रस्य सकाशमुपसंक्रम्य स्वसमाधिगुणविशेषोद्भावनार्थं शिष्यत्वमभ्यु[7]पगम्य संस्कृतसमाधीनामसारतामुपदर्शयेयमिति ॥

अथ खलु भिक्षवो बोधिसत्त्व इदमर्थवशमधिकृत्य येन रुद्रको रामपुत्रस्तेनोपसंक्रामत् ।
R 307 उपसंक्रम्य रुद्रकं रामपुत्रमेतदवोचत्—कस्ते मार्ष शास्ता, कस्य वा धर्मं देशितमाजानासि ?

इत्येवमुक्ते रुद्रको रामपुत्रो बोधिसत्त्वमेवमाह—न मे मार्ष कश्चिच्छास्ता । अपि तु खलु पुनः स्वयमेव मयेदं सम्यगधिगतमिति । बोधिसत्त्व आह—किं भवताधिगतम् ? आह—नैवसंज्ञानासंज्ञायतनसमापत्तेर्मार्गः । बोधिसत्त्व आह-लभेमहि वयं भवतः सकाशादववादानुशासनीयस्य समाधेर्मार्गम् ? आह—बाढमस्त्विति । यावद्दत्तोऽववादोऽभूत् ॥

ततो बोधिसत्त्व एकान्तं गत्वा पर्यङ्क[8]माभुज्योपविशति स्म । समनन्तरोपविष्टस्य च बोधिसत्त्वस्य पुण्यविशेषेण च ज्ञानविशेषेण च पूर्वसुचरितचर्याफलविशेषेण च सर्वसमाधिपरिचयविशेषेण च ध्यानप्रमुखानि सर्वाणि लौकिकानि लोकोत्तराणि समापत्तिशतान्यामुखी-
L 245 भवन्ति स्म साकाराणि सोद्दे[9]शानि यथापि तच्चित्तवशवर्तित्वात् । अथ च बोधिसत्त्वः स्मृतः संप्रजानन् उत्थायासनाद्येन रुद्रको रामपुत्रस्तेनोपसंक्रामत् । उपसंक्रम्य रुद्रकं रामपुत्रमेवमाह—अस्त्यन्योऽपि मार्ष कश्चिदुत्तरे नैवसंज्ञानासंज्ञायतनसमापत्तेर्मार्गः ? सोऽब्रवीत्—नास्तीति ॥

ततो बोधिसत्त्वस्यैतदभवत्—न खलु रुद्रकस्यैवास्ति श्रद्धा वीर्यं स्मृतिः प्रज्ञा ।
R 308 ममाप्यस्ति श्रद्धा वीर्यं स्मृतिः समाधिः प्रज्ञा ।

अथ बोधिसत्त्वो रुद्रकं रामपुत्रमेवमाह—मयाप्येष मार्ष धर्मोऽधिगतो यत्र त्वं निर्यातः । सोऽवोचत्—तेन ह्यागच्छ, त्वं चाहं चेमं गणं परिहराव इति । समानार्थे च बोधिसत्त्वं

---

१ R om. °जन°. २ R पण्डितजन° for पण्डित°. ३ R संघेगणीनं for °गणी. ४ R °रूपमुपादाय उपसं° for रूपमुपायमुप°. ५ R समापत्त्यालम्बनानां for °रम्बणानां. ६ R अनिःशरणदर्शित for अनिःसरणता दर्शिता. ७ R अभ्युद्गम्य for अभ्युपगम्य. ८ R आरुह्य for आभुज्य. ९ R सादेशानि for सोद्देशानि.

स्थापयति स्म आचार्यस्थाने च । बोधिसत्त्व आह — नैष मार्ष मार्गो निर्वृतये[1] न विरागाय न निरोधाय[2] नोपशमाय नाभिज्ञायै न संबोधये न श्रामणाय न ब्राह्मणाय न निर्वाणाय संवर्तते ॥

इति हि भिक्षवो बोधिसत्त्वो रुद्रकस्य रामपुत्रस्य सशिष्यस्यावर्जनीकृत्वा[3] यावदलमिति कृत्वा प्रक्रामत् — अलं ममानेनेति ॥

तेन खलु पुनः समयेन पञ्चका भद्रवर्गीया रुद्रके रामपुत्रे ब्रह्मचर्यं चरन्ति स्म । तेषामेतदभूत् — यस्य खलु वयमर्थाय दीर्घरात्रं घटामहे उद्युज्यामहे, न च शक्नुमोऽन्तं वा पर्यन्तं चाधिगन्तुम्, तच्छ्रमणेन गौतमेनाल्पकृच्छ्रेणाधिगन्तुं[4] साक्षात्कृतम्[5] । तच्चास्य न रोचते । तथा[6] चोत्तरि पर्येषते । निःसंशयमेष शास्ता लोके भविष्यति । यच्चैष साक्षात्करिष्यति, तदस्मभ्यं संविभक्ष्यतीति । एवं विमृष्य पञ्चका भद्रवर्गीया रुद्रकरामपुत्रसकाशादपक्रम्य बोधिसत्त्वमन्वबध्नन्[7] ॥

इति हि भिक्षवो बोधिसत्त्वो यथाभिप्रेतं राजगृहे विहृत्य मगधेषु चारिकां प्रक्रामत् L 246
सार्धं पञ्चकैर्भद्रवर्गीयैः ॥ R 309

तेन खलु पुनः समयेनान्तराच्च राजगृहस्य अन्तराच्च गयाया यो[8]ऽन्यतमो गण उत्सवं करोति स्म, तेन च गणेन बोधिसत्त्वोऽभिनिमन्त्रितोऽभूत् वासेन भक्तेन च सार्धं पञ्चकैर्भद्रवर्गीयैः ॥

अथ खलु भिक्षवो बोधिसत्त्वो मगधेषु चर्यां चरन् येन मागधकानां गया तामनुसृत्य तामनुप्राप्तोऽभूत् । तत्र खल्वपि भिक्षवो बोधिसत्त्वः प्रहाणार्थी विहरति स्म गयाशीर्षे पर्वते । तत्रास्य विहरतस्तिस्र उपमाः प्रतिभान्ति स्म अश्रुतपूर्वा अनभिज्ञातपूर्वाः[9] । कतमास्तिस्रः ? ये केचित्ते खल्वपि श्रमणब्राह्मणाः कामेभ्योऽनवकृष्टकाया विहरन्ति स्म । कामेभ्योऽनवकृष्टचित्ताश्च विहरन्ति स्म । यापि चैषां कामेषु नन्दिः कामेषु रागः कामेषु छन्दः कामेषु तृष्णा कामेषु पिपासा कामेषु[10] मूर्छा कामेषु परिदाहः[11] कामेष्वध्यवसानता, साप्यनुपशान्ता[12] । किं चापि ते आत्मोपक्रमिकां शरीरोपतापिकां[13] दुःखां तीव्रां खरां कटुकाममनापां वेदनां वेदयन्ते । अथ तर्हि अभव्या एव ते उत्तरिमनुष्यधर्मादलमार्यज्ञानदर्शनविशेषं[14] साक्षात्कर्तुम् । तद्यथापि नाम पुरुषोऽग्न्यर्थी ज्योतिर्गवेषी ज्योतिं पर्येषमाणः स आर्द्रं काष्ठमादाय आर्द्रां चोत्तरारणीमुदके प्रक्षिप्य मथ्नीयात्, अभव्योऽसावग्निमुत्पादयितुं तेजः प्रादुष्कर्तुम् । एवमेव य इमे श्रमणब्राह्मणाः कामेभ्योऽनवकृष्टकाया[15] अनवकृष्ट- R 310
चित्ताश्च विहरन्ति, याप्येषां कामेषु नन्दिः कामेषु रागः कामेषु छन्दः कामेषु तृष्णा कामेषु पिपासा कामेषु[16] मूर्छा कामेषु परिदाहः कामेष्वध्यवसानं[17] तदप्यनुपशान्तम्[18] । किं चापि ते आत्मोपक्रमिकां L 247
शरीरोपतापिकां दुःखां तीव्रां खरां कटुकां वेदनां वेदयन्ते । अथ तर्हि अभव्या एवोत्तरिमनुष्यधर्मादलमार्यज्ञानदर्शनविशेषं साक्षात्कर्तुम् । इयं बोधिसत्त्वस्य प्रथमा उपमा प्रतिभाति स्म ॥

---

१ R निर्विदे for निर्वृतये. २ R विरोधाय for नि°. ३ R आवर्जनीकृत्य. ४ R अधिगतं for अधिगन्तुं.
५ R om. साक्षात्कृतम् । तच्चास्य न रोचते. ६ R अथ for तथा. ७ R अबबन्ध for अन्वबध्नन्.
८ R om. यो. ९ R अविज्ञात° for अनभिज्ञात.° १० R om. कामेषु मूर्च्छा. ११ R परिदाहाः for °दाहः. १२ R सा व्यवशान्ता for साप्यनुप°. १३ R शरीरोपक्रमिकां for °पतापिकां. १४ R om. °दर्शन°.
१५ R °कायचित्ताश्च for °काया अनवकृष्टचित्ताश्च. १६ R om. कामेषु मूर्छा. १७ R अध्यवसानता for °सानं. १८ R उपशामितम् for अनुपशान्तम्.

भूयश्चास्यैतदभूत् — य इमे श्रमणब्राह्मणाः कामेभ्यो व्यपकृष्टकायचित्ता विहरन्ति, यापि तेषां कामेषु नन्दीति सर्वं कर्तव्यं यावज्ज्योतिं पर्येषत इति। स आर्द्रं काष्ठमादाय स्थले स्थापयित्वा आर्द्रां चोत्तरारणिं मथ्नीयात्, अभव्योऽसावग्निमुत्पादयितुम्। एवमेव य इमे श्रमणब्राह्मणा इति सर्वं पूर्ववत्कार्यं यावदभव्या उत्तरिमनुष्यधर्मादलमार्यज्ञानदर्शनविशेषं साक्षात्कर्तुम्। इयं द्वितीया उपमा प्रतिभाति स्म पूर्वमश्रुता चाविज्ञाता च ॥

पुनरपरं य इमे श्रमणब्राह्मणा भवन्तः कामेभ्यो व्यपकृष्टकायचित्ता विहरन्ति, यापि तेषां कामेषु नन्दिः। इति सर्वं पेयालम्[1]। तदप्येषामुपशान्तम्। किं चापि ते आत्मोपक्रमिकां शरीरोपतापिकां दुःखां तीव्रां खरां कटुकां वेदनां वेदयन्ते। अथ खलु पुनर्भव्या[2] एव ते उत्तरि-
R 311 मनुष्यधर्मादलमार्यज्ञानदर्शनविशेषं साक्षात्कर्तुम्। तद्यथापि नाम इह स्यात्पुरुषोऽग्न्यर्थी ज्योतिर्गवेषी ज्योतिः पर्येषमाणः, स शुष्कं काष्ठमादाय शुष्कां चोत्तरारणिं स्थले प्रतिष्ठाप्य मथ्नीयात्, स भव्योऽग्निमभिनिर्वर्तयितुं तेजः प्रादुष्कर्तुम्[3]। एवमेवं[4] य इमे भवन्तः श्रमणब्राह्मणा इति सर्वं यावद्वेदनां वेदयन्त इति। अथ च पुनर्भव्या एव ते उत्तरिमनुष्यधर्मादलमार्यज्ञानदर्शनविशेषं साक्षात्कर्तुम्। इयं तृतीया उपमा प्रतिभाति स्म अश्रुतपूर्वा च अविज्ञातपूर्वा च ॥

L 248 अथ खलु भिक्षवो बोधिसत्त्वस्यैतदभूत् — अहं खल्वेतर्हि कामेभ्यो व्यपकृष्टकायो विहरामि व्यपकृष्टचित्तश्च। यापि मे कामेषु नन्दीति सर्वं यावत्तदपि मे उपशान्तम्। किं चापि अहमात्मोपक्रमिकां शरीरोपतापिकां दुःखामिति पेयालं यावद्वेदनां वेद्मि। अथ खल्वहं भव्य एवोत्तरिमनुष्यधर्मादलमार्यज्ञानदर्शनविशेषं साक्षात्कर्तुम् ॥

इति हि भिक्षवो बोधिसत्त्वो यथाभिप्रेतं गयायां विहृत्य गयाशीर्षे पर्वते जङ्घाविहारमनुचंक्रम्यमाणो येनोरुबिल्वा सेनापतिग्रामकस्तदनुसृतस्तदनुप्राप्तोऽभूत्। तत्राद्राक्षीन्नदीं नैरञ्जनामच्छोदकां सूपतीर्थां[5] प्रासादिकैश्च द्रुमगुल्मैरलंकृतां समन्ततश्च गोचरग्रामाम्। तत्र खल्वपि बोधिसत्त्वस्य मनोऽतीव प्रसन्नमभूत् — समो बतायं भूमिप्रदेशो रमणीयः प्रतिसंलयनानुरूपः। पर्याप्तमिदं प्रहाणार्थिककुलपुत्रस्य। अहं च प्रहाणार्थी। यन्न्वहमिहैव तिष्ठेयम् ॥

R 312 इति हि भिक्षवो बोधिसत्त्वस्यैतदभूत् — पञ्चकषायकालेऽहमिह जम्बुद्वीपेऽवतीर्णो हीनाधिमुक्तिकेषु सत्त्वेष्वाकीर्णतीर्थ्यवर्गेषु नानादृष्टिप्रस्कन्नेषु[6] कायपिण्डग्राहाभिनिविष्टेषु नानाविधैश्चातापनपरितापनैः कायशुद्धिं पर्येषन्ते, प्रज्ञापयन्ति च संमूढाः[7]। तद्यथा — मन्त्रविचारकैर्[8]हस्तप्रलेहकैर्नयाचनकैर्[9]नामन्त्रणकैरनेकमूलिकैरमत्स्यमांसकैरवार्षिकैः सुरातुषोदकवर्जनैर्[10]एकत्रिपञ्चसप्तकुलभिक्षाग्रहणैर्मूलफलशैवालककुशपत्रगोमयगोमूत्रपायसदधिसर्पिः फाणितामपिष्टकभक्षणपानैः सारसिका[11]पोतकसंदंशि[12]कोत्सृष्टसंप्रक्षालकैः[13]। ग्राम्यारण्याभिश्च वृत्तिभिः। गोव्रतमृगाश्व[14]वराहवानर-
L 249 हस्तिव्रतैश्च स्थानमौनवीरासनैश्च एकालापकैर्यावत्सप्तालापकैः। एकभक्ता एकाहोरात्रचातुर्थ्य-

१ R पूर्ववत् for पेयालम्. २ R अभव्या for पुनर्भव्या. ३ R प्राविष्कर्तुम् for प्रादुः°. ४ R om. एव. ५ R सूपतीर्थ्यां. ६ R प्रस्कन्धेषु for प्रस्कन्नेषु. ७ R मूढाः for संमूढाः. ८ R मन्त्रनिर्विचारकैः for मन्त्रविचार°. ९ R नापावनकैः for नयाचनकैः. १० R °विसर्जनैः for °वर्जनैः. ११ R सारथि° for सारसि°. १२ R °संदेशि° for °संदंशि°. १३ R °प्रत्यालकैः for °प्रक्षालकैः. १४ R °मृगाश्व° for °मृगश्व°.

पञ्चषट्कालान्तराश्च पक्षक्षपण[1]मासक्षपणचान्द्रायणैश्च गृध्रोलूकपक्षधारणैश्च फलमुञ्जासनवल्कलदर्भबल्वजोष्ट्रकम्बलाजकम्बलकेशकम्बलचर्मनिवेशनैश्च [2]आर्द्रपटास्तोपकजालशयनैश्च भस्मशर्करापाषाणफलककण्टकतृणमुसलशयनावाक्[3]शिरोत्कुटुकस्थण्डिलशयनैश्च एकवासद्वित्रिचतुष्पञ्चषट्सप्तबहुवासोभिर्नग्नभावैश्च स्थानास्थानविधिभिश्च दीर्घकेशनखश्मश्रुजटामकुटधारणैश्च एककोलतिलतण्डुलाहारैश्च भस्ममसिनिर्माल्योद्धृततमोरजपांशुपङ्कपरिम्रक्षणैश्च लोममुञ्जकेशनखचीवरप[4]ञ्जरकरङ्कधारणैश्च उष्णोदकतण्डुलोदकपरिस्रावितकाम्बलिकस्थालीपानीयपानैश्च अङ्गारधातुकषायत्रिदण्डमुण्डिककुण्डिककपालखट्वाङ्गधारणैश्च शुद्धिं प्रत्यवगच्छन्ति संमूढाः । धूमपानाग्निपानादित्यनिरीक्षणपञ्चतपैकपादोर्ध्वबाहुस्थानैकचरणैश्च तपः संचिन्वन्ति । तुषाद्यङ्गारदाहनिकुम्भसाधन[5]पक्कशिलापचनाग्निजलप्रवेशनमरुतीर्थगमनमरणैश्चेष्टां गतिं मृगयन्ते । ओंकारवषट्कारस्वधाकारस्वाहाकाराशीर्[6]वचनस्तुतिचयनावाहनजप्यमन्त्राध्ययनधारणकरणैश्च शुद्धिं प्रत्यवगच्छन्ति । शुद्धं चात्मानं मन्यमाना इमानाश्रयन्ते । तद्यथा – ब्रह्मेन्द्ररुद्रविष्णुदेवीकुमारमातृकात्यायनीचन्द्रादित्यवैश्रवणवरुणवासवाश्विनौनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगराक्षसप्रेतभूतकुम्भाण्डपार्षदगणपतिपिशाचांश्च देवर्षिराजर्षिब्रह्मर्षींश्च नमस्यन्ति, तेषु च सारसंज्ञिनो भवन्ति । पृथिव्यप्तेजोवाय्वा[7]काशं चाश्रयन्ते । गिरिनदीनद्युत्ससरोह्रदतडागसागरसरःपल्वलपुष्करिणीकूपवृक्षगुल्मलतातृणस्थाणुगोष्ठश्मशानचत्वरशृङ्गाटकान्तरापणमुखानि चाश्रयन्ते । गृहस्तम्भोपलमुसलासिधनुपरशुशरशक्तित्रिशूलांश्च नमस्यन्ति । दधिघृतसर्षपयवप्रतिसरादूर्वामणिकनकरजतादिभिश्च मङ्गलं प्रत्यवगच्छन्ति । एवंविधानि इमे [8]तीर्थ्याः कुर्वन्ते, आश्रयन्ते च संसारभयभीताः ॥ R 313 L 250

इह च केचित्[9]परत्र मन्यन्ते स्वर्गापवर्गावस्माकमेतेभ्यो निर्वर्त्स्येते इति मिथ्यामार्गप्रयाता अशरणे शरणसंज्ञिनोऽमङ्गल्ये मङ्गलसंज्ञिनोऽ[10]शुद्ध्यां शुद्धिं मन्यते।यन्न्वहं तादृशं व्रततपोविशेषमालभेयं यथा सर्वपरप्रवादिनश्च निगृहीताः स्युः, कर्मक्रियाप्रणष्टानां च सत्त्वानां कर्मक्रियाविप्रणाशमा[11]दर्शयेयम् । ध्यानगोचराणां च रूपावचराणां च देवानां ध्यानविशेषोपदर्शनादावर्जनं कुर्यामिति ॥ R 314

इति हि भिक्षवो बोधिसत्त्व एवं चिन्तयित्वा षड्वार्षिकं महाघोरं व्रततपःसुदुष्करात्[12]सुदुष्करां दुष्करचर्यामालभते स्म । केन कारणेनोच्यते दुष्करचर्येति ? दुष्करकारिकैषा, तेनोच्यते दुष्करचर्येति । न स कश्चित्सत्त्वः सत्त्वनिकाये संविद्यते मनुष्यो वा अमनुष्यो वा, यः समर्थस्तथारूपं दुष्करं चरितुम्, अन्यत्र चरमभविकाद्बोधिसत्त्वात्, य आस्फानकध्यानं समापद्यते स्म । केन कारणेनोच्यते आस्फानकमिति ? [13]स चतुर्थध्यानमादित एव समापद्यमान आश्वासप्रश्वासानुपरोधयति संनिरोधयति । अकल्पं तद् ध्यानमविकल्पम[14]निञ्जनमपनीतमस्पन्दनं सर्वत्रानुगतं च सर्वत्र चानिश्रितम् । न च तद् ध्यानं जातु केनचित्समापन्नं पूर्वं [15]शैक्ष्येण वा अशैक्ष्येण वा प्रत्येक-

---

१ R om. मासक्षपण. २ R आर्द्रपटास्तोक for पटास्तोपक. ३ R शिरःकुट्टक for शिरोत्कुटुक. ४ R पङ्क for पञ्जर. ५ R °पक्षशिला° for पक्कशिला°. ६ R om. °वचन°. ७ R आकाशांश्च for आकाशं च. ८ R तीर्थानि for तीर्थ्याः. ९ R पुत्रैः for परत्र. १० R अशुद्धे for अशुद्ध्या. ११ R अधिदर्शयेयम् for आदर्श°. १२ R om. सुदुष्करां. १३ R स तर्हि for स. १४ R अनिङ्गनम् for अनिञ्जनम्. १५ R शैक्ष्येन वा अशैक्ष्येन for शैक्ष्येण वा अशैक्ष्येण वा.

बुद्धेन वा चर्याप्रतिपन्नेन वा बोधिसत्त्वेन । अतश्चास्फानकं नामोच्यते । आकाशमस्फरणमकरण[1]-
मविकरणं तच्च सर्वं स्फरतीति ह्याकाशसमं तद् ध्यानम् । तेनोच्यते आस्फानकमिति ॥

L 251 अथ खलु भिक्षवो बोधिसत्त्वो लोकस्याश्चर्यसंदर्शनार्थं तीर्थिकानां च दर्पनिर्घातनार्थं
R 315 परप्रवादिनां च निग्रहार्थं देवानां चावर्जनार्थमुच्छेदशाश्वतवादिनां च सत्त्वानां कर्मक्रियाप्रणष्टानां
कर्मक्रियावतारणार्थं पुण्यफलोद्भावनार्थं ज्ञान[2]फलसंदर्शनार्थं ध्यानाङ्गविभजनार्थं कायबलस्थामसंदर्श-
नार्थं चित्तशौर्यसंजननार्थं च असंस्कृतायां पृथिव्यां पर्यङ्कमा[3]भुज्य निषीदति स्म । निषद्य च स्वकायं
चेतसा निगृ[4]ह्णीते स्म, निष्पीडयति स्म ॥

ततो मे भिक्षवो हैमन्तिकास्वष्टकरात्रिषु तथा कायं निगृह्णतो निष्पीडयतः कक्षाभ्यामपि
स्वेदाः प्रश्रवन्ति स्म । ललाटादपि स्वेदाः प्रश्रवन्ति स्म । भूमौ निपतन्ति स्म अवश्यायन्त
ऊष्मा[5]यन्तो बाष्पायन्तः । तद्यथापि नाम बलवान् पुरुषो दुर्बलतरं पुरुषं ग्रीवायां गृहीत्वा निष्पीडयेत्,
एवमेव भिक्षव इमं कायं चेतसा निगृह्णतो निष्पीडयतः कक्षाभ्यामपि स्वेदाः प्रश्रवन्ति स्म ।
ललाटादपि स्वेदाः प्रश्रवन्ति स्म । भूमौ निपतन्ति स्म अवश्यायन्त ऊष्मायन्तो बाष्पायन्तः ॥

तस्य मे भिक्षव एतदभूत्—यन्न्वहमास्फानकं ध्या[6]नं ध्यायेयम् । ततो मे भिक्षव
आस्फानकं ध्यानं ध्यायतो मुखतो नासिकातश्चाश्वासप्रश्वासा उपनिरुद्धावभूताम् । कर्णछिद्रा-
भ्यामुच्चैः[7]शब्दा महाशब्दा निश्चरन्ति स्म । तद्यथापि नाम कर्मारगर्गया मथ्यमानायामुच्चैः[8]शब्दो
R 316 महाशब्दो निश्चरति, एवमेव मे भिक्षवो मुखनासिकाभ्यामाश्वासप्रश्वासावुपरुद्धावभूतां श्रोतछिद्राभ्या-
मुच्चशब्दो महाशब्दो निश्चरति स्म ॥

तस्य मे भिक्षव एतदभूत्—यन्न्वहं भूय आस्फानकं ध्यानं ध्यायेयमिति । ततो मे
L 252 भिक्षवो मुखनासिकाश्रोत्राण्युपरुद्धानि चाभूवन् । तेषूपरुद्धेषु वायुरुर्ध्वं शिरःकपालमुपनिहन्ति
स्म । तद्यथापि नाम भिक्षवः पुरुषः कुण्डया शक्त्या शिरःकपालमुपहन्याद्, एवमेव मे भिक्षवो
मुखनासिकाश्रोत्रेषूपरुद्धेषु आश्वासप्रश्वासा उर्ध्वं शिरःकपालमुपनिघ्नन्ति स्म ॥

तां चावस्थां दृष्ट्वा बोधिसत्त्वस्य तत्र केचिद्देवा एवमाहुः—कष्टं भोः कालगतो बतायं
सिद्धार्थः कुमारः । अपरे एवमाहुः—नायं कालगतः । अपि तु ध्यानविहार एषोऽर्हतामेवंविध
इति । तस्यां च वेलायमिमां[9] गाथामभाषन्त—

मा खल्वयं शाक्यनरेन्द्रगर्भो
ह्यपूर्णसंकल्प इ[10]हैव रण्ये ।
कृत्वा त्रिलोकं दुखितं ह्यनाथं
कालं करिष्यत्यकृतार्थ एव ॥ १ ॥
हा सत्त्वसारा सद्दृ[11]ढप्रतिज्ञा
सद्धर्मयज्ञेन निमन्त्रिताभूत् ।

---

१ R अस्फुरणम् for अस्फरणम्. २ R ज्ञानबल° for ज्ञानफल°. ३ R आरुह्य for आभुज्य. ४ R गृह्णीते for निगृ°. ५ R उष्णायन्तो for ऊष्मा°. ६ R om. ध्यानं. ७ R उच्चैःशब्दा for उच्चशब्दा. ८ R °गर्गरायां for °गर्गयां. ९ R इमे गाथे for इमां गाथाम्. १० R इहैवारणे for इहैव रण्ये. ११ R दृढ° for सद्दृढ°.

वयं पुरा ते तुषितेषु नाथा
क्व[1] सा प्रतिज्ञा तव शुद्धसत्त्व ॥ २ ॥ R 317

अथ ते देवपुत्रास्त्रायत्रिंशेषु देवेषु गत्वा मायादेव्या एवमर्थं श्रावयन्ति — कालगतः कुमारः । अथ मायादेवी अप्सरागणपरिवृता अर्धरात्रसमये नैरञ्जनायास्तीरे येन बोधिसत्त्वस्तेनोपसंक्रान्ता[2] । सा पश्यति स्म बोधिसत्त्वं शुष्कगात्रम् । कालगतमिव दृष्ट्वा बाष्पगद्गदकण्ठा रोदितुमारब्धा । तस्यां च वेलायामिमां[3] गाथामभाषत —

यदा जातोऽसि मे पुत्र वने लुम्बिनिसाह्वये ।
सिंहवच्चागृहीतस्त्वं प्रक्रान्तः सप्त पदां[4] स्वयम् ॥ ३ ॥
दिशां चालोक्य चतुरे[5] वाचा ते प्रव्याहृता शुभा ।
इयं मे पश्चिमा जातिः सा ते न परिपूरिता ॥ ४ ॥
असितेनाभिनिर्दिष्टो बुद्धो लोके भविष्यसि । L 253
क्षुण्णं व्याकरणं तस्य न दृष्टा तेन नित्यता ॥ ५ ॥
चक्रवर्तिश्रियं पुत्र नपि भुक्ता मनोरमा ।
न च बोधिमनुप्राप्तो यातोऽसि[6] निधनं वने ॥ ६ ॥
पुत्रार्थे कं प्रपद्यामि कं[7] व क्रन्दामि दुःखिता ।
को[8] मे द्येकपुत्रस्य किंचित्प्राणस्य जीवितम् ॥ ७ ॥

बोधिसत्त्व आह —

कैषा[9] अति त्वां करुणं रुदासि R 318
प्रकीर्णकेशा विनिवृत्त[10]शोभा ।
पुत्रं ह्यतीवा परिदेवयन्ती
विचेष्टमाना धरणीतलस्था ॥ ८ ॥

मायादेवी आह —

मया तु दशमासां वै कुक्षौ वज्र इवा धृतः ।
सा तेऽहं पुत्रका माता विलपामि सुदुःखिता ॥ ९ ॥

अथ बोधिसत्त्व आश्वासयन्नुवाच — न भेतव्यं पुत्रलालसे, श्रमं ते सफलं करिष्यसि[11] । अमोघं बुद्धपरित्यागम् । असितनिर्देशं च व्यक्तं करिष्यामि । दीपंकरस्य व्याकरणं व्यक्तीकरिष्यामि च ।

अपि शतधा वसुधा [12]विकीर्येत
मेरुः प्लवे चाम्भसि रत्नशृङ्गः ।

---

१ R दृढप्रतिज्ञा for क्व सा. २ R उपसंक्रम्य for °संक्रान्ता. ३ R इमा गाथा for इमां गाथाम्. ४ R पदान्. ५ R चतुरो. ६ R जातो for यातो. ७ R कस्य for कं व. ८ कामं चैवेक° for को मे द्येक°. ९ R कैषातीव for कैषा अति त्वां. १० R विवृत्त° for विनिवृत्त°. ११ R करिष्यामि for करिष्यसि. १२ R विकीर्यतः for °यैत.

चन्द्रार्कतारागण भू पतेत
पृथग्जनो नैव अहं म्रियेयम्।
यस्मान्न शोको त्वयि अत्र कार्यो
न वै चिराद् द्रक्ष्यसि बुद्धबोधिम्॥ १०॥

सहश्रवणादेव देवी माया संप्रहर्षितरोमकूपजाता बोधिसत्त्वं मान्दारव[१]पुष्पैरभ्यवकीर्य त्रिप्रदक्षिणीकृत्वा दिव्यतूर्यैः संप्रवाद्यमानैर्येन स्वभवनं तेनोपजगाम॥

L 254 तस्य मे भिक्षव एतदभूत्—सन्त्येके श्रमणब्राह्मणा ये अल्पाहारतया शुद्धिं मन्यन्ते।
R 319 यन्न्वहमल्पाहारतया प्रतिपद्येयमिति। अभिजानाम्यहं भिक्षव एकमेवाद्वितीयं कोलमाहारमाहर्तुम्। स्यात्खलु पुनर्भिक्षवो युष्माकं एषा बुद्धिः—महत्तरं तत्र काले कोलमासीदिति। न खल्वेवं[२] द्रष्टव्यम्। अथ खल्वियदेव तत्र[३] काले कोलमभूत्। तस्य मे भिक्षव एकमेव कोलमाहारमाहरतोऽद्वितीयं कायोऽत्यर्थं कर्शितोऽभूद्दुर्बलः। तद्यथापि नाम भिक्षव आसीतकीपर्वाणि वा कालापर्वाणि[४] वा, एवमेव मेऽङ्गप्रत्यङ्गान्यभूवन्। तद्यथापि नाम कर्कटपार्शुका, एवमेव मे पार्शुका[५] अभूवन्। तद्यथापि नाम वाहनकारशालायां वा हस्तिशालायां वा जीर्णायामुभयतो विवृतायां गोपानस्यान्तरिकाश्च विराजन्ते व्यवभासन्ते, एवमेव मे पार्शुका अन्तःकाये उभयतो विराजन्ते स्म व्यवभासन्ते स्म। तद्यथापि नाम वर्तन्या[६] वेणी उन्नतावनता भवति समविषमा, एवं मे पृष्ठीकण्टको[७]ऽभूदुन्नतावनतः समविषमः। तद्यथा तिक्तकालाबुस्तरुणो लून आम्लानो भवति संम्लानः समुत्पुटकजातः, एवमेव शिर आम्लानमभूत्संम्लानं समुत्पुटकजातम्। तद्यथापि नाम ग्रीष्माणां पश्चिमे मासे कूपतारका दूरगता भवन्ति, कृच्छ्रेण संप्रकाश्यन्ते, एवमेव मेऽक्षितारकौ दूरगतावभूतां कृच्छ्रेण संप्रकाश्येते स्म। तद्यथापि नामाजपदं वोष्ट्रपदं वा, एवमेव मे कक्षाकुक्षिवक्षादीन्यभूवन्। ततो यदाहं भिक्षवः
R 320 पाणिना कुक्षिं स्पृशामीति पृष्ठि[८]कण्टकमेवास्प्राक्षम्। उत्तिष्ठामीति चाभिसंस्कुर्वंस्तथैवावकुब्जः प्रयामेण[९]
L 255 प्रापतम्। ततः कृच्छ्रेणोत्थितोऽपि पांशुकृतानि गात्राणि पाणिना प्रमृजतो मे पूतिरोमाणि कायाच्छीर्यन्ते स्म। यापि मेऽभूत्पौराणी शुभवर्णतनुः साप्यन्तर्धा[१०]यथापीदं रूक्ष[११]प्रधानं प्रहितात्मनः। सामन्ताश्च मे गोचरग्रामवासिन एवं संजानन्ते स्म—कालको बत भोः श्रमणो गौतमः। श्यामको बत भोः श्रमणो गौतमः। मद्गुरच्छविर्बत भोः श्रमणो गौतमः। याप्यस्याभूत्पौराणी शुभवर्णा निभा[१२], साप्यन्तर्हिता॥

तस्य मे भिक्षव एतदभूत्—यन्न्वहं भूयस्या मात्रयाल्पाहार[१३]तया प्रतिपद्येयमिति। अभिजानाम्यहं भिक्षव एकमेव तण्डुलमद्वितीयमाहारमाहर्तुम्[१४]। स्याद्भिक्षवो युष्माकमेवं महत्तरं तण्डुलं तस्मिन् कालेऽभूदिति। न खल्वेवं द्रष्टव्यम्। अथैतावानेव तस्मिन् काले तण्डुलोऽभूत्। तस्य मे भिक्षव एकं तण्डुलमाहरतः क्षिप्रं कायोऽभूदिति पूर्ववद्यावन्मद्गुरच्छविर्बत भोः श्रमणो गौतम इति। याप्यस्य साभूत्पौराणी शुभवर्णतनुः साप्यन्तर्हितेति॥

---

१ R मान्दारपुष्पैः for मान्दारव°. २ R खल्विदमेव for खल्वेवं. ३ R तत्राकाले for तत्र काले. ४ R om. कालापर्वाणि. ५ R पर्शुका. ६ R वर्तनी for वर्तन्या. ७ R पृष्ठकाण्डको for पृष्ठीकण्टको. ८ R पृष्ठ° for पृष्ठि°. ९ R om. प्रयामेण. १० R °प्यन्तर्धात्तथा° for प्यन्तरधाद्यथा°. ११ R रक्षः प्रधानं for रूक्षप्रधानं. १२ R तनु for निभा. १३ R हारतायै for हारतया. १४ R आहारयितुम् for आहर्तुम्.

तस्य मे भिक्षव एतदभूत् — यन्न्वहं भूयस्या मात्रयाल्पाहारतायै प्रतिपद्येयमिति । अभिजानाम्यहं भिक्षव एकमेव तिलमद्वितीयमाहारमाहारयितुम् । पेयालं । यावत्साप्यस्य शुभवर्णतनुरन्तर्हितेति ॥

तस्य मे भिक्षव एतदभूत् — सन्त्येके श्रमणब्राह्मणा येऽनाहारतया शुद्धिं मन्यन्ते । यन्न्वहं सर्वेण सर्वमनाहारतायै प्रतिपद्येयमिति । ततोऽहं भिक्षवोऽनाहारस्थितोऽभूवम् । तस्य मे R 321 भिक्षवोऽनाहारस्य कायोऽतीव शुष्कोऽभूत् कृशो दुर्बलः, तद्यथापि नाम आसितकीपर्वाणि वा[1] कालपर्वाणि वा । ततो द्विगुणत्रिगुणचतुर्गुणपञ्चगुणदशगुणं[2] मे कृशान्यङ्गप्रत्यङ्गान्यभूवन्[3] । तद्यथा कर्कटकपार्शुका वाहनशालायां वा गोपानसी (पार्श्वे) द्विपरिवर्तना वेणीवत्पृष्ठीकण्टकः । तिक्तालाबुवच्छिरःकपालम्, कूपतारका इवाक्षितारके । सोऽहं भिक्षवः साधुकमुत्तिष्ठामीति L 256 गात्राण्यभिसंस्कुर्वन्नवकुब्जः प्रापतम् । कृच्छ्रेणापि चोत्थितः पांशुकृतानि मे गात्राणि प्रमृजतः पूतिमूलानि रोमाण्यशीर्यन्त । यापि मे साभूच्छुभवर्णतनुनिभा, साप्यन्तरधात् । तद्यथापि तद्रूक्षप्रधानप्रहितात्मकत्वात् । सामन्ताश्च मे गोचरग्रामवासिनो जना एवं संजानन्ते स्म — कालको बत भोः श्रमणो गौतमः । श्यामको बत भोः श्रमणो गौतमः । मद्गुरच्छविर्बत भोः श्रमणो गौतमः । याप्यस्य[4] साभूत्पौराणी शुभवर्णनिभा साप्यन्तर्हितेति ॥

राजापि तदा शुद्धोदनः प्रतिप्रतिदिवसं[5] बोधिसत्त्वस्यान्तिके दूतं प्रेषयति स्म ॥

इति हि भिक्षवो बोधिसत्त्वो लोकस्याद्भुतक्रियासंदर्शनार्थं पूर्ववद्यावत्कर्मक्रियाप्रणष्टानां सत्त्वानां कर्मक्रियावतारणार्थं पुण्यसंचयानां चोद्भावनार्थं महाज्ञानस्य च गुणसंदर्शनार्थं ध्यानाङ्गानां च विभजनार्थमेकतिलकोलतण्डुलेन षड्वर्षाणि दुष्करचर्यामनुवर्तयन्तमुपदर्शयति[6] स्म । अदीनमानसः षड्वर्षा[7] बोधिसत्त्वो यथा निषण्ण एवास्थात् पर्यङ्केन । न च ईर्यापथाच्च्यवते स्म । R 322 नातपाच्छायामगमन्न छायाया आतपम् । न च वातातपवृष्टिपरित्राणमकरोन्न च दंशमशकसरीसृपानपनयति स्म । न चोच्चारप्रश्रावश्लेष्मसिंहाणकानुत्सृजति[8] स्म । न च संमिञ्जनप्रसारणमकरोत्[9] । न च पार्श्वोदरपृष्ठस्थानेनास्थात्[10] । येऽपि च ते महामेघा दुर्दिनवर्षाशनिशरद्ग्रीष्महैमन्तिकाः, तेऽपि[11] L 257 बोधिसत्त्वस्य काये निपतन्ति स्म । न चान्ततो बोधिसत्त्वः पाणिनापि प्रच्छादनमकरोत् । न चेन्द्रियाणि पिथयति[12] स्म । न चेन्द्रियार्थान् गृह्णीते स्म । ये च तत्रागमन् ग्रामकुमारका वा ग्रामकुमारिका वा गोपालका वा पशुपालका वा तृणहारिका वा काष्ठहारिका वा गोमयहारिका वा, ते बोधिसत्त्वं पांशुपिशाचमिति मन्यन्ते स्म । तेन च क्रीडन्ति स्म । पांशुभिश्चैनं म्रक्षयन्ति स्म ॥

तत्र बोधिसत्त्वस्तैः षड्भिर्वर्षैस्तावल्लूहन्यूनदुर्बलकायः[13] संवृत्तोऽभूत्, यदस्य कर्णश्रोताभ्यां तृणतूलकं प्रक्षिप्य नासाश्रोताभ्यां निष्कास्यते स्म । नासाश्रोताभ्यां प्रक्षिप्य कर्णश्रोताभ्यां

१ R वाकाले for वा काला°. २ R ° दशगुणानि for °गुणं. ३ R कृशाङ्ग° for कृशान्यङ्ग°. ४ R याप्यस्याभूत् for याप्यस्य साभूत्. ५ R om. one प्रति. ६ R उपवर्त° for अनुवर्त°. ७ R षड्वर्षाणि. ८ R °सिंघाणकान् for °सिंहाणकान्. ९ R सम्यग्जानु° for समिञ्जन°. १० R °नाच्छाद्ये for °नास्थात्. ११ R om. तेऽपि. १२ R [illegible] for पिथ°. १३ R तावन्नूनं for तावल्लूहन्यून°.

निष्कास्यते स्म । कर्णश्रोताभ्यां प्रक्षिप्य मुखद्वारेण निष्कास्यते स्म । मुखद्वारेण प्रक्षिप्य कर्णनासिकाश्रोताभ्यो निष्कास्यते स्म। नासायां प्रक्षिप्य कर्णनासिकामुखद्वारेण निष्कास्यते स्म॥

ये च ते देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगा[1] मनुष्यामनुष्या बोधिसत्त्वस्य गुणेषु प्रत्यक्षाः,ते रात्रिंदिवं समधिष्ठा[2] बोधिसत्त्वस्य पूजां कुर्वन्ति स्म । प्रणिधानानि च कुर्वन्ति स्म॥

R 323 तत्र बोधिसत्त्वेन तैः षड्भिर्वर्षैर्दुष्करचर्यां संदर्शयता परिपूर्णानि द्वादशनयुतानि देवमनुष्याणां त्रिभिर्यानैः परिपाचितान्यभूवन् ॥

तत्रेदमुच्यते –

तस्य च गुणान्वितस्य पुराद्विनिष्क्रम्य बोधिसत्त्वस्य ।
चिन्ता उपाययुक्ता सत्त्वार्थहिताय उत्पन्ना ॥ ११ ॥
पञ्चसु[3] कषायकाले हीनेऽधर्माधिमुक्तिके लोके[4] ।
जातोऽस्मि जम्बुद्वीपे धर्मक्रियउद्धुरे[5] लोके ॥ १२ ॥
L 258 आकीर्ण तीर्थिकगणैः कौतूहलमङ्गलैरिमे युक्ता ।
कायोपक्रमकरणैर्मन्यन्ते बालिशाः शुद्धिम् ॥ १३ ॥
अग्निप्रवेशमरु[6]प्रपातपांशुभस्मादिमक्षिता[7] नग्नाः ।
कायपरितापनार्थं पञ्चातपयोगमनुयुक्ताः ॥ १४ ॥
मन्त्राविचारकरणा केचिद्धस्तावलेहका अबुधाः ।
न च कुम्भमुखकरोटान्न धार[8]कुशलान्तराच्च गृह्णन्ति ॥ १५ ॥
न च यत्र स्वानु[9]भवती न चाहितं तेन तिष्ठवाक्यस्य ।
कुलभिक्ष[10] एक गृह्या शुद्धं[11] मन्यन्तिहात्मानम् ॥ १६ ॥
वर्जेन्ति सर्पितैलं फाणित[12]दधिदुग्धमत्स्यमांसानि ।
श्यामाकशाकभक्षा मृणालगर्डुल[13]कणाभक्षाः ॥ १७ ॥
मूलफलपत्र[14]भक्षाः कुशचीवरचर्मकम्बलधराश्च ।
R 324 अपरे भ्रमन्ति नग्नाः सत्यमिदं मोहम[15]न्यदिति मूढाः ॥ १८ ॥
धारेन्ति ऊर्ध्वहस्ता ऊर्ध्वकेशा जटाश्च धारेन्ति ।
मार्गानतिप्र[16]नष्टा अमार्ग[17]संस्थाः सुगतिगमनकामाः ॥ १९ ॥
तृणमुसलभस्मशयनाः कण्टकशयनाश्च उत्कुटध्यायि ।
स्थित केचिदेकपादे ऊर्ध्वमुखाश्चन्द्रसूर्य पश्यन्तः ॥ २० ॥
उत्सां सरसतडागां सागरसरितश्च चन्द्रसूर्यौ च ।
वृक्षगिरिशैलशिखरां कुम्भं धरणीं नमस्यन्ते ॥ २१ ॥

---

१ R °महोरगमनु° for महोरगा मनु°. २ R रात्रिंदिवमधिष्ठाय for रात्रिंदिवं समधिष्ठा. ३ R पञ्चस for पञ्चसु. ४ R om. लोके.. ५ R उद्धरे for °उद्धुरे. ६ R °वेशनमेरु° for वेशमरु°. ७ R °म्रक्षिता for °मक्षिता. ८ R °टान्नोद्धार° for °टान्न धार°. ९ R चानुभवती for स्वानु°. १० R कुलभिक्षु for °भिक्ष ११ °R शुद्धिं for शुद्धं. १२ R मधुफाणित° for फाणित°. १३ R °गर्दूल° for °गर्डुल°. १४ R °पत्रफल. for °फलपत्र°. १५ मोघम् for मोहम. १६ R [illegible] for [illegible]. १७ R सुमार्ग° for अमार्ग°.

विविधैश्च कारणैस्ते कायं परिशोधयन्ति संमूढाः ।
मिथ्यादृष्टिपरीताः क्षिप्रं प्रपतन्त्यपायेषु ॥ २२ ॥

यन्नूनमहं व्रततप दुष्करचर्यां समारभे घोराम् ।
यं दुष्करं न शक्यं चरितुं देवैर्मनुष्यैर्वा ॥ २३ ॥

आस्फानकं च ध्यानं ध्यायेयं वज्रकल्पदृढस्थानम् । L 259
यं ध्यानं न समर्थाः प्रत्येकजिनापि दर्शयितुम् ॥ २४ ॥

सन्तीह देवमनुजाः तीर्थिक ल्हिह[1]व्रतेन हृष्यन्ते[2] ।
तेष परिपाक[3]हेतो दुष्करव्रततप रमेय सूतीव्रम् ॥ २५ ॥

पर्यङ्कमाभुजित्वा उपविष्टोऽभूत्स्थले असंस्तीर्णे । R 325
कोलतिलतण्डुलेना आहारविधिं विदर्शयति[4] ॥ २६ ॥

आश्वासविप्रहीनः प्रश्वासवर्जितु न चेञ्जते[5] बलवान् ।
षड्वर्षाणि प्रवरं ध्यायत्यास्फानकं ध्यानम् ॥ २७ ॥

कल्पं[6] नो न विकल्पं न चेञ्जनं नापिमन्येन प्रचारम् ।
आकाशधातुस्फरणं ध्यायत्यास्फानकं ध्यानम् ॥ २८ ॥

न च आतपातु छायां छायाया नातपं गतश्चासौ ।
मेरुरिव निष्प्रकम्प्यो ध्यायत्यास्फानकं ध्यानम् ॥ २९ ॥

न च वातवृष्टिछदनं न दंशमशकासरीसृपात्राणम् ।
अविकोपितया चर्या ध्यायत्यास्फानकं ध्यानम् ॥ ३० ॥

न च केवलमात्मार्थं ध्यायत्यास्फानकं ध्यानम् ।
अन्यत्र करुणचित्तो भावी लोकस्य विपुलार्थम् ॥ ३१ ॥

ये ग्रामदारकाश्च गोपालाः काष्ठहारतृणहाराः ।
पांशुपिशाचकमिति तं मन्यन्ते पांशुना च म्रक्षन्ति ॥ ३२ ॥

अँशुचीना च किरन्ते[7] विविधास्ते कारणाश्च कारेन्ति[8] ।
न च इञ्जते[9] भ्रमति वा ध्यायत्यास्फानकं ध्यानम् ॥ ३३ ॥

न च नमति नो विनमते न कायपरिरक्षणा स्पृशति । R 326
किंचिन्नोच्चारप्रस्रवं शब्देषु न संत्रसी न परप्रेक्षी ॥ ३४ ॥

संशुष्कमांसरुधिरं चर्मस्नाय्वस्थिकाश्च अवशिष्टा । L 260
उदराच्च पृष्ठिवंशो विदृश्यते[10] वर्तिता यथा वेणी ॥ ३५ ॥

---

१ R लोभव्रतेन for ल्हिह°. २ R कृष्यन्ते for हृष्यन्ते. ३ R °पाचन° for °पाक°. ४ R निदर्शयन्ति for विदर्शि°. ५ R चेङ्गते. ६ R अल्पं नो नधिकल्पनं for कल्पं नो नविकल्पं. ७ R अशुचिं च विकिरन्ते for अशुचीना च किरन्ते. ८ R करोमि for कारेन्ति. ९ इङ्गते for इञ्जते. १० R विनिदृश्यते for विदृश्यते.

ये ते कृताधिकारा देवाः सुरनागयक्षगन्धर्वाः ।
प्रत्यक्षगुणधरस्या करोन्ति पूजां दिवारात्रौ ॥ ३६ ॥

प्रणिधिं च कुर्वते ते वयमपि तादृश भवेमहे[1] क्षिप्रम् ।
यथ एष गगनचित्तो ध्यायत्यास्फानकं ध्यानम् ॥ ३७ ॥

न च केवलमात्मार्थं न ध्यानस्वादनान्न सुखबुद्ध्या ।
अन्यत्र करुणबुद्ध्या करिष्यत्यर्थं विपुल लोके ॥ ३८ ॥

निहताः परप्रवादा ध्यामीकृत[2] तीर्थिका मतिविहीनाः ।
कर्मक्रिया च दर्शित या प्रोक्ता काश्यपे वाचा ॥ ३९ ॥

[3]क्रकुच्छन्दकस्य बोधि बोधिरिह सुदुर्लभा बहुभि कल्पैः ।
जनताया इत्यर्थं ध्यायत्यास्फानकं ध्यानम् ॥ ४० ॥

द्वादशनयुता पूर्णा विनीत मरु[4]मानुषाश्चित्रिभिर्यानैः ।
एतदधिकृत्य सुमति ध्यायत्यास्फानकं ध्यानम् ॥ ४१ ॥

॥ इति श्रीललितविस्तरे दुष्करचर्यापरिवर्तो नाम सप्तदशमोऽध्यायः ॥

---

१ R भवेमहि for भवामहे. २ R ध्यानीकृत for ध्यामी°. ३ R बोधिसत्त्वस्य for क्रकुच्छन्दकस्य. ४ R om. मरु°.

# १८

# नैरञ्जनापरिवर्तोऽष्टादशः ।

मारश्च भिक्षवः पापीयान् बोधिसत्त्वस्य षड्वर्षाणि दुष्करचर्यां चरतः पृष्ठतः समनुबद्धोऽभूत् अवतारप्रेक्षी अवतारगवेषी । न च कदाचित्किंचिदवतारमध्यगच्छत् । सोऽवतारमनधिगच्छन्निर्विण्णो[1] विप्रतिसारी प्राक्रामत् ॥ R 327

तत्रेदमुच्यते – L 261

रमणीयान्यरण्यानि वनगुल्माश्च वीरुधाः ।
प्राचीनमुरुबिल्वायां यत्र नैरञ्जना नदी ॥ १ ॥

प्रहाणायोद्यतं तत्र सततं दृढविक्रमम् ।
पराक्रमन्तं वीर्येण योगक्षेमस्य प्राप्तये ॥ २ ॥

नमुचिर्मधुरां वाचं भाषमाणो उपागमत् ।
शाक्यपुत्रा समुत्तिष्ठ कायखेदेन किं तव ॥ ३ ॥

जीवतो जीवितं श्रेयो जीवन् धर्मं चरिष्यसि ।
जीवं हि तानि कुरुते यानि कृत्वा न शोचति ॥ ४ ॥

कृशो विवर्णो दीनस्त्वं अन्तिके मरणं तव ।
सहस्रभागे मरणं एकभागे च जीवितम् ॥ ५ ॥

ददेतः[2] सततं दानं अग्निहोत्रं[3] च जुह्वतः ।
भविष्यति महत्पुण्यं किं प्रहाणे करिष्यसि ॥ ६ ॥

दुःखं मार्गं प्रहाणस्य दुष्करं चित्तनिग्रहम् । R 328
इमां वाचं तदा मारो बोधिसत्त्वमथाब्रवीत् ॥ ७ ॥

तं तथावादिनं मारं बोधिसत्त्वस्ततोऽब्रवीत् ।
प्रमत्तबन्धो पापीय स्वेनार्थेन त्वमागतः ॥ ८ ॥

अणुमात्रं हि मे पुण्यैरर्थो मार न विद्यते ।
अर्थो येषां तु पुण्येन तानेवं वक्तुमर्हसि ॥ ९ ॥

नैवाहं मरणं मन्ये मरणान्तं हि जीवितम् ।
अनिवर्ती भविष्यामि ब्रह्मचर्यपरायणः ॥ १० ॥

L 262
स्रोतांस्यपि नदीनां हि वायुरेष विशोषयेत् ।
किं पुनः शोषयेत्कायं शोणितं प्रहितात्मनाम् ॥ ११ ॥

---

१ R निर्विवर्णो for निर्विण्णो. २ R ददतं for ददतः. ३ R अहोरात्रं च जुह्वते for अग्निहोत्रं च जुह्वतः.

शोणिते तु विशुष्के वै ततो मांसं विशुष्यति ।
मांसेषु क्षीयमाणेषु भूयश्चित्तं प्रसीदति ।
भूयश्छन्दश्च वीर्यं च समाधिश्चात्रतिष्ठते ॥ १२ ॥
तस्यैव[1] मे विहरतः प्राप्तस्योत्तमचेतनाम्[2] ।
चित्तं नावेक्षते कायं पश्य[3] सत्त्वस्य शुद्धताम् ॥ १३ ॥
अस्ति छन्दं तथा वीर्यं प्रज्ञापि मम विद्यते ।
तं न पश्याम्यहं लोके वीर्याद्यो मां विचालयेत् ॥ १४ ॥
वरं मृत्युः प्राणहरो धिग्ग्राम्यं नोपं[4]जीवितम् ।
संग्रामे मरणं श्रेयो यच्च[5] जीवेत्पराजितः ॥ १५ ॥
R 329 नाशूरो[6] जयते सेनां जित्वा चैनां न मन्यते ।
शूरस्तु जयते सेनां लघु मार जयामि ते ॥ १६ ॥
कामास्ते प्रथमा सेना द्वितीयाँ[7] अरतिस्तथा ।
तृतीया क्षुत्पिपासा ते तृष्णा सेना चतुर्थिका ॥ १७ ॥
पञ्चमी स्त्यानमिद्धं ते[8] भयं षष्ठी निरुच्यते ।
सप्तमी विचिकित्सा ते क्रोधम्रक्षौ तथाष्टमी ॥ १८ ॥
लोभश्लोकौ च संस्कारा मिथ्यालब्धं च यद्यशः ।
आत्मानं यश्च उत्कर्षेद्यश्च वै ध्वंसयेत्परां ॥ १९ ॥
एषा हि नमुचेः सेना कृष्णबन्धोः प्रतापिनः ।
अत्रावगाढा दृश्यन्ते एते श्रमणब्राह्मणाः ॥ २० ॥
या ते सेना धर्षयति[9] लोकमेनं सदेवकम् ।
L 263 भेत्स्यामि प्रज्ञया तां ते आमपात्रमिवाम्बुना ॥ २१ ॥
स्मृतिं सूपस्थितां कृत्वा प्रज्ञां चैव सुभाविताम् ।
संप्रजानं चरिष्यामि किं करिष्यसि दुर्मते ॥ २२ ॥

एवमुक्ते मारः पापीयान् दुःखी दुर्मना अनात्तमना विप्रतिसारी तत्रैवान्तरधात् ॥

अथ खलु भिक्षवो बोधिसत्त्वस्यैतदभूत्—ये केचिच्छ्रमणा ब्राह्मणा वा अतीतानागतप्रत्युत्पन्नेष्वध्वस्वात्मोपक्रमिकां[10] शरीरोपतापिकां दुःखां तीव्रां खरां[11] कटुकाममनापां वेदनां वेदयन्ति एतावत्परमं ते दुःखमनुभवन्ति ॥

---

१ R तस्यैवं for तस्यैव. २ R °वेदनाम् for °चेतनाम्. ३ R यस्य for पश्य. ४ नो च for नोप°. ५ R न च for यच्च. ६ R न शूरो जायते for नाशूरो जयते. ७ R द्वितीया ते रतिस्तथा. ८ R स्त्यानमिच्छन्ते for स्त्यानमिद्धं ते. ९ R प्रधर्षे for धर्षे°. १० R °ष्वधः स्वात्मो° for °ष्वध्वस्वात्मो°. ११ R om. खरां.

तस्य मे भिक्षव एतदभूत्—अनयापि खलु मया चर्यया अनयापि प्रतिपदा[1] न[2] कश्चिदुत्तरि- R 330
मनुष्यधर्मादलमार्यज्ञानदर्शनविशेषः साक्षात्कृतः। नायं मार्गो बोधेः। नायं मार्ग आयत्यां जाति-
जरामरणसंभवानामस्तंगमाय । स्यात्[3]तदन्यो मार्गो बोधेरायत्यां जातिजरामरणदुःखसमुदयाना-
मस्तंगमायेति ॥

तस्य मे भिक्षव एतदभवत्—यदहं[4] पितुरुद्याने जम्बुच्छायायां निषण्णो विविक्तं कामै-
र्विविक्तं पापकैरकुशलैर्धर्मैः सवितर्कं सविचारं विवेकजं प्रीतिसुखं प्रथमं ध्यानमुपसंपद्य व्याहार्षं
यावच्चतुर्थध्यानमुपसंपद्य व्याहार्षम्, स्यात्स मार्गो बोधेर्जातिजरामरणदुःखसमुदायानामसं-
भवायास्तंगमायेति । तदनुसारि च मे विज्ञानमभूत्। स मार्गो बोधेरिति ॥

तस्य ममैतदभूत्—नासौ मार्गः शक्यः एवं दौर्बल्यप्राप्तेनाभिसंबोद्धुम्। सचेत्पुनरह-
मभिज्ञाज्ञानबलेनैव[5] लूहं दुर्बलकाय एव बोधिमण्डमुपसंक्रमेयम्, न मे पश्चिमा जनता[6] अनुकम्पिता L 264
स्यात्। न चैष मार्गो बोधेः। यन्न्वहमौदारिकमाहारमाहृत्य कायबलस्थामं संजनय्य पश्चाद्बोधि-
मण्डमुपसंक्रमेयम् ॥

तत्र भिक्षवो ये ते लूहाधिमुक्ता[7] देवपुत्रास्ते मम चेतसश्चेतसैव परिवितर्कमाज्ञाय येनाहं[8]
तेनोपसंक्रम्य मामेवमाहुः—मा स्म त्वं सत्पुरुष औदारिकमाहारमाहरेः। वयं ते रोमकूपैरोजः
प्रक्षेप्स्याम इति ॥

तस्य मे भिक्षव एतदभूत्—अहं खल्वनशन इत्यात्मानं प्रतिजाने, सामन्ताश्च मे
गोचरग्रामवासिनो जना एवं संजानन्ते स्म यथानशनः श्रमणो गौतमः। इतीव मे खलु लूहाधि- R 331
मुक्ता देवपुत्रा रोमकूपैरोजः प्रक्षिपन्ति । स मम परमो मृषावादः स्यात्। ततो बोधिसत्त्वो
मृषावादपरिहारार्थं तान् देवपुत्रान् प्रतिक्षिप्यौदारिकमाहारमाहर्तुं चित्तं नामयति स्म ॥

इति हि भिक्षवः षड्वर्षव्रततपःसमुत्तीर्णो बोधिसत्त्वोऽस्मा[9]दासनादुत्थायौदारिकमाहार-
माहरिष्यामीति वाचं निश्चारयति स्म । तद्यथा फाणीकृतं[10] मुद्गयूषं[11] हरेणुकयूषं[12] मथ्योदन[13]-
कुल्माषमिति ॥

अथ खलु भिक्षवः पञ्चानां भद्रवर्गीयानामेतदभूत्—तयापि तावच्चर्यया तयापि
तावत्[14]प्रतिपदा श्रमणेन गौतमेन न शकितं किंचिदुत्तरिमनुष्यधर्मादलमार्यज्ञानदर्शनविशेषं
साक्षात्कर्तुम्, किं पुनरेतर्हि औदारिकमाहारमाहरन्[15] सुखल्लिकानुयोगमनुयुक्तो विहरन्। अव्यक्तो
बालोऽयमिति च मन्यमाना बोधिसत्त्वस्यान्तिकात्प्रक्रामन्। ते वाराणसीं गत्वा ऋषिपतने मृगदावे
व्याहार्षुः ॥

तत्र बोधिसत्त्वमादित एव दुष्करचर्यां चरन्तं दश ग्रामिकदुहितरः कुमार्य उपगच्छन्[16] दर्शनाय L 265
वन्दनाय पर्युपासनाय च । तैरपि[17] पञ्चकैर्भद्रवर्गीयैरुपस्थितोऽभूत्। एककोलतिलतण्डुलप्रदानेन

१ R प्रतिपादकः for °प्रतिपदा. २ R om. न. ३ R न स्यात् for स्यात्. ४ R यन्वहं for यदहं. ५ R °नैवाहं for °नैव लूहं. ६ L जानता for जनता. ७ R लुम्धाधि° for लूहाधि°. ८ R यस्याहं for येनाहं. ९ R तस्मात् for अस्मात्. १० R हाणीकृतं for फाणी°. ११ R मुद्गं पुषं for मुद्गयूषं. १२ R om. हरेणुक°. १३ R यथौदन° for मथ्योदन°. १४ R om. तावत्. १५ R om. आहरन्. १६ R उपतस्थुः for उपगच्छन्. १७ R om. तैरपि.

च प्रतिपादितोऽभूत् । बला च नाम दारिका बलगुप्ता च सुप्रिया च विजयसेना च अतिमुक्तकमला च सुन्दरी च कुम्भकारी च उलुविल्लिका च जटिलिका च सुजाता च नाम
R 332 ग्रामिकदुहिताः । आभिः कुमारिकाभिर्बोधिसत्त्वाय सर्वास्ता[1] यूषविधाः कृत्वोपनामिता अभूवन् । ताश्चाभ्यवहृत्य बोधिसत्त्वः क्रमेण गोचरग्रामे पिण्डाय[2] चरन् वर्णरूपबलवानभूत् । तदग्रेण बोधिसत्त्वः सुन्दरः श्रमणो महाश्रमण इत्याचक्षते ॥

तत्र च भिक्षवः सुजाता ग्रामिकदुहिता बोधिसत्त्वस्य दुष्करचर्यां चरतः आदित एव बोधिसत्त्वस्य व्रततपःसमुत्तारणार्थं शरीर[3]स्याप्याय[4]नहेतोश्च प्रतिदिवसमष्टशतं ब्राह्मणानां भोजयति स्म । एवं च प्रणिदधाति स्म – मम भोजनं भुक्त्वा बोधिसत्त्वोऽनुत्तरां सम्यक्संबोधिमभिसंबुध्येतेति ॥

तस्य मे भिक्षवः षड्वर्षव्यतिवृत्तस्य काषायाणि वस्त्राणि परिजीर्णान्यभूवन् । तस्य मे भिक्षव एतदभूत् – सचेदहं कौपीनप्रच्छादनं लभेयम्, शोभनं स्यात् ॥

तेन खलु पुनर्भिक्षवः समयेन सुजाताया ग्रामिकदुहितुर्दासी राधा नाम कालगताभूत् । सा शाणकैः परिवेष्ट्य श्मशानमपकृष्य परि[5]त्यक्ताभूत् । तदहमेवाद्राक्षीत् पांशु[6]कूलम् । ततोऽहं
R 332 तत्पांशुकूलं वामेन पादेनाक्रम्य दक्षिणं हस्तं प्रसार्यावनतोऽभूत्तद्ग्रहीतुम् ।

L 266 अथ भौमा देवा अन्तरीक्षाणां देवानां घोषमनुश्रावयन्ति स्म – आश्चर्यं मार्षा अद्भुतमिदं मार्षाः । यत्र हि नामैवं महाराजकुलप्रसूतस्य चक्रवर्तिराज्यपरित्यागिनः पांशुकूले चित्तं नतमिति । अन्तरीक्षा देवा भौमानां देवानां शब्दं श्रुत्वा चातुर्महाराजिकानां देवानां घोषमुदीरयन्ति स्म । चातुर्महाराजिका देवाँ[7]स्त्रायत्रिंशतः । त्रायत्रिंशा यामानाम् । यामास्तुषितानाम् । तुषिता निर्माण-
R 333 रतीनाम् । निर्माणरतयः परनिर्मितवशवर्तिनाम् । परनिर्मितवशवर्तिनो यावद् ब्रह्मकायिकानाम् । इति हि भिक्षवस्तत्क्षणं तल्लवं तन्मुहूर्तं यावदकनिष्ठभुवनादेकघोष एकसंनिर्नादो[8]ऽभ्युद्गतोऽभूत् – आश्चर्यमिदं मार्षा अद्भुतमिदम् । यत्र हि नामैवं महाराजकुलप्रसूतस्य चक्रवर्तिराज्यपरित्यागिनः पांशुकूले चित्तं नतमिति ॥

अथ बोधिसत्त्वस्य पुनरप्येतदभवत् – लब्धं मया पांशुकूलम् । सचेदुदकं लभेयम्, शोभनं स्यादिति । ततस्तत्रैव देवता पाणिना महीं पराहन्ति स्म । तत्र पुष्करिणी प्रादुरभूत् । अद्यापि सा पाणिहतेति पुष्करिणी संज्ञायते ॥

पुनरपि बोधिसत्त्वस्यैतदभवत् – लब्धं मया पानीयम् । सचेच्छिलां लभेयम्, यत्रेदं पांशुकूलं प्रक्षालयेयम्, शोभनं स्यात् । अथ[9] तत्रैव शक्रेण शिला तत्क्षणमेवोपनिक्षिप्ताभूत् । ततो बोधिसत्त्वस्तत्पांशुकूलं प्रक्षालयति स्म ॥

अथ शक्रो देवराजो बोधिसत्त्वमेवमाह – ददस्वेदं[10] सत्पुरुष मह्यम् । अहं प्रक्षाल[11]यिष्या-
L 267 मीति । ततो बोधिसत्त्वः स्वयंकारितां प्रव्रज्यायाः संदर्शयितुं तत्पांशुकूलं शक्रस्यादत्वा स्वयमेव प्रक्षालयति स्म । स श्रान्तः क्लान्तकायोऽवतीर्य पुष्करिणीमुत्तरिष्यामीति । मारेण च पापीयसा

---

१ R सर्वे ते for सर्वास्ता. २ R पिण्डानाचरन् for पिण्डाय चरन्. ३ R शरीराप्यायन for शरीरस्याप्यायन°. ४ L °आप्यायतन° for आप्यायन°. ५ R om. परि°. ६ R पाण्डुदुकूलम् for पांशु°. ७ R om. देवाः ८ R एकः सनिर्नादो for एकसंनि°. ९ R om. अथ. १० R दददं for ददस्वेदं. ११ R प्रक्षालयामीति.

ईर्ष्याधर्मपरीतेन पुष्करिण्या अत्युच्छ्रितानि तटानि निर्मितान्यभूवन् । तस्याश्च पुष्करिण्यास्तीरे महान् कुकुभपादपः । तत्र देवतां बोधिसत्त्वो लोकानुवृत्त्या देवतानुग्रहार्थं चाब्रवीत् – आहर[1] देवते वृक्षशाखामिति । तया वृक्षशाखावनामिताभूत् । तां बोधिसत्त्वोऽवलम्ब्योत्तरति स्म । उत्तीर्य[2] च R 334 तस्य ककुभपादपस्याधस्तात्तत्पांशुकूलं संघाटीकृत्य आसीव्यति[3] स्म । अद्यापि तत् पांशुकूलं सीवनमित्येवं संज्ञायते स्म ॥

अथ विमलप्रभो नाम शुद्धावासकायिको देवपुत्रः, स दिव्यानि चीवराणि काषायरङ्गरक्तानि कल्पिकानि[4] श्रमणसारूप्याणि बोधिसत्त्वायोपनामयति स्म । बोधिसत्त्वश्च तानि गृहीत्वा पूर्वाह्णे निवास्य संघाटी[5]प्रावृत्य गोचर[6]ग्रामाभिमुखोऽभूत् ॥

तत्र देवताभिरुरुबिल्वासेनापतिग्रामके नन्दिकग्रामिकदुहितुः सुजाताया आरोचितमभूदर्धरात्रसमये – यदर्थं त्वं महायज्ञं यजसे तस्माद्व्रतादुत्तीर्णः सः । सुभँग[7]मौदारिकमाहारमाहरिष्यति । त्वया च पूर्वं प्रणिधानं कृतम् – मम भोजनं भुक्त्वा बोधिसत्त्वोऽनुत्तरां सम्यक्संबोधिमभिसंबुध्येत[8] इति । यत्ते करणीयं तत्कुरुष्वेति ।

अथ खलु भिक्षवः सुजाता नन्दिकग्रामदुहिता तेषां[9] देवतानां तद्वचनं श्रुत्वा शीघ्रं[10] गोसहस्रस्य क्षीरात्[11]सप्तकृत्सारो[12]द्धृतादग्र्यमोजोमण्डं गृह्णीते स्म । गृहीत्वा च सा तत्क्षीर(मभिनवम)भिनवैस्तण्डुलैरभिनवायां स्थाल्यामभिनवां चुल्लीमुपलिप्य तद्भोजनं साधयति स्म । तस्मिंश्च साध्यमाने इमानि पूर्वनिमित्तानि संदृश्यन्ते स्म – तस्मिन् खल्वपि क्षीरे श्रीवत्सस्वस्तिक- L 268 नन्द्यावर्तपद्मवर्धमानादीनि मङ्गल्यानि संदृश्यन्ते स्म । ततस्तस्या एतदभूत् – यादृशानीमानि पूर्वनिमित्तानि संदृश्यन्ते, निःसंशयमिदं भोजनं भुक्त्वा बोधिसत्त्वोऽनुत्तरां सम्यक्संबोधिं प्राप्स्यति । सामुद्र[13]ज्ञानविधिज्ञश्च नैमित्तिकस्तं प्रदेशं प्राप्तोऽभूत् । सोऽपि तथैवामृताधिगमनमेव व्याकृतवान् । ततः सुजाता तं पायसं पक्वं स्थण्डिलमुपलिप्य पुष्पैरवकीर्य गन्धोदकेनाभ्युक्ष्य आसनं प्रज्ञाप्य R 335 सत्कृत्योत्तरां नाम चेटीमामन्त्रयते स्म – गच्छोत्तरे ब्राह्मणमानय । अहमिदं मधुपायसमवलोकयामि । साध्वार्य इति प्रतिश्रुत्य उत्तरा[14] पूर्वां दिशमगमत् । सा तत्र बोधिसत्त्वं पश्यति स्म । तथैव[15] दक्षिणाम् । बोधिसत्त्वमेव पश्यति स्म । एवं पश्चिमामुत्तरामेव दिशं गच्छति स्म, तत्र तत्र बोधिसत्त्वमेवाद्राक्षीत् । तेन[16] खलु पुनः समयेन शुद्धावासकायिकैर्देवपुत्रैः सर्वेऽन्यतीर्थिका निगृहीता अभूवन् । न कश्चित् संदृश्यते स्म । ततः सा आगत्वा स्वामिनीमेवमाह – न खल्वार्ये अन्यः कश्चिद् दृश्यते श्रमणो वा ब्राह्मणो वा, अन्यत्र यतो[17] यत एव गच्छामि, तत्र तत्र श्रमणमेव सुन्दरं पश्यामि । सुजाता आह – गच्छोत्तरे स एव ब्राह्मणः, स एव श्रमणः । तस्यैवार्थेऽयमारम्भः । तमेवानयेति । साध्वार्ये इत्युत्तरा गत्वा बोधिसत्त्वस्य चरणयोः प्रणिपत्य[18] सुजाताया

---

१ R आह हे देवते for आहर देवते. २ R अवतीर्य for उत्तीर्य. ३ R सीवयति for आसीव्यति. ४ R om. कल्पिकानि. ५ संघट्टी° for संघाटी°. ६ R गोचराभि° for गोचरग्रामाभि°. ७ R शुभम् for सुभगम्. ८ R °संभोत्स्यत for °संबुध्येत. ९ R तासां for तेषां. १० R शीघ्रं once. ११ R क्षीरं for क्षीरात्. १२ R सप्तकृतसारो° for °कृत्सारो°. १३ R सामुद्रिक° for सामुद्र°. १४ R om. उत्तरा. १५ R om. तथैव दक्षिणाम् । बोधिसत्त्वमेव पश्यति स्म. १६ R om. from तेन upto अभूवन्. १७ R यदा for यतो. १८ R निपत्य for प्रणि°.

नाम्नोपनिमन्त्रयते स्म । ततो भिक्षवो बोधिसत्त्वः सुजाताया ग्रामिकदुहितुर्निवेशनं गत्वा प्रज्ञप्त एवासने न्यषीदत् । अथ खलु भिक्षवः सुजाता ग्रामिकदुहिता सुवर्णमयीं पात्रीं मधुपायसपूर्णां[1] बोधिसत्त्वस्योपनामयति स्म ॥

L 269 अथ बोधिसत्त्वस्यैतदभवत् – यादृशमिदं सुजातया भोजनमुपनामितम्, निःसंशयमहमद्यैनं भोजनं[2] भुक्त्वा अनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यते[3] ॥

अथ बोधिसत्त्वस्तद्भोजनं प्रतिगृह्य सुजातां ग्रामिकदुहितरमेतदवोचत् – इयं भगिनि
R 336 सुवर्णपात्री । किं क्रियताम्? सा आह – तवैव भवत्विति । बोधिसत्त्व आह – न ममेदृशेन भाजनेन प्रयोजनम् । सुजाता आह – यथेष्टं क्रियताम् । नाहं विना भाजनेन कस्यचिद्भोजनं प्रयच्छामि ॥

अथ बोधिसत्त्वस्तं पिण्डपात्रमादायोरुबिल्वाया निष्क्रम्य नागनदीं पूर्वाह्णकालसमये नदीं नैरञ्जनामुपसंक्रम्य तं पिण्डपात्रं चीवराणि चैकान्ते निक्षिप्य नदीं नैरञ्जनामवतरति स्म गात्राणि शीतलीकर्तुम् ॥

बोधिसत्त्वस्य खलु पुनर्भिक्षवः स्नायतोऽनेकानि देवपुत्रशतसहस्राणि दिव्यागुरुचन्दनचूर्णविलेपनैर्नदीमालोडयन्ति[4] स्म । दिव्यानि च नानावर्णानि कुसुमानि जले क्षिपन्ति स्म यदुत बोधिसत्त्वस्य पूजाकर्मणे ॥

तेन खलु पुनः समयेन नैरञ्जना नदी दिव्यैर्गन्धैः पुष्पैश्च समाकुला वहति[5] स्म । येन च गन्धोदकेन बोधिसत्त्वः स्नातोऽभूत्, तं देवपुत्रकोटीनियुतशतसहस्राण्यभ्युत्क्षिप्य स्वकस्वकानि भवनानि नयन्ति स्म चैत्यार्थं पूजार्थं च ॥

यानि च बोधिसत्त्वस्य केशश्मश्रूण्यभूवन्, तानि सर्वाणि सुजाता ग्रामिकदुहिता मङ्गल्यानीति कृत्वा[6] चैत्यार्थं पूजार्थं[7] च परिगृह्णीते स्म ॥

L 270 नद्युत्तीर्णश्च बोधिसत्त्वः पुलिनं निरीक्षते स्म उपवेष्टुकामः[8] । अथ या नैरञ्जनायां नद्यां नागकन्या सा धरणितलादभ्युद्गम्य मणिमयं (मनोरमं) भद्रासनं बोधिसत्त्वायोपनामयति
R 337 स्म । तत्र बोधिसत्त्वो निषद्य यावदर्थं तं मधुपायसं परिभुङ्क्ते स्म सुजाताया ग्रामिकदुहितुरनुकम्पामुपादाय । परिभुज्य च तां सुवर्णपात्रीमनपेक्षो वारिणि प्राक्षिपति स्म । क्षिप्तमात्रां च तां सागरो नागराजश्चित्तिकारबहुमानजातो[9] गृहीत्वा स्वभवनाभिमुखः प्रस्थितोऽभूत् पूजार्हेति कृत्वा । अथ दशशतनयनः पुरंदरो गरुडरूपमभिनिर्माय वज्रतुण्डो भूत्वा सागरस्य नागराजस्यान्तिकात्तां सुवर्णपात्रीं हर्तुमारब्धः । यदा न शक्नोति स्म, तदा स्वरूपेणादरेण याचित्वा त्रायत्रिंशद्भवनं नीतवान् पूजार्थं चैत्यार्थं च । नीत्वा पात्रीयात्रां नाम पर्वणि प्रवर्तितवान् । अद्यापि च त्रायत्रिंशेषु देवेषु प्रतिसंवत्सरं पात्रीमहो वर्तते । तच्च भद्रासनं तयैव नागकन्यया परिगृहीतं चैत्यार्थं पूजार्थं च ॥

---

१ R °पायससंपूर्णां for °पायसपूर्णां. २ R om. भोजनं. ३ R संभोत्स्ये for संभोत्स्यते. ४ R आलोकयन्ति for आलोड°. ५ R भवति for वहति. ६ R om. कृत्वा. ७ R om. पूजार्थं च. ८ R उपवेशकामः for °वेष्टु°. ९ R °[illegible]कार° for °चित्ति°.

समन्तरपरिभुक्तश्च भिक्षवो बोधिसत्त्वेनौदारिक आहारः । अथ तत्क्षणमेव बोधिसत्त्वस्य पुण्यबलेन प्रज्ञाबलेन पूर्विका[1] काये शुभवर्णपुष्करता[2] प्रादुरभूत् । द्वात्रिंशच्च महापुरुषलक्षणानि अशीतिश्चानुव्यञ्जनानि व्यामप्रभता[3] च । तत्रेदमुच्यते –

षड्वर्ष व्रत[4] उत्तरित्व भगवान् एवं मतिं चिन्तयन्[5]
सोऽहं ध्यानअभिज्ञज्ञानबलवानेवं कृशाङ्गोऽपि सन् ।
गच्छेयं द्रुमराजमूलविटपं सर्वज्ञतां बुद्धितुं
नो मे स्यादनुकम्पिता हि जनता एवं भवेत् पश्चिमा ॥ २३ ॥

यत्त्वौदारिक भुक्त्व भोजनवरं काये बलं कृत्वना L 271
गच्छेयं द्रुमराजमूलविटपं[6] सर्वज्ञतां बुध्यितुम् । R 338
माँ[7] हैवेत्वरपुण्य देवमनुजा लूहेन ज्ञानेक्षिणो
नो शक्ता[8] सिय बुध्यनाय अमृतं कायेन ते दुर्बलाः ॥ २४ ॥

सा च ग्रामिकधीत पूर्वचरिता नाम्ना सुजाता इति
यज्ञा[9] नित्यु यजाति एवमनसा सिद्ध्ये व्रतं नायके ।
सा देवान निशाम्य चोदन तदा गृह्या मधूपायसं
उपगम्या नदितीरि हृष्टमनसा नैरञ्जनायाः स्थिता ॥ २५ ॥

सो चाकल्पसहस्रचीर्णचरितो शान्तप्रशान्तेन्द्रियो
देवैर्नागगणैर्ऋषी परिवृतो आगत्य नैरञ्जनाम् ।
तीर्णस्तारकु[10] पारसत्त्व मतिमां स्नाने मतिं चिन्तयन्
ओरुह्या नदि स्नापि शुद्धविमलो लोकानुकम्पी मुनिः ॥ २६ ॥

देवा कोटिसहस्र हृष्टमनसा गन्धाम्बु[11] चूर्णानि च
ओरुह्या नदि लोडयन्ति सलिलं स्नानार्थ सत्त्वोत्तमे ।
स्नाना स्नात्वेन[12] बोधिसत्त्व विमलस्तीरे स्थितः सूरतः
हर्षुर्देवसहस्र स्नानसलिलं पूजार्थ सत्त्वोत्तमे ॥ २७ ॥ R 339

काषायानि च वस्त्र निर्मल शुभा ता देवपुत्रो ददे
कल्पीयानि च संनिवास्य भगवांस्तीरे हि नद्याः स्थितः ।
नागाकन्य उदग्र हृष्टमनसा भद्रासनं सा न्यपीत्
यत्रासौ निषसाद शान्तमनसो लोकस्य चक्षुष्करः ॥ २८ ॥

---

१ R पूर्विकक्कायशुभ° for पूर्विका काये शुभ°. २ R पुष्करतया for °रता. ३ R व्योमप्रभाश्च for व्यामप्रभता च. ४ R °व्रततप for व्रत. ५ R चिन्तयेत्. ६ R °विटपी. ७ आहैवं for मा हैवे°. ८ R शक्तासि य for शक्ता सिय. ९ R यज्ञं नित्यं for यज्ञा नित्यु. १० R तीर्णस्था च कुमारसतत्त्व for तीर्णस्तारकु पारसत्त्व. ११ R गत्वानि for गन्धाम्बु. १२ R स्नात्वा for स्नात्वेन.

दत्वा भोजनु सा[1] सुजात मतिमां स्वर्णामये भाजने
वन्दित्वा चरणानि सा प्रमुदिता परिभुङ्क्ष्व मे सारथे ।
L. 272 भुक्त्वा भोजनु यावदर्थ मतिमान् पात्रीं जले प्राक्षिपत्
तां जग्राह पुरंदरः सुरगुरुः पूजां करिष्याम्यहम् ॥ २९ ॥

यद भुक्तं च जिनेन भोजनवरं ओदारिकं तत्क्षणे
तस्या कायबलं च तेजशिरिया पूर्वं यथा संस्थितम् ।
धर्मा कृत्व कथा सुजात मरुणां कृत्वा च अर्थं बहुं
सिंहो हंसगतिर्गजेन्द्रगमनो बोधिद्रुमं संस्थितः[2] ॥ ३० ॥

॥ इति श्रीललितविस्तरे नैरञ्जनापरिवर्तो नामाष्टादशमोऽध्यायः ॥

१ R om. सा. २ R प्रस्थितः for संस्थितः.

# १९

## बोधिमण्डगमनपरिवर्त एकोनविंशः ।

इति हि भिक्षवो बोधिसत्त्वो नद्यां नैरञ्जनायां स्नात्वा च भुक्त्वा कायबलस्थाम संजनय्य L 273
येन षोडशाकारसंपन्नपृथिविप्रदेशो महाबोधिद्रुमराजमूलं तेन प्रतस्थे विजयया[1] तया च R 340
गत्या, यासौ महापुरुषाणां गतिरनुच्चलित[2]गतिरिन्द्रियेष्टिगतिः सुसंस्थितगतिः मेरुराजगतिरजिह्मगतिरकुटिलगतिरनुपद्रुतगतिरविलम्बितगतिरलुडितगतिरस्खलितगतिरसंघटित[3]गतिरलीनगतिरचपलगतिः सलीलगतिः विमलगतिः शुभगतिरदोषगतिरमोहगतिररक्तगतिः सिंहगतिः हंसराजगतिर्नागराजगतिर्नारायणगतिः धरणितलासंसृष्टगतिः सहस्रारचक्रधरणीतलचित्रगतिः जालाङ्गुलिताम्रनखगतिः धरणीतलनिर्नादगतिः शैलराजसंघटनगतिः उत्कूलनिकूलसमकरचरणगतिः जालान्तरा[4]भारश्म्युत्सर्जनसत्त्वसंस्पृशनसुगतिगमनगतिः विमलपद्मक्रमनिक्षिपण[5]गतिः पूर्वशुभसुचरितगमनगतिः पूर्वबुद्धसिंहाभिगमनगतिः वज्रदृढामेद्याशयगतिः (सर्वापायगतिः) सर्वापायदुर्गतिपिथितगतिः सर्वसत्त्व[6]सुखसंजननगतिः मोक्षपथसंदर्शनगतिः मारबलाबलकरण[7]गतिः कुगणिगणपरप्रवादिसहधर्मनिग्रहणगतिः । तमः[8]पटलक्लेशविधमनगतिः संसारपक्षापक्षकरणगतिः शक्रब्रह्ममहेश्वरलोकपालाभिभवगतिः त्रिसाहस्रमहासाहस्रैकशूरगतिः स्वयंभ्वनभि[9]भूतगतिः सर्वज्ञज्ञानाभिगमनगतिः स्मृतिमतिगतिः सुगतिगमनगतिः जरामरण- R 341
प्रशमनगतिः शिवविरजामलाभयनिर्वाणपुरगमनगतिः । ईदृश्या गत्या बोधिसत्त्वो बोधिमण्डं संप्रस्थितोऽभूत् ॥

इति हि भिक्षवो यावच्च नद्या नैरञ्जनाया यावच्च बोधिमण्डादेस्तस्मिन्[10]न्तरे वातबलाहकैर्देवपुत्रैः संमृष्टम्[11]भूत् । वर्षबलाहकैर्देवपुत्रैर्गन्धोदकेन सिक्तमभूत् पुष्पैश्चावकीर्णमभूत् । यावदेव त्रिसाहस्रमहासाहस्र[12]लोकधातौ वृक्षास्ते सर्वे येन बोधिमण्डस्तेनाभिनताग्रा अभूवन् । येऽपि च तदहोजाता बालदारिकास्तेऽपि बोधिमण्डशीर्षकाः स्वपन्ति स्म । येऽपि चेह त्रिसाहस्रमहासाहस्रलोकधातौ सुमेरुप्रमुखाः पर्वतास्तेऽपि सर्वे येन बोधिमण्डस्तेन[13] प्रणता अभूवन् । नदीं च नैरञ्जनामुपादाय यावद्बोधिमण्डोऽस्मिन्नन्तरे कामावचरैर्देवपुत्रैः क्रोशविस्तारैकप्रमाणो मार्गोऽभिव्यूहितोऽभूत् । तस्य च मार्गस्य वामदक्षिणयोः पार्श्वयोः सप्तरत्नमयी वेदिका अभिनिर्मिताऽभूत् । सप्ततालानुच्चैस्त्वेन उपरिष्टाद्रत्नजालसंछन्ना दिव्यछत्रध्वजपताकासमलंकृता इषुक्षेपे सप्तरत्नमयास्ताला अभिनिर्मिता अभूवन् तस्या वेदिकाया अभ्युद्गताः[14] । सर्वस्माच्च तालाद्रत्नसूत्रा[15] द्वितीये तालमवसक्तमभूत् । द्वयोश्च तालयोर्मध्ये पुष्करिणी मापिताभूत् गन्धोदकपरिपूर्णा L 274
सुवर्णवालिकासंस्तृता उत्पलपद्मकुमुदपुण्डरीकसंछन्ना रत्नवेदिकापरिवृता वैदूर्यमणिरत्नसोपान- R 342

१ R विजयाय for विजयया. २ R अनुच्चारित° for °च्चलित°. ३ R °संघट्टित° for °संघटित°. ४ R जालाकरा° for जालान्तरा°. ५ R °निक्षपण° for °निक्षिपण°. ६ R om. °सत्त्व°. ७ R °बलापकरण for °बलाबलकरण°. ८ R कर्मपटल° for तमःपटल°. ९ R स्वयंभूरभि° for स्वयंभ्वनभि°. १० R °मण्डादेतस्मिन् for °मण्डादेस्तस्मिन्. ११ R संसृष्टम् for संमृष्टम्. १२ R om. °महासाहस्र°. १३ R om. तेन. १४ R अभ्युद्गतानि for °द्गताः. १५ R रत्नसूत्रात् for °सूत्रा.

प्रत्युप्ता आडिबलाका[1]हंसचक्रवाकमयूरोपकूजिता । तं च मार्गमशीत्यप्सरःसहस्राणि गन्धोदकेन सिञ्चन्ति स्म । अशीत्यप्सरःसहस्राणि मुक्तकुसुमैरभ्यवकिरन्ति स्म दिव्यैर्गन्धवद्भिः । सर्वस्य च तालवृक्षस्य पुरतो रत्नव्योमकः संस्थितोऽभूत् । सर्वस्मिंश्च रत्नव्योमके अशीत्यप्सरःसहस्राणि चन्दनागुरुचूर्णकपुटापरिगृहीतानि कारानुसारिधूपघटिकापरिगृहीतानि स्थितान्यभूवन् । सर्वस्मिंश्च रत्नव्योमके पञ्चपञ्चाप्सरःसहस्राणि दिव्यसंगीतिसंप्रवादितेन स्थितान्यभूवन् ॥

इति हि भिक्षवो बोधिसत्त्वः प्रकम्प्यमानैः[2] क्षेत्रै रश्मिकोटीनियुतशतसहस्राणि निश्चारयंस्तूर्यशतसहस्रैः प्रवाद्यमानैः, महता पुष्पाढ्येन प्रवर्षता, अम्बर[3]शतसहस्रैर्भ्राम्यमानैः, दुन्दुभिशतसहस्रैः पराहन्यमानैः, गर्जद्भिः प्रगर्जद्भिः हयगजवृषभैः, प्रदक्षिणीकुर्वद्भिः शुकसारिकाकोकिलकलविङ्कजीवंजीवकहंसक्रोञ्चमयूरचक्रवाकशतसहस्रैः, उपनाम्यमानैः मङ्गल्यशतसहस्रैः । अनेनैवंरूपेण मार्गव्यूहेन बोधिसत्त्वो बोधिमण्डं गच्छति स्म । यां च रात्रिं बोधिसत्त्वो बोधिमभिसंबोद्धुकामोऽभूत्, तामेव रात्रिं वशवर्ती नाम त्रिसाहस्रमहासाहस्राधिपतिर्ब्रह्मा सहांपति[4]र्ब्रह्म[5]पर्षदमामन्त्र्यैवमाह — यत्खलु मार्षा जानीयाः । एष स बोधिसत्त्वो महासत्त्वो R 343 महासंनाहसंनद्धो महाप्रतिज्ञा[6]नुत्सृष्टो दृढसंनाहसंनद्धोऽपरिखिन्नमानसः सर्वबोधिसत्त्वचर्यासु[7] निर्जातः सर्वपारमितासु पारंगतः सर्वबोधिसत्त्वभूमिषु वशिताप्राप्तः सर्वबोधिसत्त्वाशयसुविशुद्धः सर्वसत्त्वे- L 275 न्द्रियेष्वनुगतः सर्वतथागतगुह्यस्थानेषु सुप्रविष्टः सर्वमारकर्मपथसमतिक्रान्तः सर्वकुशलमूलेष्वपरप्रत्ययः सर्वतथागतैरधिष्ठितः सर्वसत्त्वेषु प्रमोक्षमार्गदेशयिता महासार्थवाहः । सर्वमारमण्डलविध्वंसनकरः त्रिसाहस्रमहासाहस्रैकशूरः । सर्वधर्मभैषज्यसमुदानीतः महावैद्यराजः । विमुक्तिपट्टाबद्धो महाधर्मराजः । महाप्रज्ञाप्रभोत्सर्जनकरः महाकेतुराजः अष्टलोकधर्मानुपलिप्तः महापद्मभूतः सर्वधर्मधारण्यसंप्रमुषितः[8] महासागरभूतः अनुनयप्रतिघापगतः अचलोऽप्रकम्पी महासुमेरुभूतः । सुनिर्मलः सुपरिशुद्धः स्ववदर्पित[9]विमल[10]बुद्धिर्महामणिरत्नभूतः सर्वधर्मवशवर्ती सर्वकर्मण्यचित्तो महाब्रह्मभूतो बोधिसत्त्वो बोधिमण्डमुपसंक्रमति मारसैन्यप्रधर्षणार्थमनुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामः । दशबलवैशारद्याष्टादशावेणिकबुद्धधर्मपरिपूरणार्थं महाधर्मचक्रप्रवर्तनार्थं महासिंहनादनादनार्थं सर्वसत्त्वान् धर्मदानेन संतर्पणार्थं सर्वसत्त्वानां धर्मचक्षुर्विशोधनार्थं सर्वपरप्रवादीनां सहधर्मेण निग्रहार्थं पूर्वप्रतिज्ञापारिपूरिसंदर्शनार्थं सर्वधर्मैश्वर्यवशिताप्राप्त्यर्थम् । तत्र युष्माभिर्मार्षा सर्वैरेव बोधिसत्त्वस्य पूजोपस्थानकर्मण्युत्सुकैर्भवितव्यम् ।

R 344 अथ खलु वशवर्ती महाब्रह्मा तस्यां वेलायामिमां[11] गाथामभाषत —

यस्या तेजं[12]तु पुण्यतश्च शिरिये ब्राह्मः पथो ज्ञायते
मैत्री वा करुणा उपेक्ष मुदिता ध्यानान्यभिज्ञा[13]स्तथा ।

---

१ R° बलाहक्का° for °बलाका°. २ R प्रकम्पमानैः. ३ R अप्सर° for अम्बरशत°. ४ R सहांपति for सहांपतिं°. ५ R om. °ब्रह्म°. ६ R °प्रतिज्ञानुस्मृतो for °ज्ञानुत्सृष्टो. ७ R °चर्यासुनिर्जातः for °चर्यासु निर्यातः. ८ R °धारण्या संमुखितः for °धारण्यसंप्रमुषितः. ९ R सर्ववलयित° for स्ववदर्पित°. १० R om. विमल°. ११ R इमा गाथा for इमां गाथाम्. १२ R तेजेन for तेजतु. १३ R अभिज्ञातया for अभिज्ञास्तथा.

सोऽयं कल्पसहस्रचीर्णचरितो बोधिद्रुमं प्रस्थितः
पूजां साधु करोथ तस्य मुनिनो[1] आशिव्रते साधनाम् ॥ १ ॥
यं गत्वा शरणं न दुर्गतिभयं प्राप्नोति नैवाक्षणं
देवेष्विष्टसुखं च प्राप्य विपुलं ब्रह्मालयं गच्छति।
षड्वर्षाणि चरित्व दुष्करचरिं यात्येष बोधिद्रुमं L 279
साधू सर्वि उदग्रहृष्टमनसः पूजास्य कुर्वामहे ॥ २ ॥

राजासौ त्रिसहस्त्रि[2] ईश्वरवरो धर्मेश्वरः पार्थिवः
शक्राब्रह्मपुरे च चन्द्रसुरिये नास्त्यस्य कश्चित् समः।
यस्या जायत[3] क्षेत्रकोटिनयुता संकम्पिता षड्विधा
सैषोऽद्य व्रजते महाद्रुमवरं मारस्य जेतुं चमून् ॥ ३ ॥

मूर्ध्न[4] यस्य न शक्यमीक्षितुमिह ब्रह्मालयेऽपि स्थितैः
कायो यस्य वराग्रलक्षणधरो द्वात्रिंशतालंकृतः।
वाग्यस्येह मनोज्ञवल्गुमधुरा ब्रह्मस्वरा सुस्वरा
चित्तं यस्य प्रशान्त दोषरहितं गच्छाम तत्पूजने ॥ ४ ॥

येषां वा मति ब्रह्मशक्रभवने नित्यं सुख क्षेपितुं[5] R 345
अथवा सर्वकिलेशबन्धनलतां छेत्तुं हि तां जालिनीम्।
अश्रुत्वा परतः स्पृशेयममृतं प्रत्येकबोधिं शिवां
बुद्धत्वं यदि वेप्सितं[6] त्रिभुवने पूजेत्वसौ नायकम् ॥ ५ ॥

त्यक्ता येन ससागरा वसुमती रत्नान्यनन्तान्यथो
प्रासादाश्च गवाक्षहर्म्यकलिका युग्यानि यानानि च।
भूम्यालंकृत पुष्पदाम रुचिरा उद्यानकूपासराः
हस्ता पादशिरोत्तमाङ्गनयना सो बोधिमण्डोन्मुखः ॥ ६ ॥

इति हि भिक्षवस्त्रिसाहस्रमहासाहस्त्रिको महाब्रह्मा इमं त्रिसाहस्रमहासाहस्रं लोकधातुं तत्क्षणं सममभ्यतिष्ठत्। पाणितलजातमपगतशर्करकठल्ल[7]मुत्सदमणिर्मुक्तिवैडूर्य[8]शङ्खशिलाप्रवालरजतजातरूप्यं नीलमृदुकुण्डलजातप्रदक्षिणनन्द्यावर्तकाचिलिन्दिकसुखसंस्पर्शैश्च तृणैरिमं त्रिसाहस्रमहासाहस्रं लोकधातुं संछादितमभ्यतिष्ठत्। सर्वे च तदा महासमुद्रा धरणीतलसंस्थिता अभूवन्। L 277
न च जलचराणां सत्त्वानां कौचिद्विहेठा[9]भूत्। इमं चैव लोकधातुमलंकृतं दृष्ट्वा च दशसु दिक्षु शक्रब्रह्मलोकपालैर्बोधिसत्त्वस्य पूजाकर्मणे बुद्धक्षेत्रशतसहस्राणि समलंकृतान्यभूवन्। R 346
बोधिसत्त्वैश्च दिव्यमानुष्यकातिक्रान्तैः पूजाव्यूहैर्दशसु दिक्ष्वप्रमेयाणि बुद्धक्षेत्राणि प्रतिमण्डितान्य-

१ R मुनिना आशाव्रते for मुनिनो आशिव्रते. २ R त्रिसहस्र. ३ R जाते for जायत. ४ R मूर्ध्नि for मूर्ध्न. ५ R क्षयितुं for क्षेपितु. ६ R वेल्लितं for वेप्सितं. ७ R °कठिल्ल° for °कठल्ल°. ८ R °मुक्तावज्रवैदूर्य° for °मुक्तिवैडूर्य°. ९ R काश्चिद्विहेठा for काचिद्विहेठा.

भूवन् बोधिसत्त्वस्य पूजाकर्मणे। सर्वाणि च तानि बुद्धक्षेत्राण्येकमिव[1] बुद्धक्षेत्रं[2] संदृश्यन्ते स्म, नानाव्यूहालंकारालंकृतानि च। न च भूयो लोकान्तरिका न च कालपर्वता न च चक्रवाल-महाचक्रवालाः प्रज्ञायन्ते स्म। सर्वाणि च तानि बुद्धक्षेत्राणि बोधिसत्त्वस्याभया स्फुटानि संदृश्यन्ते स्म। षोडश च बोधिमण्डपरिपालिका देवपुत्राः। तद्यथा – उत्खली च नाम देवपुत्रः सूत्खली च नाम प्रजापतिश्च शूरबलश्च केयूरबलश्च सुप्रतिस्थितश्च महिंधरश्च अवभासकरश्च विमलश्च धर्मेश्वरश्च[3] धर्मकेतुश्च सिद्धपात्रश्च अप्रतिहतनेत्रश्च महाव्यूहश्च शीलविशुद्धनेत्रश्च पद्मप्रभश्च। इतीमे षोडश बोधिमण्डप्रतिपालका देवपुत्राः सर्वेऽवैवर्त्यक्षान्तिप्रतिलब्धास्ते बोधिसत्त्वस्य पूजार्थं बोधिमण्डं मण्डयन्ति स्म। समन्तादशीतियोजनानि सप्तभी[4] रत्नवेदिकाभिः परिवृतं सप्तभिस्तालपङ्क्तिभिः सप्तभी[4] रत्नकिङ्किणीजालैः सप्तभी[4] रत्नसूत्रैः परिवृतम्, सप्तरत्नप्रत्युप्तैश्च जाम्बूनदसुवर्णपटैः सुवर्णसूत्रैर्जाम्बूनदसुवर्णपद्मैश्चावकीर्णं सारवरगन्धनिर्धूपितं रत्नजालसंछन्नम्। ये च दशसु दिक्षु नानालोकधातुषु विविधा वृक्षाः सन्त्यभिजाता अभिपूजिता[5] दिव्यमानुष्यकास्तेऽपि सर्वे तत्र

L 278 बोधिमण्डे संदृश्यन्ते स्म। याश्च दशसु दिक्षु नानाप्रकारा जलस्थलजाः पुष्पजातयस्ता अपि

R 347 सर्वास्तत्र बोधिमण्डे संदृश्यन्ते स्म। येऽपि च दशसु दिक्षु नानालोकधातुषु बोधिसत्त्वा बोधिमण्डालंकुर्वन्त्यप्रमाणपुण्यज्ञानसंभारव्यूहैस्तेऽपि तत्र बोधिमण्डे संदृश्यन्ते स्म॥

इति हि भिक्षवो बोधिमण्डपरिपालकैर्देवपुत्रैस्तादृशा व्यूहा बोधिमण्डे अभि[6]निर्मिता अभूवन्, यान् दृष्ट्वा देवनागयक्षगन्धर्वासुराः स्वभवनानि श्मशानसंज्ञामुत्पादयामासुः। तांश्च व्यूहान् दृष्ट्वात्यर्थं चित्रीकारमुत्पादयामासुः। एवम्[7]उदानं चोदानयामासुः – साध्वहोऽचिन्त्यः पुण्यविपाकनिष्यन्द इति। चत्वारश्च बोधिवृक्षदेवताः। तद्यथा – वेणुश्च वल्गुश्च सुमनश्च ओजापतिश्च। एते चत्वारो बोधिवृक्षदेवता बोधिसत्त्वस्य पूजार्थं बोधिवृक्षं[8] मापयन्ति स्म मूलसंपन्नं स्कन्धसंपन्नं शाखापत्रपुष्पफलसंपन्नं आरोहपरिणाहसंपन्नं प्रासादिकं दर्शनीयं विस्तीर्णम्[9]अशीतिस्तालानुच्चैस्त्वेन तदनुरूपेण परिणाहेन चित्रं दर्शनीयं मनोरमं सप्तभी रत्नवेदिकाभिः परिवृतं सप्तभी रत्नतालपङ्क्तिभिः सप्तभी रत्नकिङ्किणीजालैः सप्तभी रत्नसूत्रैः समन्तादनुपरिवृतैर्[10]अनुपरिक्षिप्तं[11] पारिजातककोविदारप्रकाशमतृप्तचक्षुर्दर्शनम्। स च पृथिवीप्रदेशस्त्रिसाहस्रमहासाहस्रलोकधातु-वज्रेणाभिदृढः सारोऽभेद्यवज्रमयः संस्थितोऽभूत् यत्र बोधिसत्त्वो निषण्णोऽभूद्बोधिमभिसंबोद्धुकामः॥

R 348 इति हि भिक्षवो बोधिसत्त्वेन बोधिमण्डमुपसंक्रमता तथारूपा कायात्प्रभा मुक्ताभूत्, यया प्रभया सर्वेऽपायाः शान्ता अभूवन्। सर्वाण्यक्षणानि[12] पिथितान्यभूवन्। सर्वदुर्गतिवेदनाश्चोप-

L 279 शोषिता अनुभवन्। ये च सत्त्वा विकलेन्द्रिया अभूवन्, ते सर्वे परिपूर्णेन्द्रियतामनुप्राप्नुवन्। व्याधिताश्च व्याधिभ्यो व्यमुच्यन्त। भयार्दिताश्चाश्वासप्राप्ता अभूवन्। बन्धनबद्धाश्च बन्धनेभ्यो व्यमुच्यन्त। दरिद्राश्च सत्त्वा भोगवन्तोऽभूवन्। क्लेशसंतप्ताश्च[13] निष्परिदाहा[14] अभूवन्।

---

१ R एकस्मिन्नैव for एकमिव. २ R om. बुद्धक्षेत्रं. ३ R धर्मचरश्च for धर्मेश्वरश्च. ४ R सह्यरत्न° for सप्तभी रत्न°. ५ R om. अभिपूजिता. ६ R °मण्डाभि° for °मण्डे अभि°. ७ R om. एवम्. ८ R °वृक्ष-माययन्ति for °वृक्षं मापयन्ति. ९ R om. विस्तीर्णम्. १० R समनुपरिवृतं for अनुपरिवृतैः. ११ R om. अनुपरिक्षिप्तं. १२ R अक्षराणि for अक्षणानि. १३ R क्लेशतप्ताः for क्लेशसंतप्ता. १४ R °दाहका for °दाह.

बुभुक्षिताश्च सत्त्वाः पूर्णोदरा अभूवन् । पिपासिताश्च तृषापगता अभूवन् । गुर्विण्यश्च सुखेन प्रसूयन्ते स्म । जीर्णदुर्बलाश्च बलसंपन्ना अभूवन् । न च कस्यचित्सत्त्वस्य तस्मिन् समये रागो बाधते द्वेषो वा मोहो वा क्रोधो वा लोभो वा खिलो वा व्यापादो वा ईर्ष्या वा मात्सर्यों वा । न कश्चित्सत्त्वस्तस्मिन् समये म्रियते स्म, न च्यवते स्म, नोपपद्यते स्म । सर्वसत्त्वाश्च तस्मिन् समये मैत्रचित्ता हितचित्ताः परस्परं मातापितृसंज्ञिनोऽभूवन् ॥

तत्रेदमुच्यते —

यावच्चावीचिपर्यन्तं नरका घोरदर्शनाः ।
दुःखं प्रशान्तं सत्त्वानां सुखं विन्दन्ति वेदनाम् ॥ ७ ॥
तिर्यग्योनिषु यावन्तः सत्त्वा अन्योन्यघातकाः ।
मैत्रचित्ता हिते[2] जाताः स्पृष्टा[3] भाभिर्महामुनेः ॥ ८ ॥
प्रेतलोकेषु यावन्तः प्रेताः क्षुत्तर्षपीडिताः ।
प्राप्नुवन्त्यन्नपानानि बोधिसत्त्वस्य तेजसा ॥ ९ ॥
अक्षीणाः[4] पिथिताः सर्वे दुर्गतिश्चोपशोषिता । R 349
सुखिताः सर्वसत्त्वाश्च दिव्यसौख्यसमर्पिताः ॥ १० ॥
चक्षुश्रोत्रविहीनाश्च ये चान्ये विकलेन्द्रियाः ।
सर्वेन्द्रियैः सुसंपूर्णा जाताः सर्वाङ्गशोभनाः ॥ ११ ॥
रागद्वेषादिभिः क्लेशैः सत्त्वा बाध्यन्त ये सदा । L 280
शान्तक्लेशास्तदा सर्वे जाताः सुखसमर्पिताः ॥ १२ ॥
उन्मत्ताः स्मृतिमन्तश्च दरिद्रा धनिनस्तथा ।
व्याधिता रोगनिर्मुक्ता मुक्ता बन्धनबद्धकाः ॥ १३ ॥
न खिलं न च मात्सर्यं व्यापादो न च विग्रहः ।
अन्योन्यं संप्रकुर्वन्ति मैत्रचित्ताः स्थितास्तदा ॥ १४ ॥
मातुः पितुश्चैकपुत्रे यथा प्रेम प्रवर्तते ।
तथान्योन्येन सत्त्वानां पुत्रप्रेम तदाभवत् ॥ १५ ॥
बोधिसत्त्वप्रभाजालैः स्फुटाः क्षेत्रा ह्यचिन्तियाः ।
गङ्गावालिकसंख्याताः समन्ताद्वै दिशो दश ॥ १६ ॥
न भूयश्चक्रवालाश्च दृश्यन्ते कालपर्वताः ।
सर्वे ते विपुलाः क्षेत्राः दृश्यन्त्येकं यथा तथा ॥ १७ ॥
पाणितलप्रकाशाश्च दृश्यन्ते सर्वरत्निकाः ।
बोधिसत्त्वस्य पूजार्थं सर्वक्षेत्रा अलंकृताः ॥ १८ ॥ R 350

---

१ R क्षिप्रं विहन्ति for सुखं विन्दन्ति. २ R हितचित्ता for हिते जाताः. ३ R जाता for स्पृष्टा. ४ R अक्षराः.

देवाश्च षोडश तथा बोधिमण्डोपचारकाः ।
अलंचक्रुर्बोधिमण्डं अशीतिर्योजना[1]वृतम् ॥ १९ ॥

ये च केचिन्महाव्यूहाः क्षेत्रकोटीष्वनन्तकाः ।
ते सर्वे तत्र दृश्यन्ते बोधिसत्त्वस्य तेजसा ॥ २० ॥

देवा नागास्तथा यक्षाः किन्नराश्च महोरगाः ।
स्वानि स्वानि विमानानि श्मशानानीव मेनिरे ॥ २१ ॥

तान् व्यूहान् संनिरीक्ष्येह विस्मिताः सुरमानुषाः ।
साधुः पुण्यस्य निस्यन्दः संपद्यस्येयमीदृशी ॥ २२ ॥

L 281 करोति नैव[2] चोद्योगं कायवाङ्मनसा तथा ।
सर्वार्थाश्चास्य सिध्यन्ति येऽभिप्रेता मनोरथाः[3] ॥ २३ ॥

अभिप्राया यथान्येषां पूरिताश्चरता पुरा ।
विपाकाः कर्मणस्तस्य संपद्याते[4]यमीदृशी ॥ २४ ॥

अलंकृतो बोधिमण्डश्चतुर्भिर्बोधिदेवतैः ।
पारिजातो दिवि यथा तस्मादपि विशिष्यते ॥ २५ ॥

गुणाः शक्या न ते वाचा सर्वे संपरिकीर्तितुम् ।
ये व्यूहा बोधिमण्डस्य देवतैरभिसंस्कृताः ॥ २६ ॥

इति हि भिक्षवस्तया बोधिसत्त्वस्य कायप्रमुक्तया प्रभया कालिकस्य नागराजस्य
R 321 भवनमवभासितमभूत् विशुद्धया विमलया कायचित्तप्रह्लादौद्बिल्यजनन्या सर्वक्लेशापकर्षिण्या सर्वसत्त्वसुखप्रीतिप्रसादप्रामोद्यजनन्या । दृष्ट्वा च पुनः कालिको नागराजस्तस्यां वेलायां स्वस्य परिवारस्य पुरतः स्थित्वेमा गाथा अभाषत् —

ककुछन्दे यथ आभ दृष्ट रुचिरा दृष्टा च कनकाह्वये
यद्वत्काश्यपि[5] धर्मराजमनघे दृष्टा प्रभा निर्मला ।
निःसंशयं वरलक्षणो हितकरो उत्पन्न ज्ञानप्रभो
येनेदं भवनं विरोचति हि मे स्वर्णप्रभालंकृतम् ॥ २७ ॥

नास्मिं चन्द्ररविप्रभा सुविपुला संदृश्यते वेश्मनि
नो चाग्नेर्न मणेर्न विद्युदमला नो च प्रभा ज्योतिषाम् ।
नो वा शक्रप्रभा न ब्रह्मण प्रभा नो च प्रभा आसुरी
एकान्तं तमसाकुलं मम गृहं प्राग्दुष्कृतैः[6] कर्मभिः ॥ २८ ॥

---

१ R योजनायतम् for योजनावृतम्. २ R चैव नोद्योगं for नैव चोद्योगं. ३ R मनोरमाः for °रथाः. ४ R संपज्जातेयम् for °द्यातेयम्. ५ R [illegible]. ६ R प्रादुष्कृतैः for प्राग्दुष्कृतैः.

अद्येदं भवनं विराजति शुभं मध्ये रविर्दीप्तिवत् L 282
चित्तं[1] प्रीति जनेति कायु सुखितो गात्राद्धुता शीतला ।
तस्मा वालिके[2] या शरीरि निपती जाता स मे शीतला
सुव्यक्तं बहुकल्पकोटिचरितो बोधिद्रुमं गच्छति ॥ २९ ॥

शीघ्रं गृह्णत नागपुष्प रुचिरा वस्त्रां सुगन्धां शुभां R 352
मुक्ताहारपिनद्धतांश्च वलयांश्चूर्णानि धूपोत्तमा ।
संगीतिं प्रकुरुध्व वाद्य विविधा भेरीमृदङ्गैः शुभैः
हन्ता गच्छथ पूजना हितकरं पूजार्ह सर्वे जगे ॥ ३० ॥

सोऽभ्युत्थाय च नागकन्यसहितश्चतुरो दिशः प्रेक्षते
अद्राक्षीदथ मेरुपर्वतनिभं स्वालंकृतं तेजसा ।
देवैर्दानवकोटिभिः परिवृतं ब्रह्मेन्द्रयक्षैस्तथा
पूजां तस्य करोन्ति हृष्टमनसो दर्शेन्ति मार्गो ह्ययम् ॥ ३१ ॥

संहृष्टः स हि नागराट् सुमुदितश्चाभ्यर्च्य लोकोत्तमं
वन्दित्वा चरणौ च गौरवकृतस्तस्थौ मुनेरग्रतः ।
नागाकन्य उदग्र हृष्टमनसः कुर्वन्ति पूजां मुनेः
पुष्पं गन्धविलेपना च क्षिपिषुस्तूर्याणि निर्नादयन् ॥ ३२ ॥

कृत्वा चाञ्जलि नागराट् सुमुदितस्तुष्टाव तथ्यैर्गुणैः
साधुर्दर्शितु पूर्णचन्द्रवदने लोकोत्तमे नायके ।
यथ मे दृष्ट निमित्त पूर्वऋषिणां पश्[3]यामि तानेव ते
अद्य त्वं विनिहत्य मारबलवानिष्टं पदं लप्स्यसे ॥ ३३ ॥ R 353

यस्यार्थे दमदानसंयम पुरे सर्वा[4] ति त्यागी अभूत्
यस्यार्थे दमशीलमैत्रकरुणाक्षान्तिबलं भावितम् ।
यस्यार्थे दम[5]वीर्यध्याननिरतः प्रज्ञाप्रदीपः कृतः L 283
सैषा ते परिपूर्ण सर्व प्रणिधी अद्या जिनो भेष्यसे ॥ ३४ ॥

यद्[6]द्वृक्ष सपत्रपुष्प सफला बोधिद्रुमं संनताः
यद्वत्कुम्भसहस्र पूर्णसलिला कुर्वन्ति प्रादक्षिणम् ।
यद्वच्चाप्सरगणाश्च संप्रमुदिता स्निग्धं रुतं कुर्वते
हंसा क्रौञ्चगणा यथा च गगने गच्छन्ति लीलाँन्वितं[7]
कुर्वन्ते सु[8]र्मनाः प्रदक्षिणमृषिं भावि त्वमद्यार्हवान् ॥ ३५ ॥

---

१ R चित्ते for चित्तं. २ R वालुकया for वालिकया. ३ R पश्याम तानैव मे for पश्यामि तानेव ते. ४ R सर्वास्थि for सर्वा ति. ५ R दृढवीर्य for दम°. ६ R यद् वृक्ष for यद्वद् वृक्ष. ७ R लीलान्वितः for °न्वितं. ८ R सुखिना for सुर्मनाः.

यथ वा काञ्चनवर्ण आभ रुचिरा क्षत्राशता[1] गच्छते
शान्ताश्चापि यथा अपाय निखिला दुःखैर्विमुक्ता प्रजाः ।
यद्वद्दृष्टित चन्द्रसूर्यभवना वायुर्मृदुर्वायते
अद्या भेष्यसि सार्थवाहु त्रिभवे जातीजरामोचको ॥ ३६ ॥

यद्वत्कामरती विहाय च सुरास्त्वत्पूजनेऽभ्यागताः
ब्रह्मा ब्रह्मपुरोहिताश्च अमरा उत्सृज्य ध्यानं सुखम् ।
ये केचित्त्रिभवे तथैव च पुरे सर्वे इहाभ्यागताः
अद्या भेष्यसि वैद्यराजु त्रिभवे जातीजरामोचको ॥ ३७ ॥

R 354 मार्गश्चापि यथा विशोधितु सुरैर्येनाद्य त्वं गच्छसे
एतेनागतु क्रकुच्छन्दु भगवान् कनकाह्वयः काश्यपः ।
यथ वा पद्म विशुद्ध निर्मल शुभा भित्त्वा महीमुद्गताः
यस्मिं निक्षिपसे[2] क्रमानतिबलां भावि त्वमद्यार्हवान् ॥ ३८ ॥

माराः कोटिसहस्र नेकनयुता गङ्गा यथा वालिकाः
ते तुभ्यं न समर्थ बोधिविटपाच्चालेतु कम्पेतु वा ।
L 284 यज्ञा नैकविधाः सहस्रनयुता गङ्गा यथा वालिकाः
यष्टास्ते चरता हिताय जगतस्तेनेह[3] विभ्राजसे ॥ ३९ ॥

नक्षत्रा सशशी सतारकरवी भूमौ पतेदम्बरात्
स्वस्थानाच्च चलेन्महागिरिवरः शुष्येदथो सागरः ।
R 355 चतुरो धातव कश्चि विज्ञपुरुषो दर्शेय एकैकशः
नैव त्वं द्रुमराजमूलुपगतो अप्राप्य बोध्युत्थिहेत् ॥ ४० ॥

लाभा मह्य सुलब्ध वृद्धि विपुला दृष्टोऽसि यत्सारथे
पूजा चैव कृता गुणाश्च कथिता बोधाय चोत्साहितः ।
सर्वा नागवधू अहं च, ससुता[4] मुच्येमितो योनितः
त्वं यासी यथ मत्तवारणगते गच्छेमं[5] एवं वयम् ॥ ४१ ॥ इति ॥

इति हि भिक्षवः कालिकस्य नागराजस्याग्रमहिषी सुवर्णप्रभासा नाम, सा[6] संबहुलाभिर्नागकन्याभिः परिवृता पुरस्कृता नानारत्नछत्रपरिगृहीताभिः नानादूष्य[7]परिगृहीताभिर्नानामुक्ताहारपरिगृहीताभिः नानामणि[8]रत्नपरिगृहीताभिः दिव्यमानुष्यकमाल्यविलेपनगुण्ठ[9]परिगृहीताभिः नाना[10]गन्धघटिकापरिगृहीताभिः नानातूर्यसंगीतिसंप्रवादितैर्नानारत्नपुष्पवर्षैर्बोधिसत्त्वं गच्छन्तमभ्यवकिरन्ति स्म ॥

१ R क्षेत्राशतां for क्षत्राशता. २ R विक्षिपसे for निक्षि°. ३ R तेनेक for तेनेह. ४ R ससुतो for ससुता. ५ R गच्छाम. ६ R om. सा. ७ R °द्रव्य° for °दूष्य°. ८ R om. °मणि°. ९ R °गुण° for °गुण्ठ°. १० R om. नाना°.

आभिश्च गाथाभिस्तुष्टुवुः –

अभ्रान्ता अत्रस्ता अभीरू अछम्भी
अलीना अदीना प्रहृष्टा दुधर्षा ।
अरक्ता अदुष्टा अमूढा अलुब्धा
विरक्ता विमुक्ता नमस्ते महर्षे ॥ ४२ ॥

भिषङ्का[1] विशल्या विनेया विनेषी R 356
सुवैद्या जगस्या दुखेभ्यः प्रमोची । L 285
अलेना अत्राणा अहीना[2] विदित्वा
भवा[3] लेनु त्राणो त्रिलोकेस्मि जातः ॥ ४३ ॥

प्रसन्ना प्रहृष्टा यथा[4] देवसंघाः
प्रवर्षी नभस्था महत्पुष्पवर्षम् ।
महाचैलक्षेपं करोन्ती यथेमे
जिनो भेष्यसेऽद्या[5] कुरुष्व प्रहर्षम् ॥ ४४ ॥

उपेहि द्रुमेन्द्रं निषीदा अछम्भी
जिना[6] मारसेनां धुनं[7] क्लेशजालम् ।
विबुद्ध्य प्रशान्तां वरामग्रबोधिं
यथा पौर्वकैस्तैर्विबुद्धा[8] जिनेन्द्रैः ॥ ४५ ॥

त्वया यस्य अर्थे बहूकल्पकोट्यः
कृता दुष्कराणी जगन्मोचनार्थम् ।
प्रपूर्णा ति आशा अयं प्राप्तु कालो
उपेहि द्रुमेन्द्रं स्पृशस्वाग्रबोधिम् ॥ ४६ ॥ इति ॥ R 357

अथ खलु भिक्षवो बोधिसत्त्वस्यैतदभवत् – कुत्र निषण्णैस्तैः पूर्वकैस्तथागतैरनुत्तरा सम्यक्संबोधिरभिसंबुद्धा इति । ततोऽस्यैतदभूत् – तृणसंस्तरे निषण्णैरिति ॥

अथ खल्वन्तरीक्षगतानि शुद्धावासकायिकदेवशत[10]सहस्राणि बोधिसत्त्वस्य चेतोभिरेव चेतःपरिवितर्कमाज्ञायैवं वाचो[11] भाषन्ते स्म – एवमेतत् सत्पुरुष, एवमेतत् । तृणसंस्तरे सत्पुरुष निषद्य L 286
तैः पूर्वकै[9]स्तथागतैरनुत्तरा सम्यक्संबोधिरभिसंबुद्धा इति ॥

अद्राक्षीत्खल्वपि भिक्षवो बोधिसत्त्वो मार्गस्य दक्षिणे पार्श्वे स्वस्तिकं यावसिकम् तृणानि लुनाति स्म नीलानि मृदुकानि सुकुमाराणि रमणीयानि कुण्डलजातानि प्रदक्षिणावर्तानि मयूरग्रीवसंनिभानि काचिलिन्दिकसुखसंस्पर्शानि सुगन्धीनि वर्णवन्ति मनोरमाणि । दृष्ट्वा च

---

१ R भिषक्ता for भिषङ्का. २ R अदीना for अहीना. ३ R भवाले नुत्राणा for भवा लेनु त्राणो. ४ R ययुः for यथा. ५ R व्याकुरुष्व for अद्या कुरुष्व. ६ R जिता for जिना. ७ R पुनः for धुनं. ८ R पौर्विकैस्तद्विबुद्धा for पौर्वकैस्तैर्वि°. ९ R पौर्विकैः for पूर्वकैः, १० R देवपुत्रशत° for देवशत°. ११ R एवं चाभाषन्ते for एवं वाचो भाषन्ते.

पुनर्बोधिसत्त्वो मार्गादपक्रम्य येन स्वस्तिको यावसिकस्तेनोपसंक्रामत् । उपसंक्रम्य स्वस्तिकं
यावसिकं[1] मधुरया वाचा समालपति स्म । यासौ वागाज्ञापनी विज्ञापनी विस्पष्टा अनेकलोकैकवर्ण-
सुखा वल्गुः श्रवणीया स्निग्धा स्मरणीया चोदनी तोषणी प्रेमणी अकर्कशा अगद्गदा अपरुषा
अचपला श्लक्ष्णा मधुरा कर्णसुखा कायचित्तोद्बिल्यकरणी रागदोषमोहकलिकलुषविनोदनी
R 358 कलविङ्करुतस्वरा कुणालजीवंजीवकाभिनदितघोषा दुन्दुभिसंगीतिरुतरवितनिर्घोषवती अनपहता
सत्या[2] अच्छा भूता ब्रह्मस्वररुतरवितनिर्घोषा समुद्रस्वरवेगनिभा शैलसंघट्टनवती देवेन्द्रासुरेन्द्राभिष्टुता
गम्भीरा दुरवगाहा नमुचिबलाबलकरणी परप्रवादमथनी सिंहस्वरवेगा हयगजगर्जितघोषा
नागनिर्नादनी मेघस्तनिताभिगर्जितस्वरा दशदिक्सर्वबुद्धक्षेत्रस्फरणी विनेयसत्त्वसंचोदनी अद्रुता[3]
अनुपहता अविलम्बिता सहिता युक्ता कालवादिनी समयानतिक्रमणी धर्मशतसहस्रसुग्रथिता
सौम्या असक्ता अधिष्ठितप्रतिभाना एकरुता सर्वरुतरचनी[4] सर्वाभिप्रायज्ञापनी सर्वसुखसंजननी
L 287 मोक्षपथसंदर्शिका मार्गसंभारवादिनी[5] पर्षदनतिक्रमणी सर्वपर्षत्[6]संतोषणी सर्वबुद्धभाषितानुकूला ।
ईदृश्या वाचा बोधिसत्त्वः स्वस्तिकं यावसिकं गाथाभिरभ्यभाषत —

तृणु[7] देहि मि स्वस्तिक शीघ्रं
अद्य ममार्थु तृणैः सुमहान्तः ।
सबलं नमुचिं निहनित्वा
बोधिमनुत्तरशान्ति स्पृशिष्ये ॥ ४७ ॥

यस्य कृते मयि कल्पसहस्रा
दानु दमोऽपि च संयम त्यागो ।
शीलव्रतं च तपश्च सुचीर्णा
तस्य मि[8] निष्पदि भेष्यति अद्य ॥ ४८ ॥

R 359 क्षान्तिबलं तथ वीर्यबलं च
ध्यानबलं तथ ज्ञान[9]बलं च ।
पुण्यअभिज्ञविमोक्षबलं च
तस्य मि[10] निष्पदि भेष्यति अद्य ॥ ४९ ॥

प्रज्ञबलं च उपायबलं च
ऋद्धिम संगतमैत्रबलं च ।
प्रतिसंविदे[11]परिसत्यबलं च
तेषु[12] मि निष्पदि भेष्यति अद्य ॥ ५० ॥

---

१ R om. यावसिकं. २ R सत्त्वअच्छा for सत्या अच्छा. ३ R अनुपद्रुता for अद्रुता. ४ R °रमणी for °रचनी. ५ R °चोदिता for °वादिनी. ६ R om. सर्वपर्षत्. ७ R शृणु for तृणु. ८ R om. मि. ९ R प्रज्ञबलं for ज्ञान°. १० R ऋद्धिसमङ्ग for ऋद्धिम संगत°. ११ R °संविदसत्त्वबलं for °संविदपरिसत्य°. १२ R तस्य निष्पदि for तेषु मि निष्पदि.

पुण्यबलं च तवापि अनन्तं
  यन्मम दास्यसि अद्य तृणानि ।
न ह्यपरं तव एतु निमित्तं
  त्वं पि अनु[1]त्तरु भेष्यसि शास्ता ॥ ५१ ॥

श्रुत्वा स्वस्तिकु वाच नायके सुरुचिरमधुरां
  तुष्टो आत्तमनाश्च हर्षितः प्रमुदितमनसः ।
गृह्णीत्वा तृणमुष्टि स्पर्शनवती मृदुतरुणशुभां
  पुरतः स्थित्वन वाच भाषते प्रमुदितहृदयः ॥ ५२ ॥

यदि ताव [2]तृणकेभि लभ्यते पदवरममृतं
  बोधी उत्तम शान्त दुर्दृशा पुरिमजिनपथः ।
ति[3]ष्ठतु ताव महागुणोदधे अपरिमितयशा
  अहमेव प्रथमे नु[4] बुध्यमि पदवरमृतम् ॥ ५३ ॥

नै[5]षा स्वस्तिक बोधि लभ्यते तृणवरशयनैः R 360
  अ[6]चरित्वा बहुकल्प दुष्करी व्रततप विविधा ।
प्रज्ञापुण्यउपायउद्गतो यद भवि मतिमां L 288
  तद[7] पश्चाज्जिन व्याकरोन्ति मुनयो भविष्यसि विरजः ॥ ५४ ॥

यदि बोधि इय शक्यु स्वस्तिका परजनि ददितुं
  पिण्डीकृत्य ददे[8]र्य प्राणिनां म भवतु विमतिः ।
यद बोधी मय प्राप्त जानसी विभजमि अमृतं
  आगत्वा शृणु धर्मयुक्त त्वं भविष्यसि विरजः ॥ ५५ ॥

गृह्णीत्वा तृणमुष्टि नायकः परमसुमृदुकां
  सिंहाहंसगतिश्च प्रस्थितः प्रचलित धरणी !
देवा नागग[9]णाः कृताञ्जली प्रमुदितमनसः
  अद्या मारबलं निहत्ययं स्पृशिष्यति अमृतम् ॥ ५६ ॥

इति हि भिक्षवो बोधिसत्त्वस्य बोधिवृक्ष[10]मुपसंक्रामतोऽशीतिर्बोधिवृक्षसहस्राणि देवपुत्रैश्च
बोधिसत्त्वैश्च मण्डितान्यभूवन् – इह निषद्य बोधिसत्त्वो बोधिं प्राप्स्यत्यभिसंभोत्स्यत इति । R 36
सन्ति तत्र केचिद्बोधिवृक्षाः पुष्पमया यो[11]जनशतसह[12]स्रोद्विद्धाः । केचिद् बोधिवृक्षा गन्धमया
द्वियोजनशतसहस्रोद्विद्धाः । केचिद्बोधिवृक्षाश्चन्दनमयास्त्रियोजनशतसह[12]स्रोद्विद्धाः । केचिद्बोधिवृक्षा

१ R अनन्तरु for अनुत्तरु. २ R तृण केचि for तृणकेभि. ३ R तिष्ठता for तिष्ठतु. ४ R om. नु. After St 53 R adds बोधिसत्त्व आह. ५ R एषा for नैषा. ६ R चरित्वा for अचरित्वा. ७ R तत्पश्चात् for तद पश्चात्. ८ R च देय पाणिना for ददेय प्राणिनां. ९ R °गणे for °गणाः. १० R वृक्षमूलमुप° for °वृक्षमुप°. ११ R पञ्चयोजन° for योजन°. १२ R °सहस्राण्यप्युच्चैस्त्वेन for °सहस्रोद्विद्धाः.

वस्त्रमयाः पञ्चयोजनशतसहस्राण्युच्चैस्त्वेन । केचिद्बोधिवृक्षा रत्नमया दशयोजनशतसहस्राण्युच्चैस्त्वेन । केचिद्बोधिवृक्षाः सर्वरत्नमया दशयोजनकोटिनियुतशतसहस्राण्युच्चैस्त्वेन । केचिद्बोधिवृक्षा रत्नमयाः कोटिनियुतशतसहस्रमुद्विद्धाः । सर्वेषु तेषु बोधिवृक्षमूलेषु यथानुरूपाणि सिंहासनानि प्रज्ञप्तान्यभूवन् नानादिव्य[1]दूष्यसंस्तृतानि । क्वचिद्बोधिवृक्षे पद्मासनं प्रज्ञप्तमभूत्, क्वचिद्गन्धासनम्,
L 289 क्वचिन्नानाविधरत्नासनम् । बोधिसत्त्वश्च ललितव्यूहं नाम समाधिं समापद्यते स्म । समनन्तरसमापन्नस्य च बोधिसत्वस्येमं ललितव्यूहं नाम बोधिसत्त्व[2]समाधिम्, अथ तत्क्षणमेव बोधिसत्त्वः सर्वेषु च तेषु बोधिवृक्षमूलेषु सिंहासने संनिषण्णः संदृश्यते स्म लक्षणानुव्यञ्जनसमलंकृतेन कायेन । एकैकश्च बोधिसत्त्वो देवपुत्रैश्चैवं संजानीते स्म – ममैव सिंहासने बोधिसत्त्वो निषण्णो नान्येषामिति । यथा च ते संजानते स्म – तथास्यैव ललितव्यूहस्य बोधिसत्त्वसमाधेरनुभावेन सर्वनिरयतिर्यग्योनियमलोकिकाः सर्वे देवमनुष्याश्च सर्वे गत्युपपन्नाः सर्वसत्त्वा बोधिसत्त्वं पश्यन्ति स्म बोधिवृक्षमूले सिंहासने निषण्णम् ॥

R 362 अथ च पुनर्हीनाधिमुक्तिकानां सत्त्वानां मतिपरितोषणार्थं बोधिसत्त्वस्तृणमुष्टिमादाय येन बोधिवृक्षस्तेनोपसंक्रामत् । उपसंक्रम्य बोधिवृक्षं सप्तकृत्वः प्रदक्षिणीकृत्य स्वयमेवाभ्यन्तराग्रं बहिर्मूलं समन्तभद्रं तृणसंस्तरणं संस्तीर्य सिंहवच्छूरवद्बलवद्दृढवीर्यवत्स्थामवन्नागवदैश्वर्यवत्स्वयंभूवज्ज्ञानिवदनुत्तरवद्विशेषवदभ्युद्गतवद्यशोवत्कीर्तिवद्दानवच्छीलवत्क्षान्तिवद्वीर्यवद्ध्यानवत्प्रज्ञावज्ज्ञानवत्पुण्यवन्निहतमारप्रत्यर्थिकवत्संभारवत्पर्यङ्कमाभुज्य तस्मिंस्तृणसंस्तरे न्यषीदत् प्राङ्मुख ऋजुकायं प्रणिधाय अभिमुखां स्मृतिमुपस्थाप्य । ईदृशं च दृ[3]ढं समादानमकरोत् –

इहासने शुष्यतु मे शरीरं
त्वगस्थिमांसं प्रलयं च यातु ।
अप्राप्य बोधिं बहुकल्पदुर्लभां
नैवासनात्कायमतश्चलिष्यते ॥ ५७ ॥ इति ॥

॥ इति श्रीललितविस्तरे बोधिमण्डगमनपरिवर्तो नाम एकोनविंशतितमोऽध्यायः ॥

१ R दिव्यपुष्प° for दूष्य°. २ R बोधिसमाधिम् for बोधिसत्त्वसमा°. ३ R दृढ° for दृढं.

## बोधिमण्डव्यूहपरिवर्तो विंशतितमः ।

इति हि भिक्षवो बोधिसत्त्वस्य बोधिमण्डनिषण्णस्य पूर्वस्यां दिशि षट् कामावचरा देवाः L 290
स्थिता अभूवन् – मा बोधिसत्त्वस्य कश्चिदन्तरायं कार्षीदिति । एवं दक्षिणपश्चिमोत्तरा दिशो देवैः परिगृहीता अभूवन् ॥

इति हि भिक्षवो बोधिसत्त्वो बोधिमण्डनिषण्णस्तस्यां वेलायां बोधिसत्त्वसंचोदनीं नाम रश्मिं प्रामुञ्चत्, यया रश्म्या समन्ताद्दशसु दिक्ष्वप्रमेयासंख्येयानि धर्मधातुपरमाण्याकाश- R 263
धातुपर्यवसानानि सर्वबुद्धक्षेत्राण्यवभासितान्यभूवन् ॥

अथ खलु पूर्वस्यां दिशि विमलायां लोकधातौ विमलप्रभासस्य तथागतस्य बुद्धक्षेत्राल्ललितव्यूहो नाम बोधिसत्त्वो महासत्त्वस्तया[1] प्रभया संचोदितः सन् गणनासमतिक्रान्तैश्च बोधिसत्त्वैः परिवृतः पुरस्कृतो येन बोधिमण्डो येन च बोधिसत्त्वस्तेनोपसंक्रामत् । उपसंक्रम्य च तस्यां वेलायां बोधिसत्त्वस्य पूजाकर्मणे तथारूपमृद्ध्यभिसंस्कारमभिसमकरोद्[2] येनर्द्ध्यभिसंस्कारेणाभिसंस्कृतेन दशसु दिक्ष्वाकाशधातुपर्यवसानानि सर्वबुद्धक्षेत्राण्येकं मण्डलमात्रमादर्शयति स्म शुद्धस्य नीलवैडूर्यस्य । पञ्चगत्युपपन्नानां सर्वसत्त्वानां पुरतो बोधिमण्डे निषण्णं बोधिसत्त्वमुपदर्शयति स्म । ते च सत्त्वाः परस्परमेकाङ्गुलिकाभि[3]र्बोधिसत्त्वमुपदर्शयन्ति स्म – कोऽयमेवंरूपः सत्त्वो ललितः, कोऽयमेवंरूपः सत्त्वो विराजत इति । तेषां च सत्त्वानां पुरतो बोधिसत्त्वो बोधिसत्त्वान्[4]निर्मिमीते स्म । तत्र ते बोधिसत्त्वविग्रहा इमा गाथा अभाषन्त –

यस्या किंचन रागदोषकलुषा सा वासना उद्धृता L 291
यस्या कायप्रभाकृता दशदिशे सर्वे प्रभा निष्प्रभाः ।
यस्या पुण्यसमाधिज्ञाननिचयः कल्पौघसंवर्धितः
सोऽयं शाक्यमुनिर्महामुनिवरः सर्वा दिशो भ्राजते ॥ १ ॥ इति ॥

अथ खलु भिक्षवो दक्षिणस्यां दिशि रत्नव्यूहाया लोकधातो रत्नार्चिषस्तथागतस्य R 364
बुद्धक्षेत्राद्रत्नै[5]च्छत्रकूटसंदर्शनो नाम बोधिसत्त्वो महासत्त्वस्तया प्रभया संचोदितः सन् गणनासमतिक्रान्तैर्बोधिसत्त्वैः परिवृतः पुरस्कृतो येन बोधिमण्डो येन च बोधिसत्त्वस्तेनोपसंक्रामत् । उपसंक्रम्य बोधिसत्त्वस्य पूजाकर्मणे एकरत्नछत्रेण तं सर्वावन्तं मण्डलमात्रं संछादयति स्म । तत्र शक्रब्रह्मलोकपालाः परस्परमेतदवोचन् – कस्येदं फलम्, केनायमेवंरूपो रत्नछत्रव्यूहः संदृश्यत इति । अथ तस्माद्रत्नछत्रादियं गाथा निश्चरति स्म –

येन च्छत्रसहस्रकोटिनयुता गन्धान रत्नान च
दत्ता अप्रतिमेषु मैत्रमनसा तिष्ठन्ति के निर्वृते ।

१ R om. महासत्त्वः. २ R अभिसंस्करोत् for अभिसमकरोद्. ३ R एकाङ्गलिभिः. ४ R बोधिसत्त्वं for °सत्त्वान्. ५ R [illegible] for [illegible]. ६ R रत्नक्षेत्र° for रत्नछत्र°.

सो एषो वरलक्षणो हितकरो नारायणस्थामवान्
बोधेर्मूलमुपागतो गुणधरस्तस्यैष पूजा कृता ॥ २ ॥ इति ॥

अथ खलु पश्चिमाया दिशश्चम्पकवर्णाया लोकधातोः पुष्पावलिवनराजिकुसुमिताभिज्ञस्य तथागतस्य बुद्धक्षेत्रादिन्द्रजाली नाम बोधिसत्त्वो महासत्वस्तया प्रभया संचोदितः सन् गणनासमतिक्रान्तैर्बोधिसत्त्वैः परिवृतः पुरस्कृतो येन बोधिमण्डो येन च बोधिसत्त्वस्तेनोप-
L 292 जगाम । उपेत्य च बोधिसत्त्वस्य पूजाकर्मणे सर्वावन्तं मण्डलमात्रमेकरत्नजालेन संछादयति स्म । तत्र दशसु दिक्षु देवनागयक्षगन्धर्वाः परस्परमेवमाहुः – कस्यायमेवंरूपो प्रभाव्यूह इति[1] । अथ तस्माद्रत्नजालादियं गाथा निश्चरति स्म –

R 365 रत्नाकरो रतन[2]केतु रतिस्त्रिलोके
रत्नोत्तमो रतन[3]कीर्ति रतः सुधर्मे ।
रत्नानि त्रीणि न च छेत्स्यति वीर्यप्राप्तः
सो बोधि प्राप्स्यति वरामि[4]य तस्य पूजा । ३ ॥ इति ॥

अथ खलूत्तरस्यां[5] दिशि सूर्यावर्ताया लोकधातोश्चन्द्रसूर्यजिह्मीकरप्रभस्य तथागतस्य बुद्धक्षेत्राद्व्यूहराजो नाम बोधिसत्त्वो महासत्त्वस्तया प्रभया संचोदितः सन् गणनासमतिक्रान्तैर्बोधिसत्त्वैः परिवृतः पुरस्कृतः येन बोधिमण्डो येन च बोधिसत्वस्तेनोपसंक्रामत् । उपसंक्रम्य बोधिसत्वस्य पूजाकर्मणे यावन्तो दशसु दिक्षु सर्वलोकधातुषु बुद्धक्षेत्रगुणव्यूहास्तान् सर्वांस्तस्मिन् मण्डलमात्रे संदर्शयति स्म । तत्र केचिद्बोधिसत्त्वा एवमाहुः – कस्येम एवंरूपा व्यूहाः ? अथ तेभ्यः सर्वव्यूहेभ्य इयं गाथा निश्चरति स्म –

कायो येन विशोधितः सुबहुशः पुण्येन ज्ञानेन च
येना वाच विशोधिता व्रततपैः सत्येन धर्मेण च ।
चित्तं येन विशोधितं हिरिधृती कारुण्य[6]मैत्र्या तथा
सो एषो द्रुमराजमूलुपँगतः[7] शाक्यर्षभः पूज्यते ॥ ४ ॥ इति ॥

अथ खलु पूर्वदक्षिणस्या दिशो गुणाकराया लोकधातोर्गुणराजप्रभासस्य तथागतस्य
R 366 बुद्धक्षेत्राद्गुणमतिर्नाम बोधिसत्त्वो महासत्त्वस्तया प्रभया संचोदितः सन् गणनासमतिक्रान्तैर्बोधिसत्त्वैः
L 293 परिवृतः पुरस्कृतो येन बोधिमण्डो येन च बोधिसत्त्वस्तेनोपसंक्रामत् । उपसंक्रम्य बोधिसत्त्वस्य पूजाकर्मणे सर्वगुणव्यूहं कूटागारं तस्मिन् मण्डलमात्रेऽभिनिर्मिमीते स्म । तस्य ते परिवारा एवमाहुः – क[8]स्यायमेवंरूपः कूटागारव्यूहः ? ततश्च कूटागारादियं गाथा निश्चरति स्म –

यस्य गुणैः सततं गुणगन्धिका
भोन्ति[9] सुरासुर यक्ष महोरगाः ।

---

१ R om. इति. २ R रत्नकेतु. ३ R रत्नकीर्तिः for रतन°. ४ R करोमि for वरामिय. ५ R उत्तरस्य दिशः for °स्यां दिशि. ६ R करुणाय for कारुण्य°. ७ R °मूलोपगतः for मूलु°. ८ R तस्य for कस्य. ९ R भान्ति for भोन्ति.

सो गुणवान् गुणराजकुलोदितो
बोधिविटपे उपविष्टु गुणोदधिः ॥ ५ ॥ इति ॥

अथ खलु दक्षिणपश्चिमाया दिशो रत्नसंभवाया लोकधातो रत्नयष्टेस्तथागतस्य बुद्धक्षेत्राद्रत्नसंभवो नाम बोधिसत्त्वो महासत्त्वस्तया प्रभया संचोदितः सन् गणनासमतिक्रान्तैर्बोधिसत्त्वैः परिवृतः पुरस्कृतो येन बोधिमण्डो येन च बोधिसत्त्वस्तेनोपसंक्रामत्। उपसंक्रम्य बोधिसत्त्वस्य पूजाकर्मणे अप्रमेयासंख्येयान् रत्नव्योमकांस्तस्मिन्मण्डलमात्रेऽभिनिर्मिमीते स्म । तेभ्यश्च रत्नव्योमकेभ्य इयं गाथा निश्चचार –

त्यक्ता येन ससागरा वसुमती रत्नान्यथोऽनेकशः[1]
प्रासादाश्च गवाक्षहर्मिकवरा युग्यानि[2] यानानि च ।
व्योमालंकृत पुष्पदाम रुचिरा उद्यान कूपा सभा
हस्ता पाद शिरोत्तमाङ्गनयनाः सो बोधिमण्डे स्थितः ॥ ६ ॥ इति ॥

अथ खलु पश्चिमोत्तरस्या दिशो मेघवत्या लोकधातोर्मेघराजस्य तथागतस्य बुद्धक्षेत्रा- 6
न्मेघकूटाभिगर्जितस्वरो[3] नाम बोधिसत्त्वो महासत्त्वस्तया प्रभया संचोदितः सन् गणनासमतिक्रान्तैर्बोधिसत्त्वैः परिवृतः पुरस्कृतो येन बोधिमण्डो येन च बोधिसत्त्वस्तेनोपसंक्रामत्। उपसंक्रम्य L 294
बोधिसत्त्वस्य पूजाकर्मणे कालानुसार्यगुरुमेघमभिनिर्मायोरगसारचन्दनचूर्णवर्षं[4] तस्मिन् मण्डलमात्रेऽभिप्रवर्षति स्म । तस्माच्च कालानुसारिमेघमण्डलमात्रादियं गाथा निश्चरति स्म –

धर्ममेघ स्फुरित्व सर्वत्रिभवे विद्याधिमुक्तिप्रभः
सद्धर्मं च विराग वर्षि अमृतं निर्वाणसंप्रापकम् ।
सर्वा रागकिलेशबन्धनलता सो वासना छेत्स्यति
ध्यानर्द्धीबलइन्द्रियैः कुसुमितः श्रद्धाकरं दास्यते ॥ ७ ॥ इति ॥

अथ खल्वुत्तरपूर्वस्या दिशो हेमजालप्रतिछन्नाया लोकधातो रत्नच्छत्राभ्युद्गतावभासस्य तथागतस्य बुद्धक्षेत्राद्धेमजालालंकृतो नाम बोधिसत्त्वो महासत्त्वस्तयाप्रभया संचोदितः सन् गणनासमतिक्रान्तैर्बोधिसत्त्वैः परिवृतः पुरस्कृतो येन बोधिमण्डो येन च बोधिसत्त्वस्तेनोपसंक्रामत् । उपसंक्रम्य बोधिसत्त्वस्य पूजाकर्मणे सर्वेषु तेषु कूटागारेषु रत्नव्योमकेषु द्वात्रिंशल्लक्षणसमलंकृतान् बोधिसत्त्वविग्रहानभिनिर्मिमीते स्म । सर्वे च ते बोधिसत्त्वविग्रहा दिव्यमानुष्यकपुष्पदामपरिगृहीता R 368
येन बोधिसत्त्वस्तेनाभिनतकायास्तानि पुष्पदामान्यभिप्रलम्बयन्ति स्म । ते इमां गाथामभाषन्त –

येन बुद्धनयुता स्तवित पूर्वे[5]
गौरवेण महता जनिय श्रद्धाम् ।
ब्रह्मघोषवचनं मधुरवाणिं
बोधिमण्डोपगतं शिरसि वन्दे ॥ ८ ॥ इति ॥

---

१ R °न्यथानेकशः for °न्यथोऽने°. २ R युग्माश्वयानानि for युग्यानि या°. ३ R गर्जितेश्वरो for °तस्वरो. ४ R °चूर्णमभिप्रवर्षति for °चूर्णवर्षं तस्मिन् मण्डलमात्रेऽभि°. ५ R om. पूर्वे.

अथ खल्वधस्ताद्दिशः समन्तविलोकिताया लोकधातोः समन्तदर्शिनस्तथागतस्य बुद्धक्षेत्राद्रत्नगर्भो नाम बोधिसत्त्वो महासत्त्वस्तया प्रभया संचोदितः सन् गणनासमतिक्रान्तैः बोधिसत्त्वैः परिवृतः पुरस्कृतो येन बोधिमण्डो येन च बोधिसत्त्वस्तेनोपसंक्रामत्। उपसंक्रम्य बोधि-
L 295 सत्त्वस्य पूजाकर्मणे तस्मिन् वैदूर्यमयमण्डलमात्रे जाम्बूनदसुवर्णपद्मान्यभ्युद्गतान्युपदर्शयति स्म। तेषां च पद्मानां कर्णिकास्वर्धकायिका नार्यो वर्णरूपसंपन्नाः सर्वालंकारप्रतिमण्डिता उपदर्शयति स्म। वामदक्षिणे[1] पाणिभिर्हर्षकटककेयूरसुवर्णसूत्रमुक्ताहारादिविविधाभरण[2]परिगृहीताः पुष्पपट्ट-दामानि चाभिप्रलम्बयन्त्यो येन बोधिमण्डो येन च बोधिसत्त्वस्तेनोपर्यभिनतकायाः। ताश्चेमां गाथामभाषन्त –

यो ओन[3]मिष्ट सदा गुरूणां
बुद्धश्रावकप्रत्येकजिनानाम्।
निर्माणसुशील सदो[4]ज्जु प्रष्ठो
तस्या ओन[5]मथा गुणधरस्य ॥ ९ ॥ इति ॥

अथ खलु परिष्टाद्दिशो वरगगनाया लोकधातोर्गणेन्द्रस्य तथागतस्य बुद्धक्षेत्राद्गगनगञ्जो
R 369 नाम बोधिसत्त्वो महासत्त्वस्तया प्रभया संचोदितः सन् गणनासमतिक्रान्तैर्बोधिसत्त्वैः परिवृतः पुरस्कृतो येन बोधिमण्डो येन च बोधिसत्त्वस्तेनोपसंक्रामत्। उपसंक्रम्य बोधिसत्त्वस्य पूजाकर्मणे गगनतलस्थ एव यावन्तो दशसु दिक्षु सर्वबुद्धक्षेत्रेष्वदृष्टाश्रुतपूर्वाः सन्ति पुष्पधूपगन्धमाल्य-विलेपनचूर्णचीवरवस्त्रालंकारछत्रध्वजपताकावैजयन्तिरत्नमणिकनकरजतमुक्ताहारहयगजरथपत्ति-वाहनपुष्पवृक्षपत्रपुष्पफलदारकदारिका देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगशक्रब्रह्मलोकपाल-मानुष्यामा[6]नुष्याणां सर्वा गगनतलान्महान्तं पुष्पवर्षमभिप्र[7]वर्षन्ति स्म सर्वसत्त्वप्रीतिसुख[8]संजननं च। न च कस्यचित्सत्त्वस्य भयं चोत्पीडां वा करोति स्म ॥

तत्रेदमुच्यते –

पेयालमेष दिशतासु[9] जिनौरसा ये
[10]संपूजितुं हितकरं अनुप्राप्त बोधिम्।
L 296 तेषां वियूहक्रमविक्रमसुक्रमाणां
ओपम्यमात्र निशृणोथ जिनौरसानाम् ॥ १० ॥

के चागता नभसि मेघ इव स्तनन्तो
हारा सहस्रनयुतानि प्रलम्बयन्तः।
के चागता मकुटरत्नविलम्बचूडाः
पौष्पं विमान गगने उपदर्शयन्तः ॥ ११ ॥

---

१ R °दक्षिण° for °दक्षिणे. २ R °भरणानि for °भरण°. ३ R आनमिष्ट. ४ R सदोज्ज्वल for सदोज्जु. ५ R आनमथा. ६ R om. अमानुष्या°. ७ R अभिवर्षयन्ति. ८ R om.° सुख°. ९ R दिशताशु. १० R संपूजितं for °जितुं.

के चागता धरणिसिंह इवा नदन्तः[1] R 370
शून्यानिमित्तप्रणिधीरवमुञ्चमानाः।
के चागता यथ वृषा अभिनन्दमानाः
न च दृष्टपूर्व रुचिराणि क्षिपन्ति पुष्पां ॥ १२ ॥

के चागता नभसि सार इवा रवन्तो[2]
वर्णासहस्र स्वकि आत्मनि दर्शयन्तः।
के चागता शशिरिवा गगने सुपूर्णाः
सुगतात्मजस्य गुणमालमुदीरयन्तः ॥ १३ ॥

के चागता रविरिव प्रभ मुञ्चमानाः
सर्वाणि मारभवनानि करोन्ति जिह्मा।
के चागता विमलकेतु यथेन्द्रयष्ट्यः
संभारपुण्यनिचितास्तहि बोधिमण्डे ॥ १४ ॥

केचिक्षिपन्ति गगनान्मणिरत्नजाला
चन्द्रा सुचन्द्र तथ बाल विरोचमाना।
मान्दारवा सुमनवार्षिकचम्पदामा[3]
संबोधिसत्त्व द्रुमराजस्थिते क्षिपन्ति ॥ १५ ॥

के चागता धरणि कम्पयमान पद्भ्यां R 371 L 297
संकम्पिता वसुध प्रीतिकरी जनस्य।
के चागता ग्रहिय मेरु करेतलेभिः
उत्सृष्टपुष्पपुट संस्थित अन्तरीक्षे ॥ १६ ॥

के चागताश्चतुरि[4] सागर गृह्य मूर्ध्नी
उत्सृष्ट सिञ्चि वसुधां वरगन्धतोयैः।
के चागता रतनयष्टि गृहीत्व चित्रं
संबोधिसत्त्वमुपदर्शय स्थित्व दूरे ॥ १७ ॥

के चागता भविय ब्रह्म प्रशान्तरूपाः
शान्ता प्रशान्तमनसः स्थित ध्यानध्यायी।
रोमेभि तेष स्वरु निश्चरते मनोज्ञ
मैत्रीउपेक्षकरुणामुदिताप्रमाणा ॥ १८ ॥

के चागता मरुत शक्र इवा यथैव[5]
देवैः सहस्रनयुतैश्च पुराकृतास्ते।

---

१ R °नर्दमानाः for °नन्द°. २ R रवन्ते. ३ R चम्पकमाल्यदामां for °वार्षिकचम्पदामा. ४ R चतुर for चतुरि. ५ R तथैव for यथैव.

उपगम्य बोधिविट्[1] गृह्य कृताञ्जलीभिः
शक्राभि[2]लग्न मणिरत्न क्षिपन्ति चित्रा ॥ १९ ॥

R 372 के चागताश्चतुदिशा च यथैव पाला
गन्धर्वराक्षसपरीवृत किन्नरेभिः ।
विद्युत्स्फुटान्त कुसुमानि प्रवर्षमाणाः
गन्धर्वकिन्नररुतेन स्तुवन्ति वीरम् ॥ २० ॥

के चागताः कुसुमितां प्रगृहीत्व वृक्षान्
सफलां सपुष्पवरगन्ध प्रमुञ्चमानां ।
L 298 जातेषु तेषु स्थित बुद्ध शुद्धकायाः
अवलम्बमान प्रतिमण्डि[3] क्षिपन्ति पुष्पा ॥ २१ ॥

के चागताः कुसुमिताः पुडिनी[4] गृहीत्वा
पद्मोत्पलैः कुसुमितैस्तथ पुण्डरीकैः ।
द्वात्रिंशलक्षणधराः स्थित पद्मगर्भे
स्तविष्ट अलिप्तमनसं विदु बोधिसत्त्वम् ॥ २२ ॥

R 373 के चागता विपुलकाय तथैव मेरु
स्थित्वान्तरीक्ष स्वकमात्मनमुत्सृजन्ति ।
उत्सृज्यमात्र भविया नवपुष्पदामाः
संछादयन्ति त्रिसहस्रि जिनस्य क्षेत्रम् ॥ २३ ॥

के चागता उभयचक्षुषि कल्पदाहं
संदर्शयन्त[5] विभवं तथ संभवं च ।
तेषां शरीरि बहुधर्मसुखा[6] रणन्ति
तां श्रुत्व सत्त्वनयुता प्रजहन्ति तृष्णाम् ॥ २४ ॥

के चागता रवित[7]किन्नरतुल्यघोषाः
बिम्बोष्ठचारुवदनाः परिपूर्णवक्त्राः ।
कन्या यथैव[8] सुअलंकृत[9] चित्रहाराः
प्रेक्षन्त यां सुरगणा न लभन्ति तृप्तिम् ॥ २५ ॥

के चागता वजिरकाय इवा अभेद्याः
हेष्ठा पस्कन्ध[10]चरणैः प्रतिग्राह्यमाणाः ।

---

१ R बोधिविटपं प्रगृह्य for बोधिवट्ठ गृह्य. २ R शक्रोभि° for शक्राभि°. ३ R °मण्डित for °मण्डि ४ R पडिनीः for पुडिनी. ५ R संदर्शयन्ति. ६ R °मुखा for °सुखा. ७ R रचित° for रवित°. ८ R यथैक for यथैव. ९ R अलंकृत for सुअलं° १० R [illegible] for °पस्कन्ध°.

के चागता रविरिवा शशिपूर्णवक्त्राः
ज्योत्स्नाकराः प्रभकरा हतक्लेशदोषाः ॥ २६ ॥

के चागता रतनमण्डित रत्नपाणी R 374
संछादयित्व बहुक्षेत्रसहस्रकोट्यः । L 299
वर्षन्ति रत्नवर पुष्प सुगन्धगन्धा
संतोषणार्थ बहुसत्त्वहितं सुखार्थम् ॥ २७ ॥

के चागता महति धारणि रत्नकोशाः
रोमेभि[1] सूत्रनयुतानि प्रभाषमाणाः ।
प्रतिभानवन्त मतिवन्त सुबुद्धिवन्तो
मत्तप्रमत्तजनतां प्रतिबोधयन्तः ॥ २८ ॥

के चागता ग्रहिय भेरि यथैव मेरु
आकोट्यमानु गगने सुमनोज्ञघोषाम् ।
यस्या रवं दर्शदिशे[2] व्रजि क्षेत्रकोट्या
अद्यावबोद्धुममतं अनुबुद्धि शास्ता[3] ॥ २९ ॥ इति ॥

॥ इति श्रीललितविस्तरे बोधिमण्डव्यूहपरिवर्तो नाम विंशतितमोऽध्यायः ॥


१ R रेमेति for रोमेभि. २ R दशदिशो. ३ R शास्तः for शास्ता.

उपगम्य बोधिवट्ठु[1] गृह्य कृताञ्जलीभिः
शक्राभि[2]लग्न मणिरत्न क्षिपन्ति चित्रा ॥ १९ ॥

R 372 के चागताश्चतुदिशा च यथैव पाला
गन्धर्वराक्षसपरीवृत किन्नरेभिः ।
विद्युत्स्फुटान्त कुसुमानि प्रवर्षमाणाः
गन्धर्वकिन्नररुतेन स्तुवन्ति वीरम् ॥ २० ॥

के चागताः कुसुमितां प्रगृहीत्व वृक्षान्
सफलां सपुष्पवरगन्ध प्रमुञ्चमानां ।
L 298 जातेषु तेषु स्थित बुद्ध शुद्धकायाः
अवलम्बमान प्रतिमण्डि[3] क्षिपन्ति पुष्पा ॥ २१ ॥

के चागताः कुसुमिताः पुंडिनी[4] गृहीत्वा
पद्मोत्पलैः कुसुमितैस्तथ पुण्डरीकैः ।
द्वात्रिंशलक्षणधराः स्थित पद्मगर्भे
स्तविष्ट अलिप्तमनसं विदु बोधिसत्त्वम् ॥ २२ ॥

R 373 के चागता विपुलकाय तथैव मेरु
स्थित्वान्तरीक्ष स्वकमात्मनमुत्सृजन्ति ।
उत्सृज्यमात्र भविया नवपुष्पदामाः
संछादयन्ति त्रिसहस्रि जिनस्य क्षेत्रम् ॥ २३ ॥

के चागता उभयचक्षुषि कल्पदाहं
संदर्शयन्त[5] विभवं तथ संभवं च ।
तेषां शरीरि बहुधर्मसुखा[6] रणन्ति
तां श्रुत्व सत्त्वनयुता प्रजहन्ति तृष्णाम् ॥ २४ ॥

के चागता रवित[7]किन्नरतुल्यघोषाः
बिम्बोष्ठचारुवदनाः परिपूर्णवक्त्राः ।
कन्या यथैव[8] सुअलंकृत[9] चित्रहाराः
प्रेक्षन्त यां सुरगणा न लभन्ति तृप्तिम् ॥ २५ ॥

के चागता वजिरकाय इवा अभेद्याः
हेष्ठा पस्कन्ध[10]चरणैः प्रतिग्राह्यमाणाः ।

---

१ R बोधिविटपं प्रगृह्य for बोधिवट्ठु गृह्य. २ R शक्रोभि° for शक्राभि°. ३ R °मण्डित for °मण्डि ४ R पडिनीः for पुडिनी. ५ R संदर्शयन्ति. ६ R °मुखा for °सुखा. ७ R रचित° for रवित°. ८ R यथक for यथैव. ९ R अलंकृत for सुअलं° १० R [illegible] for पस्कन्ध°.

के चागता रविरिवा शशिपूर्णवक्त्राः
ज्योत्स्नाकराः प्रभकरा हतक्लेशदोषाः ॥ २६ ॥

के चागता रतनमण्डित रत्नपाणी
संछादयित्व बहुक्षेत्रसहस्रकोट्यः । R 374 L 299
वर्षन्ति रत्नवर पुष्प सुगन्धगन्धा
संतोषणार्थ बहुसत्त्वहितं सुखार्थम् ॥ २७ ॥

के चागता महति धारणि रत्नकोशाः
रोमेभि[1] सूत्रनयुतानि प्रभाषमाणाः ।
प्रतिभानवन्त मतिवन्त सुबुद्धिवन्तो
मत्तप्रमत्तजनतां प्रतिबोधयन्तः ॥ २८ ॥

के चागता ग्रहिय भेरि यथैव मेरु
आकोट्यमानु गगने सुमनोज्ञघोषाम् ।
यस्या रवं दर्शदिशे[2] व्रजि क्षेत्रकोट्या
अद्यावबोद्धुममतं अनुबुद्धि शास्ता[3] ॥ २९ ॥ इति ॥

॥ इति श्रीललितविस्तरे बोधिमण्डव्यूहपरिवर्तो नाम विंशतितमोऽध्यायः ॥

---

१ R रेमेति for रोमेभि. २ R दशादिशो. ३ R शास्ते: for शास्ता.

## मारधर्षणपरिवर्त एकविंशः ।

R 375 इति हि भिक्षवो बोधिसत्त्वैश्चेमे[1] एवंरूपा व्यूहा बोधिसत्त्वस्य पूजाकर्मणे बोधिमण्डेऽभिसंस्कृता अभूवन् । स्वयं च बोधिसत्त्वो यावन्तो दशसु दिक्ष्वतीतानागतप्रत्युत्पन्नानां बुद्धानां[2] भगवतां सर्वबुद्धक्षेत्रेषु बोधिमण्डालंकारव्यूहास्तान् सर्वांस्तस्मिन् बोधिमण्डे संदर्शयति स्म ॥

अथ खलु भिक्षवो बोधिमण्डनिषण्णस्य बोधिसत्त्वस्यैतदभवत् – इह खलु कामधातौ
L 300 मारः पापीयानधिपतिरीश्वरो वशवर्ती । नैतन्मम प्रतिरूपं भवेद्यदहं तेनाविदितोऽनुत्तरां सम्यक्संबोधिमभिसंबुध्येयम् । यन्न्वहं मारस्य पापीयसः संचोदनं[3] कुर्याम् । तस्मिन् विजिते सर्वे कामावचरा देवादयो निगृहीता भविष्यन्ति । ततश्च मारपर्षदः पूर्वावरोपितकुशलमूला मारकायिका देवपुत्रास्ते मम सिंहविक्रीडितं दृष्ट्वा अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादयिष्यन्ति ॥

अथ खलु भिक्षवो बोधिसत्त्व एवमनुविचिन्त्य तस्यां वेलायां भ्रूविवरान्तरादूर्णाकोशात् सर्वमारमण्डलविध्वंसनकरीं नामैकां रश्मिमुदसृजत्[4] । यया रश्म्या सर्वस्मिंस्त्रिसाहस्रमहासाहस्रलोकधातौ सर्वमारभवनान्यवभास्य जिह्मीकृतानि संप्रकम्पितानि चाभूवन् । सर्वश्चायं त्रिसाहस्रमहासाहस्रलोकधातुर्महतावभासेन स्फुटोऽभूत् । तस्याश्च प्रभाया मारः पापीयानिदमेवं रूपं शब्दमश्रौषीत् –

R 376 कल्पौघचीर्णचरितो ह्यभिशुद्धसत्त्वः[5]
शुद्धोदनस्य तनयः प्रविजह्य राज्यम् ।
सो निर्गतो हितकरो ह्यमृताभिलाषी
बोधिद्रुमं ह्युपगतोऽद्य कुरु प्रयत्नम् ॥ १ ॥

सो तीर्ण[6] आत्मन परानपि तारयेयाँ[7]
मोचेष्यते स च परां स्वयमेव मुक्तः ।
आश्वासप्राप्त स परानपि चाश्वसेया
निर्वापयिष्यति परां परिनिर्वृतश्च ॥ २ ॥

शून्यां करिष्यति अपायत्रयोऽप्यशेषां
पूर्णां करिष्यति पुरां[8] सुरमानुषाणाम् ।
L 301 ध्यानानभिज्ञ परमं अमृतं सुखं च
दास्यत्यसौ हितकरो अमृतं स्पृशित्वा ॥ ३ ॥

शून्यं करिष्यति पुरं तव कृष्णबन्धो
अबलो बलो[9] बलविहीनु अपक्ष्यपक्ष्यो[10] ।

---

१ R °श्चैवरूपाः for °श्चेम एवंरूपा. २ R om. बुद्धानां. ३ R संचोदनां. ४ R उत्सृजत् for उदसृ°. ५ R ह्यतिशुद्ध° for ह्यभिशुद्ध°. ६ R सोत्तीर्ण for सो तीर्ण. ७ R तारयिष्ये for तारयेया. ८ R पुरीं for पुरां. ९ R अ[illegible] for अबलो बलो. १० R अपक्षपक्ष्यो for अपक्ष्य°.

न ज्ञास्यसे क नु व्रजामि[1] करोमि किं वा
यद् धर्मवर्षमभिवर्षि स्वयं स्वयंभूः ॥ ४ ॥ इति ॥

इति हि भिक्षवो मारः पापीयानाभिः संचोदनाभिर्गाथाभिः संचोदितः सन् द्वात्रिंशदाकारं स्वप्नमपश्यत् । कतमद् द्वात्रिंशदाकारम् ? तद्यथा—तमसाकुलं च स्वभवनमपश्यत् । रजसाकुलं चाकीर्णशर्करकठल्यं[2] च स्वभवनमपश्यत् । भीतत्रस्तोद्विग्नं दिशो दश प्रपलायमानं चात्मानमपश्यत् । विभ्रष्टमकुटमपविद्धकुण्डलं चात्मानमपश्यत् । शुष्कोष्ठगलताल्वकं चात्मानमपश्यत् । संतप्तहृदयं चात्मानमपश्यत् । शीर्णपत्रपुष्पफलानि चोद्यानान्यपश्यत् । अपगतजलाः परिशुष्काश्च पुष्करिणीरपश्यत् । हंसक्रोञ्चमयूरकलविङ्ककुणालजीवंजीवकादींश्च पक्षिगणाञ्छीर्णपक्षानपश्यत् । भेरीशङ्खमृदङ्गपटहतुणववीणावल्लकीताडसम्पादींश्च वाद्यभाण्डांश्छिन्नविछिन्नान् भूमौ निपतितानपश्यत् । प्रियजनपरिवाराश्च मारमुत्सृज्य दीनमुखा एकान्ते गत्वा प्रध्यायन्तमपश्यत् । अग्रमहिषीं च मारिणीं[3] शयनभ्रष्टां धरण्यामुभाभ्यां पाणिभ्यां शीर्षमभिपीडयन्तीमपश्यत् । ये च ते मारपुत्रा वीर्यवत्तमाश्च बलवत्तमाश्च तेजवत्तमाश्च प्रज्ञावत्तमाश्च[4] तं बोधिसत्त्वं बोधिमण्डवराग्रगतं नमस्यन्त एवमपश्यत् । आत्मनीयाश्च दुहित्रीर्हा तात हा तातेति क्रन्दन्त्योऽपश्यत् । मलिनचैलगात्रं चात्मानमपश्यत् । अवकीर्णपांशुशिरस्कं च पाण्डुदुर्वर्ण[5]मोजोपहृतं चात्मानमपश्यत् । हर्म्यकूटागारगवाक्षतोरणांश्च रजसावकीर्णान् पततोऽपश्यत् । ये चास्य ते सेनापतयो यक्षराक्षसकुम्भाण्डगन्धर्वाधिपतयः, तान् सर्वान् हस्ताञ्शिरसि कृत्वा रोदन्तः[6] क्रन्दन्तः पलायमानांश्चापश्यत् । ये च ते कामावचरेषु देवेषु[7] देवाधिपतयः, तद्यथा— धृतराष्ट्रविरूढकविरूपाक्षवैश्रवण[8]शक्रसुयामसंतुषितसुनिर्मितवशवर्तिप्रभृतयः, तान् सर्वाञ्शुश्रुषमाणान् मारः पापीयान् सबोधिसत्त्वाभिमुखानपश्यत् । रणमध्ये चास्यासिर्विकोशो न भवति स्म । विक्रोशन्तमशिवं चात्मानमपश्यत् । स्वेन च परिवारेणात्मानं परित्यक्तमपश्यत् । मङ्गलपूर्णकुम्भांश्च पतितान्[9] द्वारेऽपश्यत् । नारदं च ब्राह्मणममङ्गल्य[10]शब्दं श्रावयन्तमपश्यत् । आनन्दितं च दौवारिकमनानन्द[11]शब्दं श्रावयन्तमपश्यत् । तमसाकुलं च गगनतलमपश्यत् । कामभवननिवासिनीं च श्रियं रुदन्तीमपश्यत् । स्वमैश्वर्यं[12] चानैश्वर्य[13]मपश्यत् । स्वपक्षं चापक्षमपश्यत् । मणिमुक्ताजालानि च तूष्णीभूतानि[14] छिन्नभिन्नपतितान्य[15]पश्यत् । सर्वं च मारभवनं प्रचलितमपश्यत् । वृक्षाञ्छिद्यमानान्निर्यूहांश्च पततोऽद्राक्षीत् । सर्वं च मारसेनाव्यूहमभिमुखं पात्यमानमपश्यत् ॥ R 377 L 302 R 378

इति हि भिक्षव एवं द्वात्रिंशदाकारं मारः पापीयान् स्वप्नमपश्यत् । स प्रतिबुद्धः सन् भीतस्त्रस्तः संविग्नः सर्वमन्तर्जनं संनिपात्य सबलपार्षद्यसेनापतिदौवारिकसंनिपतितांश्च तान् विदित्वा आभिर्गाथाभिरध्यभाषत् —

---

१ R व्रजासि करोषि for व्रजामि करोमि. २ R शर्कराकटिल्लं for शर्करकठल्यं. ३ R मालिनीं for मारिणीं. ४ R om प्रज्ञावत्तमाश्च. ५ R °दुर्वर्ण° for °दुर्बल°. ६ R रुदतः क्रन्दतः for रोदन्तः क्रन्दन्तः. ७ R om. देवेषु. ८ R °वैश्रमण° for °वैश्रवण°. ९ R द्वारपतितान् for पतितान् द्वारे. १० माङ्गल्य° for अमङ्गल्य°. ११ R अनानन्दं for अनानन्द°. १२ R स्वानैश्वर्यं for स्वमै°. १३ R चैश्वर्यनष्टान् for चानैश्वर्यम्. १४ R कृष्णीभूतानि for तूष्णी°. १५ R छिन्नविच्छिन्नानि भूमौ पति° for छिन्नभिन्नपति°.

दृष्ट्वान[1] तां स सुपिनां नमुची दुखार्तो
R 379 आमन्त्रयाति सुत येऽपि च पारिषद्या।
L 303 सेनापतिं नमुचि सिंहहनुश्च नाम्ना
सर्वेष[2] तेष परिपृच्छति कृष्णबन्धुः ॥ ५ ॥
गाथाभि गीतरचितोऽद्य श्रुतोऽन्तरीक्षा-
च्छाक्येषु जातु वरलक्षण[3]चित्रिताङ्गः।
षड्वर्ष दुष्करव्रतानि चरित्व घोरा
बोधिद्रुमं ह्युपगतः प्रकुरुष्व यत्नम् ॥ ६ ॥
सो[4] चेद्विबुद्ध स्वयमेव हि बोधिसत्त्वो
बहुसत्त्वकोटिनयुतानि विबोधयेत।
शून्यं करिष्यति स मे भवनं ह्यशेषं
यद लप्स्यते ह्यमृतु स्पर्शनशीतिभावम् ॥ ७ ॥
हन्त व्रजाम सहिता महता बलेन
घातेम तं श्रमणु एकु द्रुमेन्द्रमूले।
उद्योजयध्व चतुरङ्गिणि शीघ्र सेनां
यदि[5] इच्छथा मम प्रियं म चिरं करोथ ॥ ८ ॥
R 380 प्रत्येक[6]बुद्धभि च अर्हभि पूर्ण लोको[7]
निर्वायमाणु न बलं मम दुर्बलं स्यात्।
सो भूयु एकु जिनु भेष्यति धर्मराजो
गर्णनातिवृत्तु[8] जिनवंशु न जातु छिद्येत् ॥ ९ ॥
अथ खलु भिक्षवः सार्थवाहो नाम मारपुत्रः, स मारं पापीयांसं गाथाभिरध्य[9]भाषत् –
किं तात भिन्नवदनोऽसि विवर्णवक्त्रो
L 304 हृदयं समुत्प्लवति[10] वेधति तेऽङ्ग[11]मङ्गम्।
किं ते श्रुतं अथव दृष्टु भणाहि शीघ्रं
ज्ञास्याम तत्त्वतु विचिन्त्य तथा प्रयोगम् ॥ १० ॥
निर्माणु मारु अवची शृणु मह्य वत्स
पापं मि दृष्टु सुपिनं परमं सुघोरम्।
भाषेय सर्वमिह पर्षदि अद्य शेषं
संमूर्छिता क्षितितले प्रपतेयु[12] यूयम् ॥ ११ ॥

---

१ R दृष्ट्वा नु for दृष्ट्वान. २ R सर्वेषु तेषु for सर्वेष तेष. ३ R °लक्षणविचित्रिताङ्गः for °चित्रिताङ्गः. ४ R सोऽभूद् for सो चेद्. ५ R यदिच्छ° for यदि इच्छ°. ६ R °बुद्ध अर्हति च for °बुद्धभि अर्हभि. ७ R लोके for लोको. ८ R गणनाव्यतिवृत्तु for °नातिवृत्त. ९ R गाथयाध्य° for गाथाभिरध्य°. १० R समुत्प्लवति for समुत्प्लवति. ११ R om. ते. १२ R प्रपतेय.

सार्थवाह आह—

रणकालि प्राप्ति यदि नाम जयो न दोषः
तत्रैव यस्तु निहतो भवते स दोषः । R 381
स्वप्नान्तरे तु यदि ईदृश ते निमित्ता
श्रेयो उपेक्षे[1] म रणे परिभावु गच्छेत् ॥ १२ ॥

मारोऽब्रवीत्—

व्यवसायबुद्धि पुरुषस्य रणे प्रसिद्धि
अवलम्ब्य धैर्य सुकृतं यदि नो जयं स्यात् ।
का तस्य शक्ति मम दृष्टि सपारिषद्यं
नोत्थातु मह्य चरणे शिरसा प्रपत्तुम् ॥ १३ ॥

सार्थवाह आह—

विस्तीर्णमस्ति हि बलं च सुदुर्बलं च
अस्त्येक शूरु बलवांश्च रणंजहश्च ।
खद्योतकैर्यदि भवेत्त्रिसहस्र पूर्णा
एको रविर्ग्रसति निष्प्रभतां करोति ॥ १४ ॥

अपि च । L 305

यस्य मानश्च मोहश्च मीमांसा च न विद्यते ।
विलोमे[2] यदि विद्वांसो नासौ शक्यश्चिकित्सितुम् ॥ १५ ॥

इति हि भिक्षवो मारः पापीयान् सार्थवाहस्य वचनमकृत्वा महतीं चतुरङ्गिनीं
सेनामुद्योजयति स्म महाबलरणशौण्डां भीषणां[3] रोमहर्षणीमदृष्टाश्रुतपूर्वां देवमनुष्यैर्बहुविधमुख- R 382
विकारकोटिनयुतशतसहस्रविकारप्रकारां भुजगशतसहस्रकरचरणकुटिलपरिवेष्टितशरीरां असिधनु-
शरशक्तितोमरकुठारपट्टिसभुशुण्डिमुसलदण्डपाशगदाचक्रवज्रकणयधरां[4] वरवर्मकवचवर्मितशरीरां[5]
विपरीतशिरःकरचरणनयनां ज्वलितशिरोनयनवदनां दुःसंस्थितोदरपाणिपादमुग्रतेजोवदनां
परमविकृतवदनदर्शनां विकरालविकृतदंष्ट्रां घनबहुविपुलप्रलम्बजिह्वां[6] सुण्डिककिलिञ्जसदृशजिह्वां[7]
ज्वलनसदृशकृष्णसर्पविषपूर्णरक्तनेत्राम् । केचिद्धि तत्राशीविषान्[8] वमन्ति स्म । केचित्करतलै-
राशीविषान् परिगृह्य भक्षयन्ति स्म । गरुडा इव सागरादभ्युत्क्षिप्य[9] केचिन्नरमांसरुधिरकरचरण-
शिरोयकृदन्त्रपुरीषादींश्च[10] भक्षयन्ति स्म । केचिज्ज्वलितपिङ्गलकृष्णनीलरक्तकद्रुकरालविचित्र-
रूपाः । केचिद्विकृतकूपप्रज्वलितोत्पाटितविकृतकटाक्षाः । केचित्परिवृत्तज्वलितविकृतनयनाः ।

---

१ R उपेक्षण for उपेक्ष म. २ R विलोमयति for विलोम यदि. ३ R भीषणिकां for भीषणां. ४ R °वज्रबाणधराम्बरचर्म° for °वज्रकणयधरां वरवर्मक°. ५ R om. °वच°. ६ R om. °बहु°. ७ R °किञ्जल्क° for °किलिञ्ज°. ८ R ते for तत्र. ९ R अत्युत्क्षिप्य for अभ्यु°. १० R °शिरोपक्कत्त° for शिरोयकृद.

केचिज्ज्वलितान् पर्वतान् परिगृह्य सलीलमपरेषु पर्वतेषु अभिरूढा आगच्छन्ति स्म । केचित्समूलान्[1]
वृक्षानुत्पाट्य बोधिसत्त्वाभिमुखा अभिधावन्ति स्म । केचिदजकर्णशूर्पकर्णहस्तिकर्णलम्बकर्ण-
वराहकर्णाः । केचिद् वृककर्णाः । केचिद्दकोदरिणो दुर्बलकाया अस्थिकङ्कालसंघाटमभिनिर्माय[2]
L 306 भग्ननासाः कुम्भोदराः करोटपादा उच्छुष्कत्वग्मांसरुधिराः छिन्नकर्णनासाकरचरणनयनोत्तमाङ्गाः ।
R 383 केचिद्रुधिरपिपासया शिरांसि परस्परं निकृन्तन्ति स्म । केचिद्भिन्नविकृतभैरवरूक्षस्वराः
[3]फुत्फुत्कारपिचुत्कार[4]फुलुफुलुप्रक्ष्वेडितानि कुर्वन्ति स्म । केचिदाहुः— आहरत हरताभिहनत हनत
बन्धत गृह्णत छिन्दत भिन्दत मथयतोत्क्षिपत नाशयतेमं श्रमणं गौतमं सार्धं द्रुमेणेति ब्रुवन्ति
स्म । केचिद्भेरुण्डकशृगालसूकरगर्दभगोहस्त्यश्वोष्ट्रखरमहिषशशचमरखड्गशरभनानाप्रतिभयरौद्र-
विकृतवक्त्राः । केचित्सिंहव्याघ्रऋक्षवराहवानरद्वीपिबिडालछागलोरभ्रसर्पनकुलमत्स्यमकरशिशु-
मारकूर्मकाकगृध्रोलूकगरुडादिसदृशात्मभावाः । केचिद्विरूपरूपाः । केचिदेकशीर्षा द्विशीर्षा याव-
च्छतसहस्रशीर्षाः । केचिदशीर्षाः । केचिदेकभुजा यावच्छतसहस्रभुजाः । केचिदभुजाः । केचिदेक-
पादकाः । केचिद्यावच्छतसहस्रपादाः । केचिदपादकाः । केचित्कर्णमुखनासिकाक्षिनाभिस्रोतोभि-
राशीविषान्निश्चारयन्ति स्म । केचिदसिधनुशरशक्तिपट्टिशपरशुचक्रतोमरकणयवज्रमुशुण्डिभिन्दि-
पालादीनि नानाप्रहरणानि भ्रामयन्तो नृत्यन्तो बोधिसत्त्वं संतर्जयन्ति स्म । केचिन्नराङ्गुलीश्छित्वा
मालागुणान् कृत्वा धारयन्ति स्म । केचिच्छिरोभिरस्थिकरकाञ्छीर्षकटाहकांश्च मालागुणमिव कृत्वा
धारयन्ति स्म । केचिदाशीविषपरिवेष्टितशरीराः । केचिच्छीर्षकटाहकान् परिगृह्य हस्त्यश्वोष्ट्रगोगर्दभ-
R 384 महिषारूढाः । केचिदधःशिरस ऊर्ध्वपादाः । केचित्सूचीरोमाणः[5] । केचिद्गोगर्दभवराहनकुलछागलो-
L 307 रभ्रबिडालकपिवृकशृगालरोमाणः आशीविषान् वमन्तोऽयोगुडानि निर्गरन्तो धूमकेतू-
नुत्सृजन्तो ज्वलितताम्रलोहवर्षं प्रवर्षन्तो विद्युद्वर्षान् क्षिपन्तो वज्राशनिं प्रमुञ्चन्तस्तप्तायो-
वालिकां प्रवर्षन्तः कालमेघान् संजनयन्तो वातवृष्टिमुत्पादयन्तः शरमेघवर्षानुत्सृजन्तः कालरात्रिं
दर्शयन्तो रावं संजनयन्तो बोधिसत्त्वमभिधावन्ति स्म । केचित्पाशान् भ्रामयन्तो महापर्वतान् प्रपात-
यन्तो महासागरान् क्षोभयन्तो लङ्घयन्तो महापर्वतांश्चालयन्तो मेरुं पर्वतराजं विधावन्तः[6] पलायमाना
विक्षिपन्तोऽङ्गप्रत्यङ्गानि भ्रामयन्तः शरीराणि हसन्तो महाहास्यानि उरांसि प्रस्फोटयन्तः
उरांसि ताडयन्तः केशांसि धुन्वन्तः पीतमुखानि च नीलशरीरा ज्वलितशिरस ऊर्ध्वकेशा
इतस्ततो वेगेन परिधावन्तो भेरुण्डाक्षाश्च बोधिसत्त्वं विभीषयन्ति स्म । जीर्णाः स्त्रियश्च रुदन्त्यो
बोधिसत्त्वमुपसंक्रम्यैवं वदन्ति स्म — अहो पुत्र, हा मम पुत्र, उत्तिष्ठोत्तिष्ठ, शीघ्रं प्रपलायस्व ।
राक्षसरूपाः पिशाचरूपाः काणखञ्जदुर्बलाश्च प्रेताः क्षुत्क्षामाक्षा ऊर्ध्वबाहवो विकृतास्याः
क्रन्दन्तो भयमुपदर्शयन्तस्त्रासं संजनयन्तो बोधिसत्त्वस्य पुरतोऽभिधावन्ति स्म । तया चैवरूपया
R 385 मारसेनया समुदितया समन्तादशीतिर्योजनान्यायामेन विस्तारेण स्फुटमभूत् । यथा चैकस्य
मारस्यैवं कोटीशतानां त्रिसाहस्रपर्यापन्नानां माराणां पापीयसां सेनाभिस्तिर्यगूर्ध्वं च परिस्फुटमभूत् ॥

---

१ R समूलवृक्षम् for समूलान् वृक्षान्. २ R अस्थिशंकलसंघात° for अस्थिकङ्कालसंघाट°.
३ R हुंहुंकार° for फुत्फुत्कार°. ४ R हुलुहुलु° for फुलुफुलु°. ५ R स्थूलरोमाणः for सूची°.
६ R अभिधावन्तः for विधावन्तः.

तत्रेदमुच्यते –

यक्षकुम्भाण्डमहोरगरूपाः
राक्षसप्रेतपिशाचकरूपाः ।
यत्तक[१] लोकि विरूप सुरौद्राः
सर्वि त निर्मित तत्र शठेभिः ॥ १६ ॥
एकशिरा द्विशिरा त्रिशिराश्च
यावत्सहस्रशिरा बहुवक्त्राः[२] ।
एकभुजा द्विभुजा त्रिभुजाश्च
यावत्सहस्रभुजा बहुभुजाः ।
एकपदा द्विपदा त्रिपदाश्च
यावत्सहस्रपदा बहु अन्ये ॥ १७ ॥
नीलमुखानि च पीतशरीरा L 308
पीतमुखानि च नीलशरीराः ।
अन्यमुखानि च अन्यशरीराः
एकम्[३] उपागतु किंकरसैन्यम् ॥ १८ ॥
वातु प्रवायति वर्षति वर्षं R 386
विद्युसहस्रशतानि पतन्ति ।
देव गुडायति वृक्ष लुडन्ति
बोधिवटस्य न ईर्यति पत्रम् ॥ १९ ॥
वर्षति देव प्रवर्षति वर्षं
ओघ वहन्ति जलाकुलभूमिम् ।
ईदृश भीषणिका बहुराशी
यत्र अचेतन वृक्ष पतन्ति ॥ २० ॥
दृष्ट्व च ताननतिभीषणरूपां
सर्वि विसंस्थित रूपविरूपां ।
श्रीगुणलक्षणतेजधरस्या
चित्तु न कम्पति[४] मेरु यथैव ॥ २१ ॥
मायसमांस्तथ स्वप्नसमांश्च
अभ्रनिभां समुदीक्षति धर्मा । R 387
ईदृश धर्मनयं विमृषन्तो
सुस्थितु ध्यायति संस्थितु धर्मे ॥ २२ ॥

---

१ R यत्तु विलोकि for यत्तक लोकि. २ R बहु अन्ये for बहुवक्त्राः. ३ R एवम् for एकम्. ४ R कम्पित for कम्पति.

यस्य भवेत्[1] अहं ति ममेति
भाव समुच्छ्रयि तत्त्व[2]निविष्टाः ।
सो बिभियादबुद्धेः[3] स्थितु ग्राहे
आत्मनि संभ्रमि गच्छ निरीक्ष्य[4] ॥ २३ ॥
शाक्यसुतस्तु स्वभावमभावं
धर्म प्रतीत्य समुत्थित बुद्धा ।
गगनोपमचित्तु सुयुक्तो
न भ्रमते सबलं शठ[5] दृष्ट्वा ॥ २४ ॥

इति हि भिक्षवो मारस्य पापीयसः पुत्रसहस्रम् । तत्र ये मारपुत्रा बोधिसत्त्वेऽभिप्रसन्नाः सार्थवाहपूर्वंगमाः, ते मारस्य दक्षिणे पार्श्वे स्थिता अभूवन् । ये मारपाक्षिकाः, ते वामे पार्श्वे स्थिता अभूवन् मारस्य पापीयसः । तत्र मारः पापीयांस्तान् स्वान् पुत्रानामन्त्रयते स्म – कीदृशेन बलेन वयं बोधिसत्त्वं धर्षयिष्यामः ? तत्र दक्षिणे पार्श्वे सार्थवाहो नाम मारपुत्रः । स पितरं गाथया प्रत्यभाषत् –

सुप्तं प्रबोधयितुमिच्छति पन्नगेन्द्रं
R 388 सुप्तं प्रबोधयितुमिच्छति यो गजेन्द्रम् ।
L 309 सुप्तं प्रबोधयितुमिच्छति यो मृगेन्द्रं
सुप्तं प्रबोधयितुमिच्छति सो नरेन्द्रम् ॥ २५ ॥

वामे पार्श्वे दुर्मतिर्नाम मारपुत्रः स एवमाह –

संप्रेक्षणेन हृदयान्यभिसंस्फुटन्ति
लोकेषु सारमहतामपि पादपानाम् ।
का शक्तिरस्ति मम दृष्टिहतस्य तस्य
संजीवितुं जगति मृत्युहतस्य वास्तु ॥ २६ ॥

दक्षिणे मधुरनिर्घोषो नामाह –

वृक्षेषु सार क इहास्ति ततो ब्रवीषि
दृष्ट्वा भिनन्मि मनुजेष्वथ का अवस्था ।
मेरुं गिरिं यदि भिनत्सि निरीक्षणेन
नैवास्य तुभ्य नयनेभि हतोन्मिषेरन् ॥ २७ ॥

अपि च ।

यः सागरं तरितुमिच्छति वै भुजाभ्यां
तोयं च तस्य पिबितुं मनुजेष्वसन्तु ।
शक्यं भवेदिद[6]मतस्तु वदामि दुःखं
यस्तस्य वक्त्रमभितोऽप्यमलं निरीक्षेत् ॥ २८ ॥

१ R भवन्ति for भवेत. २ R सत्त्वं° for तत्त्वं°. ३ R अबुधः for अबुद्धेः. ४ R निरीक्ष्व for निरीक्ष्य. ५ R साधु for शठ. ६ R भवेदिहमतस्तु for भवेदिद°.

वामे शतबाहुर्नामाह – R 389

ममेह देहेस्मि शतं भुजानां
क्षिपामि चैकेन शतं शराणाम्।
भिनन्मि कायं श्रमणस्य तात
सुखी भव त्वं व्रज मा विलम्ब[1] ॥ २९ ॥

दक्षिणे सुबुद्धिराह –

शतं भुजानां यदि को विशेषो L 310
भुजा किमर्थं न भवन्ति रोमाः।
भुजैकमेकेन तथैव शूला[2]:
तैश्चापि कुर्यान्न हि तस्य किंचित् ॥ ३० ॥

किं कारणम्?

मैत्रावतस्तस्य[3] मुनेः शरीरे
विषं न शस्त्रं क्रमते न चाग्निः।
क्षिप्तानि शस्त्राणि व्रजन्ति पुष्पतां
मैत्री हि लोकोत्तरभावि तस्य ॥ ३१ ॥

अपि च।

दिवि भुवि च जले च ये बलाढ्याः
असिपरशुधराश्च गुह्यका नरा वा।
क्षमबलमिमु प्राप्य ते नरेन्द्रं
प्रबलबलाल्पबला भवन्ति सर्वे ॥ ३२ ॥ R 390

वामे उग्रतेजा आह –

अन्तर्गतोऽहं धक्ष्यामि प्रविश्यास्य तनुं शुभाम्।
वृक्षं सकोटरं शुष्कं दावाग्निरिव सूक्ष्मतः ॥ ३३ ॥

दक्षिणे सुनेत्र आह –

मेरुं दहेस्त्वं यदि वापि कृत्स्नं
प्रविश्य चान्तर्गतु मेदिनीं वा।
दग्धुं न शक्यः स हि वज्रबुद्धिः
त्वत्संनिभैर्वालिकगङ्गतुल्यैः ॥ ३४ ॥

अपि च।

चलेयुर्गिरयः सर्वे क्षयं गच्छेन्महोदधिः।
चन्द्रसूर्यौ पतेद्भूमौ मही च विलयं व्रजेत् ॥ ३५ ॥

---

१ R विलम्बम् for विलम्ब. २ R शूराः for शूलाः. ३ R मैत्रीव्रतस्य for मैत्रावतस्तस्य.

लोकस्यार्थे कृतारम्भः प्रतिज्ञाकृतनिश्चयः ।
अप्राप्यैष वरां बोधिं नोत्थास्यति महाद्रुमात् ॥ ३६ ॥

वामे दीर्घबाहुर्गर्वित आह –

आलयं चन्द्रसूर्याणां नक्षत्राणां च सर्वशः ।
पाणिनाहं प्रमर्दामि तवेह भवने स्थितः ॥ ३७ ॥
L 311 चतुर्भ्यः सागरेभ्यश्च जलं गृह्णामि लीलया ।
तं गृह्य श्रमणं तात सागरस्य परं क्षिपे ॥ ३८ ॥
R 391 तिष्ठतां तात सेनेयं[1] मा त्वं शोकार्दितो भव ।
सबोधिवृक्षमुत्पाव्य क्षेप्स्ये पाण्या दिशो दश ॥ ३९ ॥

दक्षिणे प्रसादप्रतिलब्ध आह –

सदेवासुरगन्धर्वां ससागरनगां महीम् ।
त्वं मर्दितां[2] प्रकुर्याश्च पाणिभ्यां मदगर्वितः ॥ ४० ॥
त्वद्विधानां सहस्राणि गङ्गावालिकया समाः ।
रोमं तस्य न चालेयुर्[3]बोधिसत्त्वस्य धीमतः ॥ ४१ ॥

वामे भयंकर आह –

भयं हि ते तात भृशं किमर्थं
सेनाय मध्ये किमवस्थितस्य[4] ।
सेना न तस्यास्ति कुतः सहायाः
कस्माद्भयं ते भवतीह तस्मात् ॥ ४२ ॥

दक्षिण एकाग्रमतिराह –

यूथं न लोकेऽस्ति शशीरवीनां
न चक्रवर्ती न च केसरीणाम् ।
न बोधिसत्त्वानिह तात यूथं
एकः समर्थो नमुचिं निहन्तुम् ॥ ४३ ॥

वामेऽवतारप्रेक्ष्याह –

न शक्तिशूला न गदा न खड्गाः
न हस्तिनोऽश्वा न रथा न पत्तिः ।
तं शौण्डमेकं श्रमणं निषण्णं
हंस्येऽद्य[5] मा संभ्रम तात किंचि ॥ ४४ ॥

---

१ R सैन्येयं for सेनेयं. २ R मर्षिता for मर्दितां. ३ R चालेतुं for चालेयुः. ४ R समवस्थितस्य for किमव°. ५ R हन्येत for हंस्येऽद्य.

दक्षिणे पुण्यालंकार आह — R 392

नारायणस्य यथ काय अछेद्यभेद्यो
क्षान्तिबलैः कवचितो दृढवीर्यखड्गः ।
त्रिविमोक्षवाहनसि प्रज्ञधनुः स तात L 312
पुण्याबलेन स हि जेष्यति मारसेनाम् ॥ ४५ ॥

वामेऽनिवर्त्याह —

न निवर्तते तृणगतः प्रदहन् दवाग्निः
क्षिप्तं[1] शरो न च निवर्तति[2] शिक्षितेन ।
वज्रं नभे निपतितं न निवर्तते च
न स्थानमस्ति मम शाक्यसुतं ह्यजित्वा ॥ ४६ ॥

दक्षिणे धर्मकाम आह —

आर्द्रं तृणं प्राप्य निवर्ततेऽग्निः
गिरिकूटमासाद्य निवर्तते शरः ।
वज्रं महीं प्राप्य अधः प्रयाति
अप्राप्य शान्तममृतं न निवर्तते अयम् ॥ ४७ ॥

किं कारणम् ?

शक्य[3] तात अन्तरीक्षे लेख्यचित्रं[4] चित्रितुं
यावन्ति केचि सर्व सत्त्व एकचित्त स्थापितुम् ।
चन्द्रासूर्य मारुतं च शक्य पाश बन्धितुं
न बोधिसत्त्व शक्य तात बोधिमण्डि चालितुम् ॥ ४८ ॥ R 393

वामेऽनुपशान्त आह —

दृष्टीविषेण महता प्रदहामि मेरुं
भस्मीकरोमि सलिलं च महोदधीनाम् ।
बोधिं च पश्य श्रमणं च अहं हि तात
दृष्ट्या[5] यथाद्य उभयं हि करोमि भस्मम् ॥ ४९ ॥

दक्षिणे सिद्धार्थ आह —

विषेण पूर्णो यदि वैष सर्वो L 313
भवेत्त्रिसाहस्रवरः प्रदीप्तः ।
निरीक्षणादेव गुणाकरस्य
सुनिर्विषत्वं विषमभ्युपेयात् ॥ ५० ॥

---

१ R क्षिप्तः for क्षिप्तं. २ R निवर्त विशिक्षितेन for निवर्तति शिक्षि°. ३ R शक्ययु for शक्य. ४ R om. °चित्र. ५ R दृष्ट्वा for दृष्ट्या.

विषाणमुग्रं त्रिभवेह यच्च
रागश्च दोषश्च[1] तथैव मोहः ।
ते तस्य काये च तथैव चित्ते
नभे यथा पङ्करजो न सन्ति ॥ ५१ ॥

*    *    *

तस्मान्निवर्तामह तात सर्वे ॥ ५२ ॥

R 394 वामे रतिलोलो नामाह –

अह्नु तूर्यसहस्र प्रवादितैः
अप्सरकोटिसहस्र अलंकृतैः ।
लोभयित्वेन[2] नेष्यि पुरोत्तमं
कामरतिं हि करोमि वशे तव[3] ॥ ५३ ॥

दक्षिणे धर्मरतिराह –

धर्मरती सद तस्य रतीहा
ध्यानरती अमृतार्थरतिश्च ।
सत्त्वप्रमोक्षण मैत्ररतिश्च
रागरतिं स रतिं न करोति ॥ ५४ ॥

वामे वातजवो नामाह –

जवेनहं चन्द्ररवी ग्रसेयं[4]
प्रवायमानं गगने च वायुम् ।
अद्यैव तात श्रमणं गृहीत्वा
प्रासस्य[5] मुष्टिं विकिरामि वायुम्[6] ॥ ५५ ॥

दक्षिणेऽचलमतिर्नाम मारपुत्रः, स एवमाह –

R 395 यथा तवैषो जववेग उग्रः
तद्वद्यदि स्यात्सुरमानुषाणाम् ।
सर्वे समग्रापि न ते समर्थाः
कर्तुं रुजामप्रतिपुद्गलस्य[7] ॥ ५६ ॥

वामे ब्रह्ममतिराह –

स्यात्तादृशानामपि वृन्दमुग्रं
कुर्यान्न किंचित्तव मानघातम् ।
प्रागेव सैकः प्रकरोति किं ते
वृन्देन साध्यन्ति हि सर्वकार्या[8] ॥ ५७ ॥

---

१ R द्वेषश्च for दोषश्च. २ R °त्वमु for °त्वेन. ३ R अभवत् for तव. ४ R ग्रहेयं for ग्रसेयं. ५ R वेगस्य for प्रासस्य. ६ R वायुवत् for वायुम्. ७ R °पुगवस्य for पुद्गलस्य. ८ R सर्वकार्यम्.

दक्षिणे सिंहमतिराह –

न सिंहवृन्दं भुवि दृष्टपूर्वं
दृष्टीविषाणां अपि नास्ति वृन्दम् । L 314
तेजस्विनां सत्यपराक्रमाणां
पुरुषर्षभाणां अपि नास्ति वृन्दम् ॥ ५८ ॥

वामे सर्वचण्डालो नामाह –

न ते श्रुता तात गिरोऽभिदीप्ता
यथा नदन्ते तनयास्तवेमे ।
वीर्येण वेगेन बलेन युक्ता
व्रजाम शीघ्रं श्रमणं निर्हन्तुम्[1] ॥ ५९ ॥

दक्षिणे सिंहनादी नामाह –

बहवः शृगाला हि वनान्तरेषु
नदन्ति नादान्न सतीह सिंहे ।
ते सिंहनादं तु निशाम्य भीमं
त्रस्ता पलायन्ति दिशो दशासु ॥ ६० ॥ R 396

मारौरसास्तद्वदमी अपण्डिताः
अश्रुत्व नादं पुरुषोत्तमस्य ।
नदन्ति तावत्स्वमताऽतिधृष्टा[2]
मनुष्यसिंहे नदिते न सन्ति ॥ ६१ ॥

वामात्पार्श्वाद्दुश्चिन्तितचिन्त्याह[3] –

यच्चिन्तयामि तदिहाशु भोति
कथं न एषो इम वीक्षते च ।
मूढो व एषो अनभिज्ञ किं वा
यदुत्थिहित्वा न पलायते लघुम् ॥ ६२ ॥

दक्षिणात्पार्श्वात्सुचिन्तितार्थो नामाह –

मूढो न वायं[4] अपराक्रमो वा
युष्मैव मूढाश्च असंयताश्च ।
न युष्मि जानाथ इमस्य वीर्यं
प्रज्ञाबलेनास्य जिताः स्थ सर्वे ॥ ६३ ॥

मारात्मजानां यथ गङ्गवालिका
एतेन वीर्येण यथैव यूयम् ।

---

१ R हि हन्तुम् for निहन्तुम्. २ R अतिहृष्टा. ३ R वामपार्श्वे for वामात्पार्श्वात्. ४ R चायमविधिज्ञमपरा° for वायं अपर°.

R 397 रोमस्य एकं न समर्थ चालितुं
प्रागेव यश्चिन्तयि घातयिष्ये ॥ ६४ ॥
मा यूयमत्र क्षिणुयात मानसं
प्रसन्नचित्ता भवथा सगौरवाः ।
निर्वर्तया[1] मा प्रकरोथ विग्रहं
भविष्यतेऽसौ त्रिभवेस्मि राजा ॥ ६५ ॥

पेयालम् । एवं ते सर्वे मारपुत्राः परिपूर्णं पुत्रसहस्रं शुक्लपाक्षिकाश्च कृष्णपाक्षिकाश्च[2] मारं पापीयांसं पृथक्पृथग्गाथाभिरध्यभाषन्त ॥

L 315 अथ खलु भद्रसेनो नाम मारस्य पापीयसः सेनापतिः, स मारं पापीयसं गाथाभिरध्यभाषत —

ये ते तवानुयात्राः शक्रो लोकपालाश्च किन्नरगणाश्च ।
असुरेन्द्रा गरुडेन्द्राः[3] कृताञ्जलिपुटाः प्रणत तस्मै ॥ ६६ ॥
किं पुनरनानुयात्रा[4] ब्रह्मा आभास्वराश्च सुरपुत्राः[5] ।
देवाश्च[6] शुद्धावासकास्तेऽपि च सर्वे प्रणत तस्मै ॥ ६७ ॥
ये च तवेमे[7] पुत्राः प्रज्ञामेधाविनश्च बलिनश्च ।
R 398 ते बोधिसत्त्वहृदयं अनुप्रविष्टा नमस्यन्ति ॥ ६८ ॥
याप्येष मारसेना अशीति स्फुट योजनानि यक्षाद्यैः ।
भूयिष्ठ सर्वप्रेक्षी प्रसन्नमनसो हि निर्दोषम् ॥ ६९ ॥
दृष्ट्वा यथा सुभीमां रौद्रां विकृतां चमूमिमां घोराम् ।
न च विस्मितो न चलितो ध्रुवमस्य जयो भवत्यद्य ॥ ७० ॥
स्थित यत्र च सेनेयं तत्र उलूकाः शिवाश्च विरुवन्ति[8] ।
वायसगर्दभरुदितं[9] निवर्तितव्यं क्षमं शीघ्रम् ॥ ७१ ॥
वीक्षस्व[10] बोधिमण्डे पटुक्रोञ्चा हंस कोकिल मयूराः ।
अभिदक्षिणं करोन्ति ध्रुवमस्य जयो भवत्यद्य ॥ ७२ ॥
यत्र[11] स्थित सेनेयं तत्र मसिः पांशवश्च वर्षन्ति ।
महिमण्डि कुसुमवृष्टिः कुरुष्व वचनं निवर्तस्व ॥ ७३ ॥
यत्र स्थित सेनेयं उत्कूलनिकूल शल्यकण्टकाकीर्णम् ।
महिमण्ड कनकनिर्मलु निवर्तितव्यं क्षमं प्राज्ञैः ॥ ७४ ॥
R 399 दृष्टा ति सुपिनि पूर्वे भेष्यसि प्रत्यक्षु यदि न गच्छासि ।
भस्मं चमू च करिष्यति ऋषिभिर्देशा कृता यथा भस्मम् ॥ ७५ ॥

१ R विवर्तमाना for निवर्तया मा. २ R om. कृष्णपाक्षिकाश्च. ३ R om. गरुडेन्द्राः. ४ R अनुयात्रा for अनानु°. ५ R सुरदेवपुत्राश्च for सुरपुत्राः. ६ R om. देवाश्च. ७ R तत्रेमे for तवेमे. ८ R विचरन्ति for विरुवन्ति. ९ R विरावित for रुदितं. १० R विरुत for वीक्षस्व. ११ R तच्च for यत्र.

राजा[1] यतो ऋषिवरो रोषितु आसीत् स ब्रह्मदत्तेन । L 316
उद्दग्धदण्डकवनं वर्षैर्बहुभिस्तृण न जाता ॥ ७६ ॥
ये केचि सर्वलोके ऋषयो[2] व्रतचारिणस्तपोयुक्ताः ।
तेषामयं प्रधानो ह्यहिंसकः सर्वभूतानाम् ॥ ७७ ॥
किं ते न श्रुतपूर्वं काये दीप्ता सुलक्षणा यस्य ।
निष्क्रामति चागारात्स भवति बुद्धो जितक्लेशः ॥ ७८ ॥
इम ईदृशी विभूतिं पूजार्थं निर्मिता जिनसुतेभिः ।
तं नूनमग्रसत्त्वो ह्यग्राहुतिसंप्रतिग्राही ॥ ७९ ॥
ऊर्णा यथा सुविमला विराजते क्षेत्रकोटिनियुतेषु ।
जिह्मीकृताः स्म च[3] तया निसंशयं एष मारबलहन्ता[4] ॥ ८० ॥
मूर्ध्नं यथास्य देवैर्द्रष्टु न शक्यं न वै भवाग्रस्थैः[5] ।
नूनं सर्वज्ञत्वं प्राप्स्यत्यन्यैरनुपदिष्टम् ॥ ८१ ॥ R 400
यथ मेरुचक्रवालाश्चन्द्रासूर्यश्च शक्रब्रह्माणः ।
वृक्षाश्च पर्वतवराः प्रणते सर्वे महीमण्डम् ॥ ८२ ॥
निःसंशयु पुण्यबली प्रज्ञाबलवांश्च ज्ञानबलवांश्च ।
क्षान्तिबलवांश्च वीर्यबलवानबलंकर्ता नमुचिपक्षां ॥ ८३ ॥
हस्ती यथाम[6]भाण्डं प्रमर्दते क्रोष्टुकान् यथा सिंहः ।
खद्योतं वादित्यो भेत्स्यति सुगतस्तथा सेनाम् ॥ ८४ ॥

एतच्छ्रुत्वा परो मारपुत्रोऽतीव रोषात्संरक्तनयनोऽब्रवीत् –

एकस्य वर्णानतिअप्रेमयां
प्रभाषसे तस्य त्वमेककस्य ।
एको हि कर्तुं खलु किं समर्थो
महाबला पश्यसि किं न भीमा ॥ ८५ ॥

अथ दक्षिणात्[7]पार्श्वान्मारप्रमर्दको नाम[8] मारपुत्र आह –

सूर्यस्य लोके न सहायकृत्यं L 317
चन्द्रस्य सिंहस्य न[9] चक्रवर्तिनः ।
बोधौ निषण्णस्य च निश्चितस्य R 401
न बोधिसत्त्वस्य सहायकृत्यम् ॥ ८६ ॥

अथ बोधिसत्त्वो मारस्य दुर्बलीकरणहेतोर्विकसितशतपत्रनिभं वदनं संचारयति स्म । यं दृष्ट्वा मारः पापीयान्[10] प्रपलायमानो[11]ऽभूत् । मम चमू बोधिसत्त्वस्य वदनं प्रतिष्ठेति[12]

१ R राजायनो for राजा यतो. २ R सुयाच for ऋषयो. ३ R व्रततपा for च तया. ४ R °वराहन्ता for °बलहन्ता. ५ R भवग्रस्तैः for भवाग्रस्थैः. ६ R मत्यण्डं for आमभाण्डं. ७ R दक्षिण° for दक्षिणात्. ८ R om. नाम. ९ R च for न. १० R om. पापीयान्. ११ R °पलायमानो for °पलायानो. १२ R प्रविष्टेति for प्रतिष्ठेति.

मन्यमानः प्रपलानः[1] पुनरेव प्रतिनिवृत्य सपरिवारो विविधानि प्रहरणानि बोधिसत्त्वस्योपर्युत्सृजति स्म सुमेरुमात्रांश्च पर्वतान् । ते च बोधिसत्त्वस्योपरि प्रक्षिप्ताः पुष्पविताने[2] विमानानि संतिष्ठन्ते स्म । ये च दृष्टिविषा आशीविषाः श्वासविषाश्चाग्निज्वालानुत्सृजन्ति स्म, तच्चाग्निमण्डलं बोधिसत्त्वस्य प्रभामण्डलमिव संतिष्ठते स्म ॥

अथ पुनरेव बोधिसत्त्वो दक्षिणेन पाणिना शीर्षं प्रमार्ष्टि स्म । मारश्च पश्यति स्म । बोधिसत्त्वस्य हस्ते खड्ग इति दक्षिणामुखः प्रपलायते स्म । न किंचिदिति पुनरेव प्रतिनिवर्तते स्म । निवृत्य च बोधिसत्त्वस्योपरि नानाविधानि प्रहरणान्युत्सृजति स्म असिधनुशरशक्तितोमरपरश्वधभुशुण्डिमुसलकणयगदाचक्रवज्रमुद्गरपादपशिलापाशायोगुडानतिभयानकान् । ते चोत्क्षिप्तमात्रा नानाविधानि पुष्पदामानि पुष्पवितानानि इव संतिष्ठन्ते स्म । मुक्तपुष्पकुसुमानि च महीमवकिरन्तो[3] माल्यदामानि चावलम्बमानानि बोधिवृक्षं विभूषयन्ति स्म । तांश्च
R 402 व्यूहान् विभूतिं दृष्ट्वा बोधिसत्त्वस्य मारः पापीयानीर्ष्यामात्सर्योपहतचेता[4] बोधिसत्त्वमब्रवीत्–उत्तिष्ठोत्तिष्ठ हे राजकुमार, राज्यं भुङ्क्ष्व[5], तावत्तव पुण्यम्, कुतस्ते मोक्षप्राप्तिः ?

L 318 अथ बोधिसत्त्वो धीरगम्भीरोदारश्लक्ष्णमधुरया वाचा मारं पापीयसमेतदवोचत्–त्वया तावत्पापीयन्नेकेन निर्गडेन[6] यज्ञेन कामेश्वरत्वं प्राप्तम् । मया त्वनेकानि यज्ञकोटीनियुतशतसहस्राणि निर्गडानि[7] यष्टानि । करचरणनयनोत्तमाङ्गानि च निकृत्य[8] निकृत्यार्थिभ्यो[9] दत्तानि । गृहधनधान्यशयनवसनं चंक्रमोद्यानानि चानेकशो याचनकेभ्यो निसृष्टानि सत्त्वानां मोक्षार्थिना ॥

अथ खलु मारः पापीयान् बोधिसत्त्वं गाथया प्रत्यभाषत् –

यज्ञो मयेष्टस्त्वमिहात्र[10] साक्षी
निरर्गडः पूर्वभवेऽनवद्यः ।
तवेह साक्षी न तु कश्चिदस्ति
किंचित्प्रलापेन पराजितस्त्वम् ॥ ८७ ॥

बोधिसत्त्व आह – इयं पापीयन् मम भूतधात्री प्रमाणमिति ॥

अथ बोधिसत्त्वो मारं मारपर्षदं च मैत्रीकरुणापूर्वंगमेन चित्तेन स्फुरित्वा सिंहवदभीतोऽनुत्त्रस्तोऽस्तम्भी[11] अदीनोऽलीनः असंक्षुभितोऽलुलितो विगतभयलोमहर्षः शङ्खध्वजमीनकलश-
R 403 स्वस्तिकाङ्कुशचक्राङ्कमध्येन जालवितानावनद्धेन[12] सुरुचिर[13]ताम्रनखालंकृतेन मृदुतरुणसुकुमारेणानन्तकल्पापरिमितकुशलमूलसंभारोपचितेन दक्षिणेन पाणिना सर्वकायं परिमार्ज्य सलीलं महीं पराहनति स्म । तस्यां च वेलायामिमां गाथामभाषत् –

इयं मही सर्व जगत्प्रतिष्ठा
अपक्षपाता सचराचरे समा ।

१ R प्रपलायमानः for प्रपलानः. २ R °वितानानि for °विताने. ३ R विकिरन्तो for अवकिरन्तो. ४ R मात्सर्योपहतो for °पहतचेता. ५ R भुक्त्वा for भुंक्ष्व. ६ R निरर्गलेन for निर्गडेन. ७ R निरर्गलानि. ८ R om. निकृत्य. ९ R याचकेभ्यो for अर्थिभ्यो. १० R मया यष्टः for मयेष्टः. ११ R उत्त्रस्तो for अनुत्त्रस्तो. १२ R अवबद्धेन for आनद्धेन. १३ R सुरुचिरगात्र° for सुरुचिर°.

इयं प्रमाणा[1] मम नास्ति मे मृषा
साक्षित्वमस्मि[2] मम संप्रयच्छतु ॥ ८८ ॥

संस्पृष्टमात्रा चेयं महापृथिवी बोधिसत्त्वेन षड्विकारमकम्पत् प्राकम्पत संप्राकम्पत् । अरणत् प्रारणत् संप्रारणत् । तद्यथापि नाम मागधिकानां कांस[3]पात्री काष्ठेनाभ्याहता[4] रणत्यनुरणति, L 319 एवमेवेयं महापृथिवी बोधिसत्त्वेन पाणिताडिता रणत्यनुरणति स्म ॥

अथ खलु यस्यां त्रिसाहस्रमहासाहस्रलोकधातौ स्थावरा नाम महापृथिवीदेवता सा कोटिशतपृथिवीदेवतापरिवारा सर्वां महापृथिवीं संप्रकम्प्य नातिदूरे बोधिसत्त्वस्य पृथिवीतलं भित्त्वार्धकायाभ्युन्नाम्य सर्वालंकारप्रतिमण्डिता येन बोधिसत्त्वस्तेनावनतकाया प्राञ्जलीकृता बोधिसत्त्वमेतदवोचत् – एवमेतन्महापुरुष एवमेतत् यथा त्वयाभिहितम् । वयमत्र प्रत्यक्षाः । अपि तु भगवंस्त्वमेव सदेवकस्य लोकस्य परमसाक्षीभूतः प्रमाणभूतश्चेति[5] । एवमुक्त्वा स्थावरा महापृथिवीदेवता मारं पापीयांसमनेकप्रकारं निर्भर्त्स्य बोधिसत्त्वं चाभ्यभिस्तुत्य[6] विविधं च स्वकं प्रभावं संदर्श्य सपरिवारा तत्रैवान्तरधात्[7] ॥

तं श्रुत्व मेदिनिरवं स शठः ससैन्यः R 404
उत्त्रस्त भिन्नहृदयो प्रपलान सर्वे ।
श्रुत्वेव सिंहनदितं हि वने शृगालाः
काका व[8] लोष्टुपतने सहसा प्रणष्टाः ॥ ८९ ॥

अथ खलु मारः पापीयान् दुःखितो दुर्मना अनात्तमना अपत्रपमाणरूपो मानाभिभवान्न गच्छति स्म । न निवर्तते स्म । न पलायते स्म । पश्चान्मुखं स्थित्वा उत्तरि सेनामामन्त्रयते स्म – सहिताः समग्रास्तावद्भवन्तस्तिष्ठन्तु मुहुर्तं यावद्वयं ज्ञास्यामो यदि तावच्छक्येतायम्[9] अनुनयेनोत्थापयितुम् । मा खल्वेवंरूपस्य सत्त्वरत्नस्य सहसा विनाशो भूदिति ॥

अथ खलु मारः पापीयान् स्वा दुहितॄरामन्त्रयते स्म – गच्छध्वं यूयं कन्यकाः, बोधि- L 320 मण्डमुपसंक्रम्य बोधिसत्त्वस्य जिज्ञासनां कुरुत – किं सरागोऽथ वीतरागः । किं मूकोऽथ प्रज्ञः[10] । किमन्धोऽथ देशज्ञोऽर्थपरायणः[11] । दीनो वा धीरो वेति । इदं खलु वचनं श्रुत्वा ता अप्सरसो येन बोधिमण्डो येन च बोधिसत्त्वस्तेनोपसंक्रामन् । उपसंक्रम्य बोधिसत्त्वस्य पुरतः स्थित्वा द्वात्रिंशदाकारां स्त्रीमायामुपदर्शयन्ति स्म । तद्यथा । कतमा द्वात्रिंशदाकारा ? काश्चित्तत्रार्धवदनं छादयन्ति[12] स्म । काश्चिदुन्नतान् कठिनान् पयोधरान् दर्शयन्ति स्म । काश्चिदर्धविहसितैर्दन्तावलिं दर्शयन्ति स्म । काश्चिद्बाहूनुत्क्षिप्य विजृम्भमाणान् कक्षान्[13] दर्शयन्ति स्म । R 405 काश्चिद्बिम्बफलोपमानोष्ठान् दर्शयन्ति स्म । काश्चिदर्धनिमीलितैर्नयनैर्बोधिसत्त्वं निरीक्षन्ते स्म, दृष्ट्वा च शीघ्रं निमीलयन्ति स्म । काश्चिदर्धप्रावृतान् पयोधरान् दर्शयन्ति स्म । काश्चिच्छिथिला-

१ R प्रमाणं. २ R साक्षी त्वमस्मि for साक्षित्वमस्मि. ३ R कांस्य° for कांस°. ४ R पाणिनाहता for काष्ठेनाभ्याहता. ५ R om. प्रमाणभूतः. ६ R चाभ्यर्च्य for °भ्यभिस्तुत्य. ७ R अन्तर्दधे for अन्तरदधात्. ८ R काकेव for काका व. ९ R शक्यतेऽयम् for शक्येतायम्. १० R प्राज्ञः. ११ R अथापलयिनो for अर्थपरायणः. १२ R अच्छाद° for छाद°. १३ R °कक्षं for कक्षान्.

म्बरां समेखलां श्रोणीं दर्शयन्ति स्म। काश्चित्सं[1]मेखलां तनु[2]दुकूलनिवासितां श्रोणीं दर्शयन्ति
स्म। काश्चिज्झण[3]झणाशद्वान्नूपुरैः कुर्वन्ति स्म। काश्चिदेकावलीं स्तनान्तरेषूपदर्शयन्ति स्म।
काश्चिद्विनग्नानर्धोरूनुपदर्शयन्ति स्म। काश्चिच्छिरःस्वंसेषु च पत्रगुप्ताञ्शुकशारिकांश्चोपविष्टा-
नुपदर्शयन्ति स्म। काश्चिदर्धकटाक्षैर्बोधिसत्त्वं निरीक्षन्ते स्म। काश्चित्सुनिवस्ता अपि दुर्निवस्ता[4]ः
कुर्वन्ति स्म। काश्चिज्जघनरसनाः कम्पयन्ति स्म। काश्चित्संभ्रान्ता इव सविलासमितस्ततश्चंक्रम्यन्ते
स्म। काश्चिन्नृत्यन्ति स्म। काश्चिद्गायन्ति स्म। काश्चिद्विलसं[5]न्ति स्म, लज्जन्ते च। काश्चित्कदल्य[6]
L 321 इव वायुविधूता उरू कम्पयन्ति स्म। काश्चिद्गम्भीराः स्तनन्ति स्म। काश्चिदंशुकप्रावृताः
सघण्टारसना विहस्यन्त्यश्चंक्रम्यन्ते स्म। काश्चिद्वस्त्राण्याभरणानि च पृथिव्यां छोरँ[7]यन्ति
स्म। काश्चिद्गुह्यप्रकाशानि सर्वाभरणान्युपदर्शयन्ति स्म। काश्चिद्गन्धानुलिप्तान् बाहूनुप-
दर्शयन्ति स्म। काश्चिद्गन्धानुलेपनकुण्डलान्युपदर्शयन्ति स्म। काश्चिदवगुण्ठिकया वदनानि
R 406 छादयन्ति स्म, क्षणेक्ष[8]णा चोपदर्शयन्ति स्म। काश्चित्पूर्वहसितरमितक्रीडिता अन्योन्यं
स्मारयन्ति स्म। पुनरपि लज्जिता इव तिष्ठन्ति स्म। काश्चित्कुमारीरूपाण्यप्रसूतिरूपाणि
मध्यस्त्रीरूपाणि चोपदर्शयन्ति स्म। काश्चित्कामोपहितेन बोधिसत्त्वं निमन्त्रयन्ते स्म। काश्चिन्मुक्त-
कुसुमैर्बोधिसत्त्वमवकिरन्ति स्म। पुरतश्च स्थित्वा बोधिसत्त्वस्याशयं मीमांसन्ते स्म। वदनं च
निरीक्षन्ते स्म—किमयं रक्तेन्द्रियैः पश्यत्याहोस्विद्दूरीकरोति, नयने ईर्यते[9] वा न वेति। ताः
पश्यन्ति बोधिसत्त्वस्य वदनं शुद्धं विमलं चन्द्रमण्डलमिव राहुविनिर्मुक्तं सूर्यमिव प्रोदयमानं
यूपमिव कनकमयं विकसितमिव सहस्रपत्रं हव्यावसिक्तमिवानलं मेरुमिवाचलं चक्रवालमिवा-
भ्युद्गतं गुप्तेन्द्रियं नागमिव सुदान्तचित्तम्॥

अथ ता मारदुहितरो भूयस्या मात्रया बोधिसत्त्वस्य संलोभना[10]र्थमिमा गाथा अभाषन्त—

सुवसन्तके ऋतुवर आगतके
[11]रमिमो प्रिय फुल्लितपादपके।
तव रूप सुरूप सुशोभनके
वशवर्तिसुलक्षणचित्रितके[12]॥ ९०॥

L 322 [13]वय जात सुजात सुसंस्थितिकाः
सुखकारण देवनराण सु[14]संतुतिकाः।
उत्थि लघुं परिभुञ्ज सुयौवनिकं
R 407 दुर्लभ बोधि निवर्तय मानसकम्॥ ९१॥

प्रेक्षसि ताव इमा मरुकन्य सुलंकृतिका
तव कारण सज्जित भूषित आगतिका।

---

१ R सुमेखलां for समे°. २ R तदनुकूल° for तनुदुकूल°. ३ R रुणुरुणु° for झणझणा°. ४ R °निवस्त्रा for °निवस्ता. ५ R विलपन्ति for विलसन्ति. ६ R कदलिमिव for कदल्य इव. ७ R छारयन्ति for छोर°. ८ R क्षणेन for क्षणेक्षणा. ९ R ईर्ष्यते for ईर्यते. १० R सुलोभार्थम्. ११ R रमिमो. १२ R °विचित्रितको for °चित्रितके. १३ R वय for वय. १४ R om. सु°.

को रूपमिमं समवेक्ष्य न रज्यति रागरतो
अपि जर्जर काष्ठ व शोषितजीवितको ॥ ९२ ॥
केश मृदू सुरभी वरगन्धिनिका
मकुटाकुण्डलपत्रविबोधितआननिका।
सुललाट सुलेपनआननिका
पद्मविशुद्धविशालसुलोचनिका ॥ ९३ ॥
परिपूरितचन्द्रनिभाननिका
बिम्बसुपक्वनिभाधरिका।
शङ्खकुन्दे[1]हिमशुक्लसुदन्तिनिका
प्रेक्ष कान्त रतिलालसिकाम् ॥ ९४ ॥
कठिनपीनपयोधर उद्गतिकां R 408
त्रिवलीकृतमध्यसुसुन्दरिकाम्।
जघनाङ्गणचारुसुवित्थ[2]रिकां
प्रेक्षसु नाथ सुकामिनिकाम् ॥ ९५ ॥
गजभुजसंनिभऊरुणिकां
वलयनिरन्तरबाहनिकाम्।
काञ्चीवरश्रोणिसमण्डितिकां L 323
प्रेक्षहि नाथ इमा तव दासिनिकाम् ॥ ९६ ॥
हंसगतीसुविलम्बितगामिनिकां
मञ्जुमनोज्ञसुमन्मथभाषिणिकाम्।
ईदृशरूपसुभूषिणिकां
दिव्यरतीषु सुपण्डितिकाम् ॥ ९७ ॥
गीतकवादितनृत्यसुशिक्षितिकां
रतिकारणजातिसुरूपिणिकाम्।
यदि नेच्छसि कामसुलालसिकां R 409
सुष्टु सुवञ्चितकोऽसि भृशं खलु लोके ॥ ९८ ॥
निधि दृष्ट य[3]था हि पलायति को चि नरो
धनसौख्यमजानकु मूढमनो।
त्वमपि तथैव हि रागमजाननको
यः स्वयमा[4]गतिकां न हि भुञ्जसि कामिनिकाम् ॥ ९९ ॥ इति ॥

---

१ L °कुण्ड° for °कुन्द. २ R विच्छुरिकाः for सुवित्थरिकां. ३ R यतिको for यथा हि. ४ L आगतिको for आगतिकां.

अथ खलु भिक्षवो बोधिसत्त्वोऽनिमिषनयनः प्रहसितवदनः स्मितमुखोऽविकोपितैरिन्द्रियैरनभिसंस्कृतैर्गात्रैरजिह्मो[1]ऽरक्तोऽदुष्टोऽमूढः शैलेन्द्रवदप्रकम्प्योऽनवलीनो[2]ऽनवदीर्णोऽसंपीडितः सुसंस्थितया बुद्ध्या स्वाधीनेन ज्ञानमुखेनात्यन्तसुप्रहीणत्वात्क्लेशानां श्लक्ष्णया मधुरया वाचा ब्रह्मातिरेकेण घोषेण करविङ्क[3]रुतेन स्वरेण वल्गुना मनोज्ञेन तां मारदुहितॄन् गाथाभिः प्रत्यभाषत् —

कामा भो बहुदुःखसंचया दुःखमूला
ध्यानर्द्धी[4]तपसं च भ्रंसनी अबुधानाम्[5] ।
L 324 न स्त्रीकामगुणेभि तृप्तितां[6] विदुमाहुः[7]
प्रज्ञातृप्तिकरो भविर्ष्यहं अबुधानाम् ॥ १०० ॥

R 410 कामां सेवयतो विवर्धते पुन तृष्णा
पीत्वा वै लवणोदकं यथा नरु कश्चि ।
नात्मार्थे च परार्थि भोतिहा प्रतिपन्नो
आत्मार्थे च परार्थ उत्सुको भविताहम् ॥ १०१ ॥

फेनाबुद्बुदतुल्यसंनिभं तव रूपं
मायारङ्गमिवा विथापितं[9] स्वमतेन ।
क्रीडा वै सुपिनेव अध्रुवा अपिनित्या
बालानां सद चित्तमोहना अबुधानाम् ॥ १०२ ॥

नेत्रा बुद्बुदतुल्यसादृशा त्वचं[10]नद्धाः
कठिनं शोणितपिण्डमुद्गतं यथ गण्डम् ।
उदरो मूत्रपुरीषसंचयो असुचोक्षः[11]
कर्मक्लेशसमुत्थितो दुखयन्त्रः ॥ १०३ ॥

संमूढा यहि बालबुद्धयो न तु विज्ञाः
शुभतो कल्पयमान आश्रयं वितथेन ।
संसारे बहुकाल संसरी दुःखमूले
R 411 अनुभोक्ता निरयेषु वेदना बहुदुःखा ॥ १०४ ॥

श्रोणि प्रस्रवते विगन्धिका प्रतिकूला
उरूजङ्घक्रमाश्च संस्थिता यथ यन्त्रम् ।
भूतं युष्मि अहं[12] निरीक्षमी यथ माया
हेतुप्रत्ययतः प्रवर्तथा वितथेन ॥ १०५ ॥

---

१. R अजिह्मैः for अजिह्मो. २ R अनावदोनो for अनवलीनो. ३ R कलविङ्क° for करविङ्क°. ४ R ध्यानाधीतपश्च for ध्यानर्द्धीतपसं. ५ R अद्दढानाम् for अबुधानाम्. ६ R तृप्तिकां for तृप्तितां. ७ R विदुराहुः for विदुमाहुः. ८ R om. अहं. ९ R वितथविसथ for विथापितं. १० R दृश° for त्वच°. ११ R अशुचोक्तः for असुचोक्षः. १२ R om. अहं.

दृष्ट्वा कामगुणांश्च निर्गुणां गुणहीनां L 325
आर्यज्ञानपथस्य उत्पथां विपथांश्च[1] ।
विषपत्राग्निसमां महोरगां यथ क्रुद्धां
बाला अत्र हि मूर्छिता सुखसंज्ञाः ॥ १०६ ॥

कामादासु भवीति यो नर प्रमदानां
शीले उत्पथि ध्यायि उत्पथि मतिहीनो ।
ज्ञाने सो हि सुदूरि[2] तिष्ठते रतिलोलो
योऽसौ धर्मरतिं जहित्वना रमि कामैः ॥ १०७ ॥

नो रागेण सही वसाम्यहं न च दोषैः R 412
नो नैर्नित्य[3]अशुभअनात्मभिर्वसि सार्धम् ।
आरातीयरतीयसंवशेन च सार्धं
निर्मुक्तं मम चित्तु मारुतो गगने वा ॥ १०८ ॥

पूर्णं सर्वजगत्त्वमीदृशैर्यदिह स्यात्
कल्पं ताभि सहा समोसृतो[4] विहरेयम् ।
नो वा मह्य खिलं न रज्यना न च मोहो
आकाशःसमतुल्यमानसा जिन भोन्ति ॥ १०९ ॥

यद्यपीह रुधिरास्थिवर्जिताः
देवअप्सर सुनिर्मलाः शुभाः ।
तेऽपि सर्वि सुमहद्भये स्थिताः
नित्यभावरहिता अशाश्वताः ॥ ११० ॥

अथ खलु ता मारदुहितरः सुशिक्षिताः स्त्रीमायासु भूयस्या मात्रया रागमदर्पं संजनय्य चेष्टामुपदर्श्य गात्राणि विभूषयित्वा स्त्रीमायामुपदर्श्य बोधिसत्त्वं प्रलोभयन्ति स्म ॥

तत्रेदमुच्यते — L 326

तृष्णरती रतिश्च सहिता प्रमदवर[5] मधुरा
मारसमीरिताः सुललिता त्वरितमुपगताः । R 413
वायुसमीहिता[6] किसलयास्तरुणतरुलता
नृत्तंत[7] लोभयं नृपसुतं द्रुमविटपगतम् ॥ १११ ॥

एष वसन्तकालसमयः प्रवर ऋतुवरो
नारिनराण हर्षणकरो[8] निहततमरजः ।

---

१ R वितथां च for विपथांश्च. २ R सुन्दरि for सुदूरि. ३ R तैर्नित्याशुभानात्मभिः for नैर्नित्य-अशुचिअनात्मभिः. ४ R समाश्रितो for समोसृतो. ५ R om. °वर. ६ R °समीरिता for समीहिता. ७ R नृत्यत for नृत्तत. ८ R करोति for °करो.

कोकिलहंसमोररविशा[1] द्विजगणकलिल:
काल उपस्थितोऽनुभवितुं मदनगुणरतिम् ॥ ११२ ॥
कल्पसहस्रशीलनिरतो व्रततपचरितो
निश्चल शैलराजसदृशस्तरुणरविवपु: ।
मेघनिनादवल्गुवचनो मृगपतिनिनदो
वचनमुवाच सोऽर्थसहितं जगति हितकर: ॥ ११३ ॥
कामविवाद वैर कलहा मरणभयकरा
बालजनोपसेवित सदा बुधजनरहिता[2] ।
प्राप्तयु[3] काल यत्र सुगतैरमृतमधिगतं
अद्य भविष्य मारु जिनिया दशबलु अरहान् ॥ ११४ ॥
माय निर्दर्शयन्तिय वदं[4] शृणु कमलमुखा
R 414 राजु भविष्यसेश्वरवर: क्षितिपति बलवान् ।
तूर्यसहस्रसंप्रभणिते प्रमदवरगणे
किं मुनिवेषकेन भवतो विरम रति भजा ॥ ११५ ॥

L 327 बोधिसत्त्व आह[5] –

भेष्यि अहं हि राजु त्रिभवे दिवि भुवि महितो
ईश्वरु धर्मचक्रचरणो[6] दशबलु बलवान् ।
शैक्ष्यअशैक्ष्य[7]पुत्रनयुतै: सततसमितमभिनतो
धर्मरती रमिष्यि विषयैर्न रमि रमति मन: ॥ ११६ ॥

ता आहु: –

याव[8] च यौवनं न[9] गलितं प्रथमवयधरो
याव च व्याधि नाक्रमति[10] ते न च जर असिता[11] ।
याव च रूपयौवनधरो वयमपि च सुखी
R 415 ताव नु भुङ्क्ष्व कामरतय: प्रहसितवदन: ॥ ११७ ॥

बोधिसत्त्व आह –

याव च दुर्लभोऽद्य लभित: क्षणवर अमृतो
याव च वर्जिता क्षणदुखा असुरसुरपुरे ।
याव जरा च व्याधिमरणं न कुपितरुपवं
तावद्धु भावयिष्यि सुपथं अभयपुरगमम् ॥ ११८ ॥

१ R °मयूर° for °मोर°. २ R वद्ध for बुद्र°. ३ R प्राप्तयु for प्राप्तयु. ४ R निदर्शयन्ति अवदन् for निदर्शयन्तिय वदं. ५ R उवाच for आह. ६ R °करणो for °चरणो. ७ शैष्याशैष्य° for शैक्ष्यअशैक्ष्य°. ८ R यावच्च for याव च. ९ R सललितं for न गलितं. १० R [illegible] for नाक्रमति. ११ R असि च for असिता.

ता आहुः —

देवपुरालयेऽप्सरवृतस्त्रिदशपतिरिवा
यामसुयामसंतुषितके अमरवरस्तुतो ।
मारपुरे च कामरतयः प्रमदवशगताः
क्रीड्यनुभुङ्क्ष्व अस्[1]मभि सहा विपुलरतिकरः ॥ ११९ ॥

बोधिसत्त्व आह —

काम तृणोस[2]बिन्दुचपला शरदघनसमा L 328
पन्नगकन्यरोषसदृशा भृशभयकरणा ।
शक्रसुयामदेवतुषिता नमुचिवशगताः
कोऽत्र रमेत नार्यभिलषिते व्यसनपरिगते ॥ १२० ॥ R 416

ता आहुः —

पुष्पित पश्यिमां तरुवरां तरुणकिसलयां
कोकिलजीवजीवकरुता मधुकरविरुता ।
स्निग्धसुनीलकुञ्चितमृदुं धरणितलरुहे
किं नरसिंह सेवित वने रमसु युवतिभिः ॥ १२१ ॥

बोधिसत्त्व आ[3]ह —

कालवशात्पुष्पित इमे किसलय तरवो
क्षुत्पिपासिता मधुकराः कुसुममभिगताः ।
भास्करु शोषयिष्यति यदा धरणितलरुहां
पूर्वजिनोपभुक्तममृतं व्यवसितमिह मे ॥ १२२ ॥

मारदुहितर आहुः —

प्रेक्षहि ताव चन्द्रवदना नव[4]नलिनिनिभा
वाच मनोज्ञ श्लक्ष्ण दशना हिमरजतनिभा ।
ईदृश दुर्लभा सुरपुरे कुत मनुजपुरे
ते त्वय लब्ध ये सुरवरैरभिलषित सदा ॥ १२३ ॥ R 417

बोधिसत्त्व आह —

पश्यमि कायमेध्यमशुचिं कृमिकुलभरितं
जर्जरमित्व[5]रं च भिदुरं असुखपरिगतम् ।
यत्सचराचरस्य जगतः परमसुखकरं L 329
तत्पदमच्युतं प्रतिलभे बुधजनमहितम् ॥ १२४ ॥

---

१ R अस्मभिर्महा° for अस्मभि सहा. २ R तृणाग्रबिन्दु° for तृणोसबिन्दु°. ३ R उवाच for आह. ४ R नवनलिनावलिनिभा for नवनलिनि°. ५ R इन्धनं for इत्वरं.

ता चतुषष्टिकामलेलितानि[1] चमनुभविया
नूपुरमेखला अभिहनी विगलितवसना ।
कामशराहताः समदनाः प्रहसितवदनाः
किं तव आर्यपुत्र विकृतं यदि न भजसे ॥ १२५ ॥[2]
सर्वभवेषु दोष विदितोऽवचि विधुतरजा
कामसिशक्तिशूलसदृशाः समधुक्षुरसमाः ।
सर्पशिरोग्निकर्षुसदृशाः सुविदित इह[3] मे
R 418 तेनहु[4] नारिसंघ त्यजमी गुणहर प्रमदाः ॥ १२६ ॥
ता बहुभिः प्रकारनयुतैः प्रमदगुणकरैः
लोभयितुं न शेकु सुगतं गजकरभगतिम् ।
लज्जिहिरोत्रपात्तु[5] मुनिन प्रपतिषु चरणे
गौरवु तुष्ट प्रेम जनिया स्तविषु हितकरम् ॥ १२७ ॥
निर्मलपद्मगर्भसदृशा शरदिशशिमुखा
सर्पिहुतार्चितेजसदृशा कनकगिरिनिभा ।
सिध्यतु चिन्तिता ति प्रणिधि भवशतचरिता
स्वामुपतीर्य तारय जगद्व्यसनपरिगतम् ॥ १२७ ॥
ता कर्णिकारचम्पकनिभं स्तविय बहुविधं
कृत्व प्रदक्षिणं अतिशयं गिरिरिव अचलम् ।
गत्व पितुर्निपत्य शिरसा इदमवचि गिरं
R 419 साध्वस नं हि तात प्रतिघं अमरनरगुरोः ॥ १२९ ॥
L 330 पश्यति पद्मपत्रनयनः प्रहसितवदनो
नापि सरक्तु[6] प्रेक्षति जनं न पि च सभ्रूकुटिः ।
मेरु चलेय शुष्य उदधिः शशिरवि प्रपते
नैव स दोषदर्शि त्रिभवे प्रमदवश गमिया ॥ १३० ॥

अथ खलु मारः पापीयानिदं वचनं श्रुत्वा भूयस्या मात्रया दुःखितो दुर्मना अनात्तमनाः प्रदुष्टमनास्तां स्वदुहितॄनामन्त्रयते स्म – कथं भो न शक्यते स बोधिमण्डादुत्थापयितुम् ? मा खलु मूढः अज्ञोऽथ[7] युष्माकं रूपाकृतिं न पश्यति ?

अथ खलु ता मारदुहितरः स्वपितरं गाथाभिः प्रत्यभाषन्त –

श्लक्ष्णा मधुरं च भाषते न च रक्तो
गुरु गुह्यं च निरीक्षते न च दुष्टः ।

१ R °कलितानि for °ललितानि. २ After st. 125, R reads बोधिसत्त्व आह. ३ R मे ते for इह मे. ४ R बहुना for तेन हु. ५ R लज्जिसिरात्तपत्र° for लज्जिहिरोत्रपात्तु. ६ R स वक्तु for सरक्तु. ७ R प्राज्ञो for अज्ञो.

ई[1]र्या च[2]र्यां च प्रेक्षते न च मूढः
काया सर्व पनेति आशयो सुगभीरः ॥ १३१ ॥
निःसंशयेन विदिताः पृथु इञ्जिदोषाः
कामैर्वि[3]रक्तमनसो न च रागरक्तः । R 420
नैवास्त्यसौ दिवि भुवीह नरः सुरो वा
यस्तस्य चित्तचरितं परिजानयेया ॥ १३२ ॥
या इञ्जिमाय उपदर्शित तत्र तात
प्र[4]विलीयु तस्य हृदयं भवियः सरागः ।
तं दृष्ट एकमपि कम्पितु नास्य चित्तं
शैलेन्द्रराज इव तिष्ठति सोऽप्रकम्प्यः ॥ १३३ ॥
शतपुण्यतेजभरितो गुणतेजपूर्णः L 331
शीले तपस्मि चरितो बहुकल्पकोट्यः ।
ब्रह्मा च देव शुभतेज विशुद्धसत्त्वा
मूर्ध्नी निपत्य चरणेषु नमन्ति तस्मै ॥ १३४ ॥
निःसंशयेन विनिहत्य स मार[5]सेनां
पूर्वे जिनानुमत प्राप्स्यति अग्रबोधिम् ।
ताता न रोचति हि[6] नो व रणे विवादे
बलवत्सु विग्रहु सुकृच्छ्र अयं प्रयोगः ॥ १३५ ॥ R 421
प्रेक्षस्व तात गगने मणिरत्नचूडा
संबोधिसत्त्वनयुताः स्थित गौरवेण ।
रत्नाकरा कुसुमदामविचित्रिताङ्गा
संप्रेक्षिता दशबलैरिह पूजनार्थम् ॥ १३६ ॥
ये चेतना अपि च ये च अचेतना च
वृक्षाश्च शैल गरुँ[7]डेन्द्रसुरेन्द्रयक्षाः ।
अ[8]भ्योनता अभिमुखा गुणपर्वतस्य
श्रेयो भवे प्रतिनिवर्तितुमद्य तात ॥ १३७ ॥

अपि च ।

न तं त[9]रेद्यस्य न पारमुत्तरे
न तं ख[10]नेद्यस्य न मूलमुद्धरेत् ।

---

१ R ईर्ष्यां for ईर्यां. २ R om. चर्यां. ३ R विमुक्तमनसो for विरक्त°. ४ R प्रचलीयु for प्रविलीयु. ५ R मारसैन्यं for °सेनां. ६ R मनोऽपि रणे for हि नो व रणे. ७ R om. °गरुड°. ८ R अभ्यानता. ९ R तच्चरेद् for तं तरेत्. १० R तत्खनेद for तं खनेद्.

न कोपयेत्तं क्षमयेत्पुनोपि तं
कुर्यान्न तं येन भवेच्च दुर्मनाः ॥ १३८ ॥

L 332 R 422 अथ खलु भिक्षवस्तस्मिन् समयेऽष्टौ बोधिवृक्षदेवताः। तद्यथा – श्रीः वृद्धिः तपा श्रेयसी विदुः ओजोबला सत्यवादिनी समङ्गिनी च। ता एता बोधिसत्त्वं संपूज्य षोडशभिराकारैर्बोधिसत्त्वं श्रिया वर्धयन्ति स्म, अभिष्टुवन्ति स्म –

उपशोभसे त्वं विशुद्धसत्त्व चन्द्र इव शुक्लपक्षे।
अभिविरोचसे त्वं विशुद्धबुद्ध सूर्य इव प्रोदयमानः ॥ १३९ ॥
प्रफुल्लितस्त्वं[1] विशुद्धसत्त्व पद्ममिव वारिमध्ये।
नदसि त्वं विशुद्धसत्त्व केसरीव वनेराजावनुचारी[2] ॥ १४० ॥
विभ्राजसे त्वं अग्रसत्त्व पर्वतराज इव सागरमध्ये।
अभ्युद्गतस्त्वं विशुद्धसत्त्व चक्रवाल इव पर्वतः ॥ १४१ ॥
दुरवगाहस्त्वं अग्रसत्त्व जलधर इव रत्नसंपूर्णः।
विस्तीर्णबुद्धिरसि लोकनाथ गगनमिवापर्यन्तम् ॥ १४२ ॥
सुस्थितबुद्धिरसि विशुद्धसत्त्व धरणितलवत्सर्वसत्त्वोपजीव्यः।
अकलुषबुद्धिरसि अग्रसत्त्व अनवतप्त इव सरः सदा प्रसन्नः ॥ १४३ ॥
अनिकेतबुद्धिस्त्वं अग्रसत्त्व मारुत इव सर्वलोके सदाप्रसक्तः।
दुरासदस्त्वं अग्रसत्त्व तेजोराज इव सर्वमन्युना[3] प्रहीनः ॥ १४४ ॥
बलवानसि त्वं अग्रसत्त्व नारायण इव दुर्धर्षः।
दृढसमादानस्त्वं लोकनाथ अनुत्थाता[4] बोधिमण्डा ॥ १४५ ॥
R 423 अनिवर्त्यस्त्वं[5] अग्रसत्त्व इन्द्रकरोत्सृष्ट इव वज्रः।
सुलब्धलाभस्त्वं अग्रसत्त्व दशबलसमग्र्योऽचिराद्भविष्यसि ॥ १४६ ॥ इति॥

एवं खलु भिक्षवो बोधिवृक्षदेवताः षोडशाकारं बोधिसत्त्वं श्रिया वर्धयन्ति स्म ॥

तत्र भिक्षवः शुद्धावासकायिका देवपुत्राः षोडशभिराकारैर्मारं पापीयांसं दुर्बलं कुर्वन्ति स्म। कतमैः षोडशभिः? तद्यथा –

L 333 ध्वस्तस्त्वं पापीयं जीर्णक्रोञ्च इव ध्यायसे।
दुर्बलस्त्वं पापीयं जीर्णगज इव पङ्कमग्नः ॥ १४७ ॥
एकाक्यसि त्वं पापीयं निर्जित इव शूरप्रतिज्ञः।
अद्वितीयस्त्वं पापीयं अटव्यां त्यक्त इव रोगार्तः ॥ १४८ ॥
अबलस्त्वं पापीयं भारक्लिष्ट[6] इव बलीवर्दः।
अपविद्धस्त्वं पापीयं वातक्षिप्त इव तरुः ॥ १४९ ॥

---

१ R प्रस्फुटितः for प्रफुल्लित:. २ R वने राजवनचारी for वनराजावनुचारी. ३ R सर्वमन्यमना for सर्वमन्युना. ४ R अनुत्थितो for °त्थाता. ५ R ननिवर्त्यः for अनि°. ६ R भारक्लुष्ट for °क्लिष्ट.

कुपथस्थितस्त्वं पापीयं मार्गभ्रष्ट इव सार्थिकः ।
दी[1]नहीनस्त्वं पापीयं मत्सरिण इव दरिद्रपुरुषः ॥ १५० ॥ R 424
मुखरस्त्वं पापीयं वायस इव प्रगल्भः ।
मानाभिभूतस्त्वं पापीयं अकृतज्ञ इव दुर्विनीतः ॥ १५१ ॥
पलायिष्यसे त्वमद्य पापीयं क्रोष्टुक इव सिंहनादेन ।
विधु[2]नेष्यसे त्वमद्य पापीयं वैरम्भवायुविक्षिप्त इव पक्षी ॥ १५२ ॥
अकालज्ञस्त्वं पापीयं पुण्यप[3]रिक्षीण इव भैक्षुकः ।
विवर्जिष्यसे त्वमद्य पापीयं भिन्नभाजनमिव पांशुप्रतिपूर्णम् ॥ १५३ ॥
निगृहीष्यसे त्वमद्य पापीयं बोधिसत्त्वेन मै[4]न्त्रेणेवोरगाः ।
सर्वबलप्रहीणोऽसि पापीयं छिन्नकरचरण इवोरु[5]ण्डः ॥ १५४ ॥

एवं खलु भिक्षवः शुद्धावासकायिका देवपुत्राः षोडशभिराकारैर्मारं पापीयांसं दुर्बलमकार्षुः ॥

तत्र भिक्षवो बोधिपरिचारिका देवपुत्राः षोडशभिराकारैर्मारं पापीयांसं विच्छ[6]र्दयन्ति स्म । कतमैः षोडशभिः ? तद्यथा –

अद्य त्वं पापीयं निर्जेष्यसे बोधिसत्त्वेन परसैन्य इव शूरेण ।
निगृहीष्यसे त्वमद्य पापीयं बोधिसत्त्वेन दुर्बलमल्ल इव महामल्लेन ॥ १५५ ॥ L 334
अभिभविष्यसे त्वमद्य पापीयं बोधिसत्त्वेन ख[7]द्योतकमिव सूर्यमण्डलेन । R 425
वि[8]ध्वंसयिष्यसे त्वमद्य पापीयं बोधिसत्त्वेन मु[9]ञ्जमुष्टिमिव महामारुतेन ॥ १५६ ॥
वित्रासिष्यसे त्वमद्य पापीयं बोधिसत्त्वेन केसरिणेव शृगालः ।
प्रपातिष्यसे त्वमद्य पापीयं बोधिसत्त्वेन महासाल इव मूलछिन्नम् ॥ १५७ ॥
विलोप्स्यसे त्वमद्य पापीयं बोधिसत्त्वेनामित्रनगरमिव महाराजेन ।
विशोषिष्यसे त्वमद्य पापीयं बोधिसत्त्वेन गोष्पदवारीव महातपेन ॥ १५८ ॥
पलायिष्यसे त्वमद्य पापीयं बोधिसत्त्वेन व[10]ध्यविमुक्त इव धूर्तपुरुषः ।
उ[11]द्भ्रामिष्यसे त्वमद्य पापीयं बोधिसत्त्वेन अग्निदाहेनेव मधुकरवृन्दम् ॥ १५९ ॥
रोषि[12]ष्यसे त्वमद्य पापीयं बोधिसत्त्वेन राष्ट्रभ्रष्ट इव धर्मराजः ।
ध्यायिष्यसे त्वमद्य पापीयं बोधिसत्त्वेन जीर्णक्रौञ्च इव लूनपक्षः ॥ १६० ॥
विभ[13]र्त्स्यसे त्वमद्य पापीयं बोधिसत्त्वेन क्षीणपथ्य[14]ादन इवाटवीकान्तारे । L 335 R 426
विलपिष्यसे त्वमद्य पापीयं बोधिसत्त्वेन भिन्नयानपात्र इव महार्णवे ॥ १६१ ॥
आम्ला[15]यिष्यसे त्वमद्य पापीयं बोधिसत्त्वेन कल्पदाह इव तृ[16]णवनस्पतयः ।
विकिरिष्यसे त्वमद्य पापीयं बोधिसत्त्वेन महावज्रेणेव गिरिकूटम् ॥ १६२ ॥

---

१ R दीनदीनः for °हीनः २ R विधुनिष्यसे for विधुने°. ३ R om. 'परि°'. ४ R मन्त्रेण चोरगाः. ५ R इवा रुण्डः for इवोरुण्डः. ६ विच्छेदयन्ति for विच्छन्दयन्ति. ७ R खद्योतमिव for °तक°. ८ R विध्वंसिष्यसे. ९ R कुशमुष्टिमिव for मुञ्ज°. १० R बन्धनिर्मुक्त for वध्यविमुक्त. ११ R उत्त्रसिष्यसे for उद्भ्रामिष्यसे. १२ R उदभ्रमिष्यसे for रोषिष्यसे. १३ R विह्वनिष्यसे. for विभर्त्स्यसे. १४ R °पथ्योदन° for °पथ्यादन°. १५ R अम्लास्यसे for आम्लायिष्यसे. १६ R om. °तृण°.

एवं खलु भिक्षवो बोधिपरिचारिका देवपुत्राः षोडशाकारैर्मारं विच्छन्दयन्ति[1] स्म । न च मारः पापीयान् विनिवर्तते स्म ॥

तत्रेदमुच्यते –

भूतां चोदन श्रुत्व देवतगणा न निवर्तते सोऽन्तको
उच्छेथा हनथा विलुम्पथ इमां मा दास्यथा जीवितम् ।
एषोत्तीर्ण स्वयं ममापि विषयां तारिष्यते चापरां
नान्यं मोक्ष वदेमि किंचि श्रमणे उत्थापयेत्प्रक्रमेत् ॥ १६३ ॥

बोधिसत्त्व आह –

मेरुः पर्वतराज स्थानतु चले सर्वं जगन्नो भवेत्
R 427 सर्वे तारकसंघ भूमि प्रपते सज्योतिषेन्दुर्नभात् ।
सर्वा सत्त्व करेय एकमतयः शुष्येन्महासागरो
न त्वेव द्रुमराजमूलुपगतश्चाल्येत[2] अस्मद्विधः ॥ १६४ ॥

L 336 मार आह –

कामेश्वरोऽस्मि वसिता इह सर्वलोके
देवा सदानवगणा मनुजाश्च तिर्या[3] ।
व्याप्ता मया मम वशेन च यान्ति सर्वे
उत्तिष्ठ मह्य विषयस्थ वचं कुरुष्व ॥ १६५ ॥

बोधिसत्त्व आह –

कामेश्वरोऽसि यदि व्यक्तमनीश्वरोऽसि
धर्मेश्वरोऽहमपि पश्यसि तत्त्वतो माम् ।
कामेश्वरोऽसि यदि दुर्गति न प्रयासि
प्राप्स्यामि बोधिमवशस्य[4] तु पश्यतस्ते ॥ १६६ ॥

मार आह –

एकात्मकः श्रमण किं प्रकरोषि रण्ये
यं प्रार्थयस्यसुलभः खलु संप्रयोगः ।
R 428 भृग्वङ्गिरप्रभृतिभिस्तपसो[5] प्रयत्ना[6]
प्राप्तं न तत्पदवरं मनुजः कुतस्त्वम् ॥ १६७ ॥

बोधिसत्त्व आह –

अज्ञानपूर्वकु तपो ऋषिभिः प्रतप्तो
क्रोधाभिभूतमतिभिर्दिवलोककामैः ।

---

१ R विच्छेदयन्ति for विच्छन्द°. २ R °मूलोपगत for °मूलुप°. ३ R तीर्या for तिर्या. ४ R बोधि च समस्यतु for बोधिमवशस्य तु. ५ R तपसा for तपसो. ६ R प्रयत्नात्.

नित्यं[1] न नित्यमिति चात्मनि संश्रयद्भिः
मोक्षं च देशगमनस्थितमाश्रयद्भिः ॥ १६८ ॥
ते तत्वतोऽर्थरहिताः पुरुषं वदन्ति
व्यापिं प्रदेशगत शाश्वतमाहुरेके।
मूर्तं[2] न मूर्तमगुणं गुणिनां तथैव L 337
कर्ता न कर्त इति चाप्यपरे ब्रुवन्ति ॥ १६९ ॥
प्राप्याद्य बोधि विरजामिह चासनस्थः
त्वां जित्व मार विहतं सबलं ससैन्यम्।
वर्तेष्यि[3] अस्य जगतः प्रभवोद्भवं च
निर्वाण दुःखशमनं तथ शीतिभावम् ॥ १७० ॥

मारः क्रुद्धो दुष्टो रुष्टः परुषगिर पुन तु भणते गृहाण सुगौतमं
एषो ह्येकोऽरण्ये न्यस्तो ग्रहिय मम पुरतु व्रजेथा[4] लघुं वशु कुर्वथा[5]।
शीघ्रं गत्वा मह्यं गेहे हडिनिगडयुगल[6]विकृतं करोथ दुवारिकं R 429
स्वाँ मं[7] द्रक्ष्ये दुःखेनार्तं बहुविविध[8]जवितरवितं मरूण व चेटकम् ॥ १७१ ॥

बोधिसत्त्व आह —
शक्याकाशे लेख्यं चित्रं बहुविविधविकृत पदशः प्रकर्तु पृथक्पृथक्
शक्यो वायुः पाशैर्बद्धुं दिशविदिशगमनजवितो नरेण सुयत्नतः।
शक्या कर्तुं चन्द्रादित्यौ तमतिमिरवितिमिरकरौ नभोऽद्य महीतलं
शक्यो नाहं त्वत्सादृश्यैर्बहुभिरपि गणन[9]विरुतैर्द्रुमात्प्रतिचालितुम् ॥ १७२ ॥[10]

अभ्युत्थिता बलवती नमुचेश्चमू सा
हैंकार[11]शङ्खरव[12]भेरिमृदङ्गशब्दैः।
हा पुत्र वत्स दयिता किमसि प्रनष्टो
दृष्ट्वा[13] इमां नमुचिसेनमतीव भीमाम् ॥ १७३ ॥ R 430

जाम्बूनदाकनकचम्पकगर्भगौरा
सुकुमार देवनरसंस्तुत पूजनीय।
अद्य प्रयास्यसि विनाशु महारणेस्मिं L 338
मारस्य एष्यसि वशं असुरस्य वेन्दुः[14] ॥ १७४ ॥

ब्रह्मस्वरेण करविङ्करुतस्वरेणा
तान् यक्षराक्षसगणां सुगतो बभाषे[15]।

---

१ R नित्यमनित्यं for नित्यं ननित्यम्. २ R मूर्तिं न मूर्तिम् for मूर्तं न मूर्तम्. ३ R वार्तिष्येमस्य for वर्तेष्यि अस्य. ४ R व्रजता for व्रजथा. ५ R कुर्वंतां for कुर्वथा. ६ R चारिकाश्चा for °युगल°. ७ R चा यं for स्वा मं. ८ R बहुविध° for बहुविविध°. ९ R गणेन for गणन. १० After st. 172, R reads मार आह. ११ R हाहाकार for हाकार°. १२ R om. °रव°. १३ R दृष्टानिमां for दृष्ट्वा इमां. १४ R चन्द्रः for वेन्दुः. १५ R अवभाषसे for बभाषे.

आकाशु त्रासयितुमिच्छति यो ह्यविद्वान्
सो[1]ऽस्मद्विधं द्रुमवराद् ग्रहणाय इच्छेत् ॥ १७४ ॥
भित्त्वा च यो रजु गणेय महासहस्र
लोम्ना च सागरजलं च समुद्धरेद्यः ।
वज्रामयां गिरिवरां विकिरेत्क्षणाच्च
सो चापि मां तरुगतं न विहेठयेते[2] ॥ १७५ ॥
युगमन्तरस्मि स्थित मारु प्रदुष्टचित्तो
निष्कोष पाणिनमसिं प्रगृहीत्व तीक्ष्णम् ।
उत्तिष्ठ शीघ्र श्रमणास्ममतेन गच्छ
R 481 मा वेणुयष्टि हरितां व छिनद्मि तेऽद्य ॥ १७६ ॥

बोधिसत्त्व आह –

सर्वेयं त्रिसहस्र मेदिनि यदि मारैः प्रपूर्णा भवेत्
सर्वेषां यथ मेरु पर्वतवरः पाणीषु खड्गो भवेत् ।
ते मह्यं न समर्थ लोम चलितुं प्रागेव मां घातितुं
मॉ[3] दूषी नतिवेल संप्रनदहे स्मारेमि तेऽनदृढम् ॥ १७७ ॥
विध्यन्ति शैलशिखरां ज्वलिताग्निवर्णा
वृक्षां समूलक क्षिपी तथ ताम्रलोहम् ।
L 339 उष्ट्राश्च गोगजमुखास्तथ भैरवाक्षा
आशीविषा भुजग दृष्टिविषाश्च घोराः ॥ १७८ ॥
मेघेवँ[4] उत्थित चतुर्दिश गर्जमाना
वज्राशनी तथ अयोगुड वर्षमाणाः ।
असिशक्ति[5]तीक्ष्णपरशुं सविषांश्च बाणां
R 432 भिन्दन्ति मेदिनितलं प्रमथन्ति वृक्षां ॥ १७९ ॥
बाहूशतैः शरशतानि क्षिपन्ति केचि
आशीविषां हुतवहांश्च मुखा[6] सृजन्ति ।
मकरादिकांश्च जलजानुदधेर्गृहीत्वा
विध्यन्ति केचि भुजगां गरुडाश्च भूत्वा ॥ १८० ॥
केचित्सुमेरुसदृशानयसा गुडानि
तप्ताग्निवर्णशिखरा[7] निक्षिपन्ति रुष्टाः ।
आसाद्य[8] मेदिनितलं क्षुभयन्ति चोर्वी[9]
हेष्ठा पस्कन्ध[10] सलिलस्य विलोडयन्ति ॥ १८१ ॥

---

१ R यो for सो. २ विहेठयेच्च. ३ R कुर्यांच्चापि हि विग्रहे स्मा वार्मितेन दृढं for the line. ४ R मेघाश्च for मेघेव. ५ R कुन्तासि° for असिशक्ति°. ६ R मुखोत्सृजन्ति for मुखा सृजन्ति. ७ R °शिखराणि क्षिपन्ति for शिखरा निक्षि°. ८ R आच्छाद्य for आसाद्य. ९ R बोधि for चोर्वी. १० R पस्कन्द for पस्कन्ध.

केचित्पतन्ति पुरतस्तथ पृष्ठतोऽस्य
वामे च दक्षिण पतन्ति [1]अहो ति वत्स ।
विपरीतहस्तचरणा ज्वलितोत्तमाङ्गा
नेत्रेभि निश्चरति विद्युदिव प्रदीप्ता ॥ १८२ ॥
दृष्ट्वा विकारविकृता नमुचेस्तु सेना R 433
मायाकृतं च यथ प्रेक्षति शुद्धसत्त्वः ।
नैवात्र [2]मारु न बलं न जगन्न चात्मा
उदचन्द्ररूपसदृशो भ्रमति त्रिलोकः ॥ १८३ ॥
चक्षुर्न इस्त्रि पुरुषो नपि चात्मनीयं L 340
स्रोतं च घ्राण तथा जिह्व तथैव कायः ।
अध्यात्मशून्य बहिशून्य प्रतीत्य जाता
धर्मा इमे करकवेदकवीतिवृत्ताः ॥ १८४ ॥
सो सत्यवाक्यमकरोत्सद सत्यवादी
येनेह सत्यवचनेनिम शून्य धर्माः ।
ये केचि सौम्य विनये अनुकूल[3]पक्षाः
ते शस्त्र पाणिषु निरीक्षिषु पुष्पदामां ॥ १८५ ॥
सो दक्षिणे करतले रचिताग्रजाले R 434
ताम्रैर्नखैः सुरुचिरैः सह[4]स्रारचक्रे ।
जाम्बूनदार्चिसदृशैः शुभपुण्यजुष्टे
मूर्धातु याव स्पृशते चरणां सलीलम् ॥ १८६ ॥
बाहुं प्रसार्य यथ विद्युदिवा नभस्था
आभाषते वसुमतीनिय मह्य साक्षी ।
[5]चित्रा मि यज्ञ नयुतानपि यष्ट पूर्वे
न मि जातु याचनक बन्धकृता [6]नु दास्ये ॥ १८७ ॥
[6]आपो मि साक्षि तथ तेज तथैव वायु
ब्रह्मा प्रजापति सजोतिष चन्द्रसूर्याः ।
बुद्धा मि साक्षि दशसु स्थित ये दिशासु
यथ मह्य शीलव्रतउद्गत बोधिअङ्गाः ॥ १८८ ॥
दानं मि साक्षि तथ शीलु तथैव क्षान्तिः
[7]वीर्यापि साक्षि तथ ध्यान तथैव प्रज्ञा ।

---

१ R अहोविवस्त्रा for अहो ति वत्स. २ R मारुतबलं for मारु न बलं. ३ R यक्षाः for °पक्षाः ४ R सह मारचक्रैः for सहस्रारचक्रे. ५ R चित्राणि for चित्रा मिं. R न for नु. ६ R आपोऽसि for आपो मि. ७ R वीर्यं च for वीर्यापि.

L 341 R 435 चतुर प्रमाण मम साक्षि तथा अभिज्ञा
अनुपूर्वबोधिचरि सर्व ममेह साक्षी ॥ १८९ ॥
यावन्ति सत्त्व निखिला दशसु दिशासु
यत्तेषु[1] पुण्य बल शील़ु तथैव ज्ञानम् ।
यज्ञा निरर्गड य यष्ट शठैः[2] कलीभिः
ते मह्य रोम शतिमां कल नोपयन्ति ॥ १९० ॥
सो पाणिना धरणि आहनते सलीलं
रणते इयं वसुमती यथ कंसपात्री ।
मारो निशाम्य खु[3] मेदिनिये निरस्तः
शृणुते[4] वचं हनत गृह्णतु कृष्णबन्धुम् ॥ १९१ ॥
प्रस्विन्नगात्रु हततेजु विवर्णवक्त्रो
मारो जराभिहतु[5] आत्मनु[6] संप्रपश्यी[7] ।
उरताड[8] क्रन्दतु भयार्तु अनाथभूतो
भ्रान्तं[9] मनो नमुचिनो गतु चित्त मोहम् ॥ १९२ ॥
R 436 हस्त्यश्वयानरथ भूमितले निरस्ताः
धावन्ति राक्षस कुभाण्ड पिशाच भीताः ।
संमूढ मार्ग न लभन्ति अलेनत्राणाः
पक्षी दवाग्निपतनेव निरीक्ष्य क्रान्ताः ॥ १९३ ॥
माता स्वसा पितर पुत्र तथैव भ्राता
पृच्छन्ति तत्र कहि दृष्ट कहिं गता वा ।
अन्योन्य विग्रह करोन्ति तथैव हेठैः[10]
प्राप्ता वयं व्यसन जीवित नावकाशः ॥ १९४ ॥
L 342 सा मारसेन विपुला महती अक्षोभ्या
विभ्रष्ट सर्व विरलीकृत नैव संधिः ।
दिवसानि सप्त अभिजानि परस्परेण
आभासि दृष्ट यदि जीवसि तं खु प्रीताः[11] ॥ १९५ ॥
सा वृक्षदेवत तदा करुणां हि कृत्वा
वारीघटं ग्रहिय सिञ्चति कृष्णबन्धुम् ।
R 437 उत्तिष्ठ शीघ्र व्रजे[12] हे म पुनो विलम्ब
एवं हि तेष भवते गुरुउद्धराणाम् ॥ १९६ ॥

---

१ R यस्तेषु for यत्तेषु. २ R सतः कलाभिः for शठः कलीभिः. ३ R रिपु for खु. ४ R शृणुतेवं for शृणुते वचं. ५ R ज्वरा° for जरा°. ६ R आत्मनि. ७ R संप्रपश्यत् for °पश्यी. ८ R उरराड for °ताड. ९ R भ्रान्तमना नमुचिनो for भ्रान्तं मनो नमुचिनो. १० R हेताः for हेठाः, ११ R बन्धुपीता for तं खु प्रीता. १२ R व्रज हेमपुर मा for व्रज हे म पुनो.

मार आह —

दुःखं भयं व्यसन शोक विनाशनं च
धिक्कारशब्दमवमानगतं च दैन्यम् ।
प्राप्तोऽस्मि अद्य अपराध्य सुशुद्धसत्वे
अश्रुत्व वाक्य मधुरं हितमात्मजानाम् ॥ १९७ ॥

देवता आह —

भयं च दुःखं व्यसनं च दैन्यं
धिक्कारशब्दं वधबन्धनं च ।
दोषाननेकां लभते ह्यविद्वान्
निरापराधेष्[१]वपि राध्यते यः ॥ १९८ ॥

देवासुरा गरुड राक्ष[२]स किन्नरेन्द्रा
ब्रह्माथ शक्र परनिर्मित साकनिष्ठाः ।
भाषन्ति तस्य विजयं जय लोकवीर
यत्रेदृशी नमुचिसेन त्वया निरस्ता ॥ १९९ ॥

हारार्धचन्[३]द्र ध्वज छत्रपताक देन्ती R 438
पुष्पागरू तगरचन्दनचूर्णवर्षा ।
तूर्या पराहनिय वाक्यमुदीरयन्ते L 343
अ[५]च्छा द्रुमे तुव च शूर जितारिसिंहा ॥ २०० ॥

अत्रैव चासनवरे लभसेऽद्य बोधिं
आवेणिकां दशबलां प्रतिसंविदं च ।
सर्वं च बुद्धविषयं लभसेऽद्य शूर
मैत्रा विजित्य विपुलां शठमारपक्षां ॥ २०१ ॥

इह मारधर्षणकृते च रणे प्रवृत्ते
संबोधिसत्त्वबलविक्रम येभि दृष्टम् ।
षट्त्रिंशकोटिनयुता चतुरे च विंशा
येभिर्मनः प्रणिहितं वरबुद्धबोधौ ॥ २०२ ॥ इति ॥

॥ इति श्रीललितविस्तरे मारधर्षणपरिवर्तो नामैकविंशतितमोऽध्यायः ॥

---

१ R °राधेष्वपराध्यते for राधेष्वपि राध्यते. २ R °किन्नर राक्षसेन्द्रा for राक्षस किन्नरेन्द्रा.
३ R °हार° for °चन्द्र°. ४ R दन्ती for देन्ती. ५ R आच्छा for अच्छा.

# २२

## अभिसंबोधनपरिवर्तो द्वाविंशः ।

इति हि भिक्षवो बोधिसत्त्वो निहतमारप्रत्यर्थिको मर्दितकण्टको रणशिरसि विजितविजयः उच्छ्रितछत्रध्वजपताको विविक्तं कामैर्विविक्तं पापकैरकुशलैर्धर्मैः सवितर्कं सविचारं विवेकजं प्रीतिसुखं प्रथमं ध्यानमुपसंपद्य विहरति स्म । सवितर्कसविचा[1]राणां व्युपशमादध्यात्मसंप्रसादाचेतस एकोतिभावादवितर्कमविचारं समाधिजं प्रीतिसुखं द्वितीयं ध्यानमुपसंपद्य विहरति स्म । स [2]प्रीतेर्विरागादुपेक्षको विह[3]रति स्म स्मृतिमान् संप्रजानन् सुखं कायेन प्रतिसंवेदयते स्म L 344 यत्तदार्या आचक्षते स्म – उपेक्षकः स्मृतिमान् सुखविहारी, निष्प्रीतिकं तृतीयं ध्यानमुपसंपद्य विहरति स्म । स सुखस्य च प्रहाणाद्दुःखस्य च प्रहाणात्पूर्वमेव च सौमनस्यदौर्मनस्ययोरस्तंगमाद्दुःखासुखमुपेक्षास्मृतिपरिशुद्धं चतुर्थं ध्यानमुपसंपद्य विहरति स्म ॥

अथ बोधिसत्त्वस्तथा समाहिते चित्ते परिशुद्धे पर्यवदाते प्रभास्वरेऽ[4]नङ्गने विगतोपक्लेशे मृदुनि कर्मण्युपस्थिते आनिञ्ज्यप्राप्ते रात्र्यां प्रथमे यामे दिव्यस्य[5] चक्षुषो ज्ञानदर्शनविद्यासाक्षात्क्रियायै चित्तमभिनिर्ह[6]रति स्म, अभिनिर्नामयति स्म ॥

R 440 अथ बोधिसत्त्वो दिव्येन चक्षुषा परिशुद्धेनातिक्रान्तमानुष्यकेण सत्त्वान् पश्यति स्म च्यवमानानु[7]पपद्यमानान् सुवर्णान् दुर्वर्णान् सुगतान् दुर्गतान् हीनान् प्रणीतान् । यथाकर्मो[8]पगान् सत्त्वान् प्रजानाति स्म––इमे बत भोः सत्त्वाः कायदुश्चरितेन समन्वागताः, वाङ्मनोदुश्चरितेन समान्वागताः, आर्याणामपवादकाः मिथ्यादृष्टयः । ते मिथ्यादृष्टिकर्मधर्मसमादानहेतोः कायस्य भेदात्परं मरणादपायदुर्गतिविनि[9]पातं नरकेषू[10]पपद्यन्ते । इमे पुनर्भवन्तः सत्त्वाः कायसुचरितेन समन्वागताः, वाङ्मनःसुचरितेन समन्वागताः, आर्याणामनपवादकाः सम्य[11]ग्दृष्टयः, ते सम्यग्दृष्टिकर्मधर्मसमादानहेतोः कायस्य भेदात्सुगतौ स्वर्गलोकेषूपपद्यन्ते ॥

इति हि दिव्येन चक्षुषा विशुद्धेनातिक्रान्तमानुष्यकेण सत्त्वानापश्यति स्म च्यवमानानुपपद्यमानान् सुवर्णान् दुर्वर्णान् सुगतान् दुर्गतान् हीनान् प्रणीतान् यथाकर्मो[12]पगान् । एवं खलु भिक्षवो बोधिसत्त्वो रात्र्यां प्रथमे यामे विद्यां साक्षात्करोति स्म, तमो निहन्ति स्म, आलोकमुत्पादयति स्म ॥

L 345 अथ बोधिसत्त्वस्तथा समाहिते चित्ते परिशुद्धे पर्यवदाते प्रभास्वरे निर[13]ङ्गने विगतोपक्लेशे मृदुनि कर्मण्यु[14]पस्थिते आनिञ्ज्यप्राप्ते रात्र्यां मध्यमे यामे पूर्वनिवासानुस्मृतिज्ञानदर्शनविद्यासाक्षात्क्रियायै चित्तमभिनिर्हरति स्म, अभिनिर्नामयति स्म, आत्मनः परसत्त्वानां चानेकविधं पूर्वनिवासाननुस्मरति स्म । तद्यथा – एकामपि जातिं द्वे तिस्रश्चतस्रः पञ्च दश विंशति त्रिंशच्चत्वा-

---

१ R °सविरागाणां for °सविचाराणां. २ R प्रीतिविरागाद् for प्रीतेर्विरा° ३ R विहरन् for विहरति स्म. ४ R अनिङ्गिते for अनङ्गने. ५ R दिव्यचक्षुषो for दिव्यस्य च°. ६ निर्णामयति for °निर्हरति. ७ R उत्पद्य° for उपपद्य°. ८ R कामोपगान् for कर्मोप°. ९ R °विनिपातपर्यन्तं for °विनिपातं. १० R प्रपद्यन्ते for उपपद्यन्ते. ११ R वाङ्मनःसुदृष्टयः for सम्यग्दृष्टयः. १२ R °कर्मोपभोगान् for °कर्मोपगान्. १३ R निरिङ्गिते for निरङ्गने. १४ R कर्मण्यास्थिते for कर्मण्युपस्थिते.

त्रिंशत्पञ्चाशज्जातिशतं जातिसहस्रं जातिशतसहस्रम् अनेकान्यपि जातिशतसहस्राण्यपि जातिकोटीमपि जातिकोटीशतमपि जातिकोटीसहस्रमपि जातिकोटीनयुतमपि । अनेकान्यपि R 441 जातिकोटीसहस्राण्यपि अनेकान्यपि जातिकोटीशतसहस्राण्यपि अनेकान्यपि जातिकोटीनयुतशतसहस्राणि यावत्संवर्तकल्पमपि विवर्तकल्पमपि संवर्तविवर्तकल्पमपि अनेकान्यपि संवर्तविवर्तकल्पान्यनुस्मरति स्म—अमुत्राहमासन्नेवंनामा एवंगोत्र एवंजात्य एवंवर्ण एवमाहार[2] एवमायुष्प्रमाणमेवं चिरस्थितिकः, एवं सुखदुःखप्रतिवेदी । सोऽहं ततश्च्युतः सन्नमुत्रोपपन्नः, ततश्च्युत्वेहोपपन्न इति साकारं सोद्देशमनेकविधमात्मनः सर्वसत्त्वानां च पूर्वनिवासमनुस्मरति स्म॥

अथ बोधिसत्त्वस्तथा समाहितेन चित्तेन परिशुद्धेन पर्यवदातेन प्रभास्वरेण अनङ्गनेन विगतोपक्लेशेन मृदुना कर्मण्ये स्थितेनानिञ्ज्यप्राप्तेन रात्र्यां पश्चिमे यामे अरुणोद्घाटन[3]कालसमये नन्दीमुख्यां रात्रौ दुःखसमुदयास्तंगताया आश्रवक्षयज्ञानदर्शनविद्यासाक्षात्क्रियायै चित्तमभिनिर्हरति स्म, अभिनिर्नामयति स्म । तस्यैतदभवत्—कृच्छ्रं बतायं लोक आपन्नो[4] यदुत जायते L 346 जीर्यते[5] म्रियते च्यवते उपपद्यते । अथ च पुनरस्य केवलस्य महतो दुःखस्कन्धस्य निःसरणं न संप्रजानाति जराव्याधिमरणादिकस्य । अहो बतास्य केवलस्य महतो दुःखस्कन्धस्यान्तःक्रिया R 442 न प्रज्ञायते सर्वस्य जराव्याधिमरणादिकस्य ॥

ततो बोधिसत्त्वस्यैतदभूत्—कस्मिन् सति जरामरणं भवति, किंप्रत्ययं च पुनर्जरामरणम् ? तस्यैतदभूत्—जात्यां सत्यां जरामरणं भवति, जातिप्रत्ययं जरामरणम् ॥

अथ[6] बोधिसत्त्वस्य पुनरेतदभवत्—कस्मिन् सति जातिर्भवति, किंप्रत्यया च पुनर्जातिः ? तस्यैतदभवत्—भवे सति जातिर्भवति भवप्रत्यया च पुनर्जातिः ॥

अथ बोधिसत्त्वस्यैतभवत्—कस्मिन् सति भवो भवति, किंप्रत्ययश्च पुनर्भवः ? तस्यैतदभवत्—उपादाने सति भवो भवति, उपादानप्रत्ययो हि भवः ॥

अथ[6] बोधिसत्त्वस्यैतदभवत्—कस्मिन् सत्युपादानं भवति, किंप्रत्ययं च पुनरुपादानम् ? तस्यैतदभवत्—तृष्णायां सत्यामुपादानं भवति, तृष्णाप्रत्ययं[7] ह्युपादानम् ॥

अथ बोधिसत्त्वस्य पुनरेतदभवत्—कस्मिन् सति तृष्णा भवति, किंप्रत्यया च तृष्णा ? तस्यैतदभवत्—वेदनायां सत्यां तृष्णा भवति, वेदनाप्रत्यया च तृष्णा ॥

अथ बोधिसत्त्वस्य पुनरेतदभूत्—कस्मिन् सति वेदना भवति, किंप्रत्यया पुनर्वेदना ? R 443 तस्यैतदभूत्—स्पर्शे सति वेदना भवति, स्पर्शप्रत्यया हि वेदना ॥

अथ बोधिसत्त्वस्य पुनरेतदभवत्—कस्मिन् सति स्पर्शो भवति, किंप्रत्ययश्च पुनः L 347 स्पर्शः ? तस्यैतदभवत्—षडायतने सति स्पर्शो भवति, षडायतनप्रत्ययो हि स्पर्शः ॥

अथ बोधिसत्त्वस्य पुनरेतदभवत्—कस्मिन् सति षडायतनं भवति, किंप्रत्ययं च पुनः षडायतनम् ? तस्यैतदभवत्—नामरूपे सति षडायतनं भवति, नानारूपप्रत्ययं हि षडायतनम् ॥

---

१ R om. अनेकान्यपि. २ R om. एवमाहार. ३ R अरुणोपघाटन° for अरुणोद्घाटन°. ४ R उत्पन्नो for आपन्नो. ५ R जीव्यते for जीर्यते. ६ R अथ खलु for अथ. ७ R °प्रत्ययो for °प्रत्ययं.

अथ बोधिसत्त्वस्य पुनरेतदभवत्—कस्मिन् सति नामरूपं भवति, किंप्रत्ययं च पुनर्नामरूपम्? तस्यैतदभवत्—विज्ञाने सति नामरूपं भवति, विज्ञानप्रत्ययं हि नामरूपम् ॥

अथ बोधिसत्त्वस्य पुनरेतदभवत्—कस्मिन् सति विज्ञानं भवति, किंप्रत्ययं पुनर्विज्ञानम्? तस्यैतदभवत्—संस्कारेषु सत्सु विज्ञानं भवति, संस्कारप्रत्ययं च विज्ञानम् ॥

R 444 अथ बोधिसत्त्वस्य पुनरेतदभवत्—कस्मिन् सति संस्कारा भवन्ति, किंप्रत्ययाश्च पुनः संस्काराः? तस्यैतदभवत्—अविद्यायां सत्यां संस्कारा भवन्ति, अविद्याप्रत्यया हि संस्काराः ॥

इति हि भिक्षवो बोधिसत्त्वस्यैतदभूत्—अविद्याप्रत्ययाः संस्काराः, संस्कारप्रत्ययं विज्ञानम्, विज्ञानप्रत्ययं नामरूपम्, नामरूपप्रत्ययं षडायतनम्, षडायतनप्रत्ययं स्पर्शः, स्पर्शप्रत्ययं वेदना, वेदनाप्रत्ययं तृष्णा, तृष्णाप्रत्ययमुपादानम्, उपादानप्रत्ययं भवः, भवप्रत्यया जातिः, जातिप्रत्यया जरामरणशोकपरिदेवदुःखदौर्मनस्योपायासाः संभवन्ति । एवमस्य केवलस्य महतो दुःखस्कन्धस्य समुदयो भवति । समुदयः[1] समुदय इति ॥

L 348 इति हि भिक्षवो बोधिसत्त्वस्य पूर्वमश्रुतेषु धर्मेषु योनिशोमनसिकाराद्बहुलीकाराज्ज्ञानमुदपादि[2], चक्षुरुदपादि, विद्योदपादि, भूरिरुदपादि, मेधोदपादि, प्रज्ञोदपादि, आलोकः[3] प्रादुर्बभूव । कस्मिन्नसति जरामरणं न भवति, कस्य वा निरोधाज्जरामरणनिरोध इति । तस्यैतदभूत्—जात्यामसत्यां[4] जरामरणं न भवति, जातिनिरोधाज्जरामरणनिरोधः ॥

R 445 अथ बोधिसत्त्वस्य पुनरेतदभवत्—कस्मिन्नसति जातिर्न भवति, कस्य वा निरोधाज्जातिनिरोधः? तस्यैतदभवत्—भवेऽसति जातिर्न भवति, भवनिरोधाज्जातिनिरोधः ॥

अथ बोधिसत्त्वस्य पुनरप्येतदभवत्—कस्मिन्नसति[5] विस्तरेण यावत्संस्कारा न भवन्ति, कस्य वा निरोधात्संस्कारनिरोधः? तस्यैतदभवत्—अविद्यायां सत्यां संस्कारा न भवन्ति, अविद्यानिरोधात्संस्कारनिरोधः । संस्कारनिरोधाद्विज्ञाननिरोधो यावज्जातिनिरोधाज्जरामरणशोकपरिदेवदुःखदौर्मनस्योपायासा निरुध्यन्ते । एवमस्य केवलस्य महतो दुःखस्कन्धस्य निरोधो भवतीति ॥

इति हि भिक्षवो बोधिसत्त्वस्य पूर्वमश्रुतेषु धर्मेषु योनिशोमनसिकाराद्बहुलीकाराज्ज्ञानमुदपादि, चक्षुरुदपादि विद्योदपदि, भूरिरुदपादि, मेधोदपादि, प्रज्ञोदपदि, आलोकः प्रादुर्बभूव । सोऽहं भिक्षवस्तस्मिन् समये इदं दुःखमिति यथाभूतमज्ञासिषम् । अयमाश्रवसमुदयोऽयमाश्रवनिरोधः इयमाश्रवनिरोधगामिनी प्रतिपदिति यथाभूतमज्ञासिषम् । अय[6] कामाश्रवोऽयं भवाश्रवोऽयमविद्याश्रवोऽयं दृष्ट्याश्रवः । इहाश्रवा निरवशेषतो निरुध्यन्ते । इहाश्रवो निरवशेषमनाभासमस्तं गच्छतीति । R 446 इयमविद्या अयमविद्यासमुदयोऽयमविद्यानिरोध इयमविद्यानिरोधगामिनी प्रतिपदिति यथाभूतमज्ञासिषम् । इहाविद्या अपरिशेषमनाभासमस्तं गच्छतीति पेयालम् । अमी संस्कारा अयं संस्कारसमुदयोऽयं संस्कारनिरोध इयं संस्कारनिरोधगामिनी प्रतिपदिति यथाभूतमज्ञासिषम् । इदं विज्ञानमयं[7] विज्ञानसमुदयोऽयं विज्ञाननिरोध इयं विज्ञाननिरोधगामिनी प्रतिपदिति यथाभूतमज्ञासिषम् । इदं नामरूपमयं नामरूपसमुदयोऽयं नामरूपनिरोधः इयं नामरूपनिरोधगामिनी

१ R om. समुदयः समुदय इति. २ R उत्पादि for उदपादि. ३ R लोकः for आलोकः. ४ R जात्यां सत्यां for जात्यामसत्यां. ५ R सति for असति. ६ om. अयं. ७ R ज्ञानं for विज्ञानम्.

प्रतिपदिति यथाभूतमज्ञासिषम् । इदं षडायतनमयं षडायतनसमुदयोऽयं षडायतननिरोधः इयं
षडायतननिरोधगामिनी प्रतिपदिति यथाभूतमज्ञासिषम् । अयं स्पर्शोऽयं स्पर्शसमुदयोऽयं
स्पर्शनिरोधः इयं स्पर्शनिरोधगामिनी प्रतिपदिति यथाभूतमज्ञासिषम् । इयं वेदना अयं वेदना-
समुदयोऽयं वेदनानिरोध इयं वेदनानिरोधगामिनी प्रतिपदिति यथाभूतमज्ञासिषम् । इयं तृष्णा अयं
तृष्णासमुदयोऽयं तृष्णानिरोधः इयं तृष्णानिरोधगामिनी प्रतिपदिति यथाभूतमज्ञासिषम् ।
इदमुपादानमयमुपादानसमुदयोऽयमुपादाननिरोधः इयमुपादाननिरोधगामिनी प्रतिपदिति यथाभूत-
मज्ञासिषम् । अयं भवोऽयं भवसमुदयोऽयं भवनिरोधः इयं भवनिरोधगामिनी प्रतिपदिति
यथाभूतमज्ञासिषम् । इयं जातिरयं जातिसमुदयोऽयं जातिनिरोधः इयं जातिनिरोधगामिनी
प्रतिपदिति यथाभूतमज्ञासिषम् । इयं जरा अयं जरासमुदयोऽयं जरानिरोधः इयं जरानिरोध-
गामिनी प्रतिपदिति यथाभूतमज्ञासिषम् । इदं मरणमयं मरणसमुदयोऽयं मरणनिरोधः इयं L 350
मरणनिरोध[1]गामिनी प्रतिपदिति यथाभूतमज्ञासिषम् । इमे शोकपरिदेवदुःखदौर्मनस्योपायासाः ।
एवमस्य केवलस्य महतो दुःखस्कन्धस्य समुदयो भवति यावन्निरोधो भवतीति यथाभूतमज्ञा- R 447
सिषम् । इदं दुःखमयं दुःखसमुदयोऽयं दुःखनिरोधः इयं दुःखनिरोधगामिनी प्रतिपदिति
यथाभूतमज्ञासिषम् ॥

एवं खलु भिक्षवो बोधिसत्त्वेन रात्र्यां पश्चिमे यामेऽरुणोद्घाटनकालसमये नन्दीमुख्यां
रात्र्यौ यत्किंचित्पुरुषेण सत्पुरुषेणातिपुरुषेण महापुरुषेण पुरुषर्षभेण पुरुषनागेन पुरुषसिंहेन
पुरुषपुंगवेन पुरुषशूरेण पुरुष[2]धीरेण पुरुष[3]जानेन पुरुषपद्मेन पुरुषपुण्डरीकेण पुरुषधौरेयेणानुत्तरेण
पुरुषदम्यसारथिना एवंभूतेनार्येण ज्ञानेन ज्ञातव्यं बोद्धव्यं प्राप्तव्यं द्रष्टव्यं साक्षात्कर्तव्यम्, सर्वं
तदेकचित्तेक्षणसमा[4]युक्तया प्रज्ञया अनुत्तरां सम्यक्संबोधिमभिसंबुध्य त्रैविद्याधिगता ॥

ततो भिक्षवो देवा[5] आहुः—अवकिरत मार्षाः पुष्पाणि । अभिसंबुद्धो भगवान् ।[6] ये तत्र
देवपुत्राः पूर्वबुद्धदर्शिनस्तस्मिन् संनिपतिता आसंस्तेऽवोचन्—मा[7] स्म तावन्मार्षाः पुष्पाण्यवकिरत
यावत्तावद्भगवान्निमित्तं प्रादुःकरोति । पूर्वका अपि सम्यक्संबुद्धा निमित्तमकार्षुः, निर्मितामभि- R 448
निर्मिण्वन्ति स्म ॥

अथ खलु भिक्षवस्तथागतस्तान् देवपुत्रान् विमतिप्राप्ताञ्ज्ञात्वा सप्ततालमात्रं विहायस-
मभ्युद्गम्य तत्रस्थ इदमुदानमुदानयति स्म—

छिन्नवर्त्मोपशान्तरजाः शुष्का आस्रवा न पुनः स्रवन्ति । L 351
छिन्ने वर्त्मनि वर्तत दुःखस्यैषोऽन्त उच्यते ॥ १ ॥ इति ॥

ततस्ते देवपुत्रा दिव्यैः कुसुमैस्तथागतमभ्यवकिरन्ति स्म । ततो जानुमात्रं दिव्यानां
पुष्पाणां संस्तरोऽभूत् ॥

इति हि भिक्षवस्तथागतेऽभिसंबुद्धे विगतं तमोऽन्धकारम्, विशोधिता तृष्णा, विवर्तिता दृष्टिः,
विक्षोभिता[8]ः क्लेशाः, विशा[9]रिताः शल्याः, मुक्तो ग्रन्थिः, प्रपातितो मानध्वजः, उच्छ्रेपितो धर्मध्वजः,

१ R om. °निरोध°. २ R पुरुषवीरेण for °धीरेण. ३ R पुरुषयानेन for °जानेन. ४ R °समायुक्तं for °युक्तया. ५ R देवता for देवा. ६ R यत्तत्र for ये तत्र. ७ R om. मा स्म. ८ R विशोषिताः for विक्षोभिताः. ९ R विसारितं for विशारिताः.

उद्घाटिता अनुशयाः, ज्ञाता धर्मतथता, अवबुद्धा भूतकोटिः, परिज्ञातो धर्मधातुः, व्यवस्थापितः
सत्त्वधातुः, संवर्णितः सम्यक्त्वनियतो राशिः, विवर्णितो मिथ्यात्वनियतो राशिः, परिगृहीतोऽनियत-
राशिः, व्यवस्थापितानि सत्त्वेन्द्रियाणि[1], परिज्ञाताः सत्त्वचरिताः, अवबुद्धा सत्त्वव्याधिः, सत्त्वसमुत्थान-
सिद्धोऽमृतभैषजप्रयोगः, उत्पन्नो वैद्यराजः प्रमोचकः सर्वदुःखेभ्यः प्रतिष्ठापको निर्वाणसुखे, निषण्ण-
R 449 स्तथागतगर्भे तथागतमहाधर्मराजासने, सर्वं आबद्धो विमुक्तिपक्षः, प्रविष्टः सर्वज्ञतानगरं समव-
सृतं सर्वबुद्धैः[2], असंभिन्नो धर्मधातुप्रसरानुबोधेः । प्रथमे सप्ताहे भिक्षवस्तथागतस्तस्मिन्नेव बोधिमण्डे
निषण्णोऽस्थात्[3]—इह मयाऽनुत्तरां सम्यक्संबोधिमभिसंबुद्धः । मया अनवराग्रस्य जातिजरामरण-
दुःखस्यान्तः कृत इति ॥

समनन्तरप्राप्ते खलु पुनर्भिक्षवो बोधिसत्त्वेन सर्वज्ञत्वे अथ तत्क्षणमेव दशसु दिक्षु सर्वलोक-
धातुषु सर्वसत्त्वास्तत्क्षणं तल्लवं तन्मुहूर्तं परसुखसमर्पिता अभूवन् । सर्वलोकधातवश्च महताव-
L 352 भासेनावभास्यन्तः । याऽपि ता लोकान्तरिका अघा अघस्फुटा अन्धकारा इति पूर्ववत् ।
षड्विकारं च दशसु दिक्षु सर्वलोकधातवोऽकम्पत् प्राकम्पत् संप्राकम्पत् । अवेधत् प्रावेधत्
संप्रावेधत् । अचलत् प्राचलत् संप्राचलत् । अक्षुभ्यत् प्राक्षुभ्यत् संप्राक्षुभ्यत् । अरणत्
प्रारणत् संप्रारणत् । अगर्जत् प्रागर्जत् संप्रागर्जत् । सर्वबुद्धाश्च तथागतायाभिसंबुद्धाय साधुकारं[4]
ददन्ति स्म । धर्माच्छादांश्च संप्रेषयन्ति स्म । यैर्धर्माच्छादैरयं त्रिसाहस्रमहासाहस्रलोकधातुरनेक-
रत्नसंछन्नोऽभूत् । तेभ्यश्च रत्नछत्रेभ्यः एवंरूपा रश्मिजाला निश्चरन्ति स्म, यैर्दशसु दिक्षु
अप्रमेयासंख्येया लोकधातवोऽवभास्यन्ते । दशसु दिक्षु बोधिसत्त्वाश्च देवापुत्राश्चानन्दशब्दं
R 450 निश्चारयामासुः—उत्पन्नः सत्त्वपण्डितः । पद्मो ज्ञानसरसि संभूतोऽनुपलिप्तो लोकधर्मैः । सम-
न्ततो महाकरुणामेघं स्फुरित्वा धर्मधातुभवनं वर्षयिष्यति । धर्मवर्षविनये जनभैषजाङ्कुर-
प्ररोहणं सर्वकुशलमूलबीजानां विवर्धनं श्रद्धाङ्कुराणां दाता विमुक्तिफलानाम् ॥

तत्रेदमुच्यते—

मारं विजित्य सबलं स हि पुरुषसिंहो
ध्यानांमुखं[5] अभिमुखं अभितोऽपि शास्ता ।
त्रैविद्यता दशबलेन यदा हि प्राप्ता
संकम्पिता दश दिशो बहुक्षेत्रकोट्यः ॥ २ ॥

ये बोधिसत्त्व पुरि आगत धर्मकामा
चरणौ निपत्य इति भाषिषु मासि क्लान्तो ।
प्रत्यक्ष अस्मि चमु यादृशिका सुभीमा
L 353 सा प्रज्ञपुण्यबलवीर्यबलेन भग्ना ॥ ३ ॥

बुद्धैश्च क्षेत्रनयुतैः प्रहितानि छत्रा
साधो महापुरुष धर्षित मारसेनाम् ।

---

१ R सर्वेन्द्रियाणि for सत्त्वे°. २ R सर्वज्ञैः for °बुद्धैः. ३ R अभूत् for अस्थात्. ४ R साधुकालं for °कारं. ५ R ध्यानासुखं for ध्यानामुखं.

प्राप्तं त्वया पदवरं अमृतं विशोकं
सद्धर्मवृष्टि त्रिभवे अभिवर्ष शीघ्रम् ॥ ४ ॥
बाहुं प्रसार्य दशदिक्षु च सत्त्वसारा
आभाषयिंसु कलविङ्करुताय वाचा ।
बोधिर्यथामनुगता भवता विशुद्धा
तुल्यः समो[1]ऽसि यथ सर्पिणि सर्पिमण्डैः ॥ ५ ॥ R 451

अथ खलु भिक्षवः कामावचरा अप्सरसो बोधिमण्डनिषण्णं तथागतं प्राप्ताभिज्ञं परिपूर्णसंकल्पं विजितसंग्रामं निर्जितमारप्रत्यर्थिकमुच्छ्रितछत्रध्वजपताकं शूरं जयोद्गतं पुरुषं महापुरुषं वैद्योत्तमं महाशल्यहर्तारं सिंहं विगतभयलोमहर्षं नागं सुदान्तचित्तनिर्मलं त्रिमलविप्रहीनं वैद्यकं त्रैविद्यतामनुप्राप्तं पारगं चतुरोघोत्तीर्णं क्षत्रियमेकरत्नछत्रधारिणं त्रैलोक्यब्राह्मणं बाहितपापकर्[2]माणं भिक्षुं भिन्नविद्याण्डकोषं श्रमणं सर्वसङ्गसमतिक्रान्तं श्रोत्रियं[3] निःसृतक्लेशं शूरमप्रपातितध्वजं बलीयांसं दशबलधारिणं रत्नाकरमिव सर्वधर्मरत्नसंपूर्णं विदित्वा बोधिमण्डाभिमुखास्तथागतमाभिर्गाथाभिरभ्यस्ताविषुः—

एष द्रुमराजमूले अभिजित्य मारसैन्यं
स्थितु मेरुवदप्रकम्प्यो निर्भीरप्रलापी ।
अनेकबहुकल्पकोट्यो दानदमसंयमेन
समु[4]दानयं प्रबोधि तेनेष शोभतेऽद्य ॥ ६ ॥ R 452
अनेन बहुकल्पकोट्यः शीलव्रततपोभि L 354
जिह्मिकृत शक्र ब्रह्मा बोधिवर एषता हि ।
अनेन बहुकल्पकोट्यः क्षान्तिबलवर्मितेन
अधिवासिता दुखानि तेन प्रभ स्[5]वर्णवर्णा ॥ ७ ॥
अनेन बहुकल्पकोट्यो वीर्यबलविक्रमेण
परा[6]ङ्मुखां कृतास्या तेन मार जित सेना ।
अनेन बहुकल्पकोट्यो ध्याना अभिज्ञज्ञानैः
संपूजिता मुनीन्द्रस्तेनैव पूजितोऽद्य ॥ ८ ॥
अनेन बहुकल्पकोट्यः प्रज्ञाश्रुतसंचयेन
प्रगृहीत सत्त्वकोट्यस्तेन लघु बोधि प्राप्ता ।
अनेन जितु स्कन्धमारस्तथ मृत्युं[7] क्लेशमारः
अनेन जितु देवपुत्रमारस्तेनास्य नास्ति शोकः ॥ ९ ॥
ए[8]षो हि देवदेवो ( देवैरपि पूजनीयः ) पूजारहस्त्रिलोके R 453
पुण्यार्थिकान क्षेत्रं अमृताफलस्य दाता ।

---

१ R समापि for समोऽसि. २ R °पापधर्माण for °कर्माणं. ३ R स्वयभुवं for श्रोत्रियं. ४ R समुदानार्थे for समुदानयं. ५ R सुवर्णवर्णा. ६ R पश्चान्मुखी for पराङ्मुखा. ७ R मृत्युमारक्लेशः for मृत्यु क्लेशमारः. ८ R एषोऽति for एषो हि.

एष वरदक्षिणीयो उत्पातु दक्षिणाहि
नास्त्युत्तरस्य[1] नाशो यो[2] च वरबोधि लब्धा ॥ १० ॥
ऊर्णा विराजते[3]ऽस्य स्फरति[4] बहुक्षेत्रकोट्यो
जिह्मिकृत चन्द्रसूर्या अन्धकारालोक[5]प्राप्ता ।
एव हि सुरूपरूपो वररूप साधुरूपो
वरलक्षणो हितैषी त्रैलोक्यपूजनीयः ॥ ११ ॥
एष सुविशुद्धनेत्रो बहु प्रेक्षते स्वयंभूः
क्षत्रा[6] च सत्त्वकाया चित्तानि चेतना च ।
L 355 एषँ[7] सुविशुद्धश्रोत्रः शृणुते अनन्तशब्दां
दिव्यांश्च मानुषांश्च[8] जिनशब्दधर्मशब्दां ॥ १२ ॥
एष प्रभूतजिह्वः कलविङ्कमञ्जुघोषः
श्रोष्याम अस्य धर्मं अमृतं प्रशान्तगामिम् ।
R 454 दृष्ट्वा च मारसैन्यं न क्षुभ्यते मनोऽस्य
पुन दृष्ट्व देवसंघां न च हर्षते सुमेधा ॥ १३ ॥
शस्त्रैर्न[9] चापि बाणैर्जित एन मारसेना
सत्यव्रततातपोभि जितु एन दुष्टमल्लः ।
चलितो न चासना न च कायु वेधिनो[10]ऽस्यँ
न चै[11] स्नेहु नापि दोषस्तदनन्तरे अभूवन् ॥ १४ ॥
लाभा सुलब्ध तेषां मरुणां नराण चैव
ये तुभ्य धर्म श्रुत्वा प्रतिपत्तिमेष्यती हि ।
यत्पुण्य त्वां स्तवित्वा[12] जिन पुण्यतेज[13]राशे
सर्वे भवेम क्षिप्रं यथ त्वं मनुष्यचन्द्रः ॥ १५ ॥
बुद्धित्व बोधि पुरुषर्षभनायकेन
संक्रम्य क्षत्रनयुतानि विजित्य मारम् ।
ब्रह्मस्वरेण कलविङ्करुतस्वरेण
प्रथमेन गाथा इमि भाषित नायकेन ॥ १६ ॥
पुण्यविपाकु सुख सर्वदुःखापनेती[14]
R 455 अभिप्रायु सिध्यति[15] च पुण्यवतो नरस्य ।

१ R उत्तरेऽस्य for उत्तरस्य. २ R यथा च for या च. ३ R विभ्राजते for विराजते. ४ R स्फुरती for स्फरती. ५ R सत्त्व आलोकप्राप्त for अन्धकारालोक°. ६ R क्षेत्र for क्षत्रा. ७ R om. एष. ८ R मानुष्यांश्च. ९ R शस्त्रेण for शस्त्रैर्न. १० R बोधितो for वेधिनो. ११ R न चास्य for न च. १२ R तविदित्वा for स्तवित्वा. १३ R om. °तेज°. १४ R दुःखापनेत्री for °पनेती. १५ R ऋद्धय सिध्यति for सिध्यति.

क्षिप्रं च बोधि स्पृशते विनिहत्य मारं
शान्तापथो गच्छति च निर्वृतिशीतिभावम् ॥ १७ ॥

तस्मात्क पुण्यकरणे न भवेत तृप्तः
शृण्वंश्च धर्ममममृतं भवि को वितृप्तः । L 356
विजने वने[1] च विहरं भवि को वितृप्तः
कः सत्त्व अर्थकरणे न भवेद्धि तृप्तः ॥ १८ ॥

पाणिं प्रसार्य समुवाच च बोधिसत्त्वां
पूजां कृता व्रजत क्षेत्र स्वकस्वकानि ।
सर्वेऽभिवन्द्य चरणौ च तथागतस्य
नानावियूह गत क्षेत्र स्वकस्वकानि ॥ १९ ॥

दृष्ट्वा च तां [2]नमुचिनां महतीमवस्थां
विक्रीडितां च सुगतस्य तथा सलीलम् ।
बोधाय चित्तमतुलं प्रणिधाय सत्त्वां
मारं विजित्य सबलं अमृतं स्पृशेम ॥ २० ॥

अभिसंबुद्धस्य भिक्षवस्तथागतस्य बोधिवृक्षमूले सिंहासनोपविष्टस्य तस्मिन् क्षणेऽप्रमेयानि R 456 बुद्धविक्रीडितान्यभूवन्, यानि न सुकरं कल्पेनापि निर्देष्टुम् ॥

तत्रेदमुच्यते –

करतलसदृशाभूत्सुस्थिता मेदिनीयं
विकसितशतपत्राश्चोद्गता रश्मिजालैः[3] ।
अमरशतसहस्रा ओनमी बोधिमण्डं
इमु प्रथम निमित्तं सिंहनादेन दृष्टम् ॥ २१ ॥

द्रुमशतत्रिसहस्रो बोधिमण्डे नमन्ते
गिरिवर तथ नेके शैलराजश्च मेरुः ।
दशबलमधिगम्य ब्रह्मशक्रा नमन्ते L 357
इदमपि नरसिंहे [4]क्रीडितं बोधिमण्डे ॥ २२ ॥

रश्मिशतसहस्रा स्वेशरीरात्प्रभावा
[5]स्फुरि जिनवर क्षेत्रा त्रीणि शान्ता अपायाः ।
तत[6] क्षणसुमुहूर्ते शोधिता चाक्षणानि
न च खिलमददोषा बाधिषू[7] कंचि सत्त्वम् ॥ २३ ॥

---

१ R om. वने. २ R नमुचिनो for °चिनां. ३ R रश्मिमन्तः for °जालैः. ४ R विक्रीडितं for क्रीडितं. ५ R °क्षेत्रां for क्षत्रा. ६ R तत्क्षण° for तत क्षण°. ७ R बोधिषु for बाधिषु.

R 457 इयमपि[1] नरसिंहस्यासनस्थस्य क्रीडा
शशिरविमणिवह्निविद्युताभा च दिव्या ।
न तपति अभिभूता भानुवत्योर्णपाशा[2]
न च जगदिह कश्चित्प्रेक्षते शास्तु मूर्धम् ॥ २४ ॥

इयमपि[1] नरसिंहस्यासनस्थस्य क्रीडा
करतलस्पृशनेना कम्पिता चोर्वि सर्वा ।
येन नमुचिसेना क्षोभिता तूलभूता
नमुचि इषु गृहीत्वा मेदिनी व्यालिखेद्य
इदमपि नरसिंहस्यासने क्रीडितं भूत् ॥ २५ ॥ इति ॥

॥ इति श्रीललितविस्तरेऽभिसंबोधनपरिवर्तो नाम द्वाविंशतितमोऽध्यायः ॥

१ R इदमपि for इयमपि. २ R भासयत्युर्णकेशा for भानुवत्योर्णपाशा.

# २३

## संस्तवपरिवर्तस्त्रयोविंशः ।

अथ खलु शुद्धावासकायिका देवपुत्रा बोधिमण्डनिषण्णं तथागतं प्रदक्षिणीकृत्य दिव्यैश्चन्दनचूर्णवर्षैरभ्यवकीर्य आभिः सा[1]रूप्याभिर्गाथाभिरभितुष्टुवुः[2] –

उत्पन्नो लोकप्रद्योतो लोकनाथः प्रभंकरः । L 358
अन्धभूतस्य लोकस्य चक्षुर्दाता रणंजहः ॥ १ ॥ R 458
भवा[3]न् विजितसंग्रामः पुण्यैः पूर्णमनोरथः ।
संपूर्णः शुक्लधर्मैश्च जग[4]त्त्वं तर्पयिष्यसि ॥ २ ॥
उत्तीर्णपङ्को ह्यनिघः स्थले तिष्ठति गौतमः ।
अन्यां सत्त्वां महोघेन[5] प्रोद्गतस्तारयिष्यसि ॥ ३ ॥
उद्गतस्त्वं महाप्राज्ञो लोकेष्वप्रतिपुद्गलः ।
लोकधर्मैरलिप्तस्त्वं जलस्थमिव पङ्कजः ॥ ४ ॥
चिरप्रसुप्तमिमं लोकं तमस्कन्धावगुण्ठितम् ।
भवान् प्रज्ञाप्रदीपेन समर्थः प्रतिबोधितुम् ॥ ५ ॥
चिरातुरे जीवलोके क्लेशव्याधिप्रपीडिते ।
वैद्यराट् त्वं समुत्पन्नः सर्वव्याधिप्रमोचकः ॥ ६ ॥
भविष्यन्त्यक्षणा शून्या त्वयि नाथे समुद्गते ।
मनुष्याश्चैव देवाश्च भविष्यन्ति सुखान्विताः ॥ ७ ॥
येषां त्वद्दर्शनं सौम्य एष्यसे पुरुषर्षभ ।
न ते कल्पसहस्राणि जातु यास्यन्ति दुर्गतिम् ॥ ८ ॥
पण्डिताश्चाप्यरोगाश्च धर्मं श्रोष्यन्ति येऽपि ते ।
गम्भीराश्चोपधीक्षीणा भविष्यन्ति विशारदाः ॥ ९ ॥
मोक्ष्यन्ते च लघुं सर्वे छित्वा वै क्लेशबन्धनम् । R 459
यास्यन्ति निरुपादानाः फलप्राप्तिवरं शुभम् ॥ १० ॥
दक्षिणीयाश्च ते लोके आहुतीनां प्रतिग्रहाः ।
न तेषु दक्षिणा न्यूना सत्त्वानिर्वाणहेतुकी ॥ ११ ॥

एवं खलु भिक्षवः शुद्धावासकायिका देवपुत्रास्तथागतमभिष्टुत्यैकान्ते प्राञ्जलयस्तस्थुः, L 359
प्राञ्जलयस्तथागतं नमस्यन्तः ॥[7]

अथ खलु चाभास्वरा देवपुत्रास्तथागतं बोधिमण्डनिषण्णं दिव्यैर्नानाप्रकारैः पुष्पधूपगन्ध[8]माल्यविलेपन[9]छत्रध्वजपताकाभिः संपूज्य त्रिप्रदक्षिणीकृत्य चाभिर्गाथाभिरभ्यस्ताविषुः –

---

१ R om. सारूप्याभिः. २ R अभ्यष्टावीत् for अभितुष्टुवुः. ३ R भगवान् for भवान्. ४ R जगन्ति for जगत्त्वं. ५ R महाऽघेन प्राज्ञतः for महोघेन प्रोद्गत. ६ R मोक्षं ते for मोक्ष्यन्ते. ७ R om. प्राञ्जलयस्तथागतं नमस्यन्तः. ८ R om. गन्ध°. ९ R °[illegible]° for °[illegible]°.

गम्भीरबुद्धे मधुरस्वरा मुने
ब्रह्मस्वरा मुनिवरगीत सुस्वरम् ।
वराग्रबोधि परमार्थप्राप्ता
[1]सर्वस्वरे पारगते नमस्ते ॥ १२ ॥

त्रातासि दीपोऽसि परायणोऽसि
नाथोऽसि लोके कृपमैत्रचित्तः ।
वैद्योत्तमस्त्वं खलु शल्यहर्ता
चिकित्सकस्त्वं परमं हितंकरः ॥ १३ ॥

R 460 दीपंकरस्य सहदर्शनं त्वया
समुदानितं मैत्रकृपा[2]भ्रजालम् ।
प्रमुञ्च[3] नाथा अमृतस्य धारां
शमेहि तापं सुरमानुषाणाम् ॥ १४ ॥

त्वं पद्मभूतं त्रिभवेष्वलिप्तं
त्वं मेरुकल्पो विचलो ह्यकम्प्यः ।
त्वं वज्रकल्पो ह्यचलप्रतिज्ञ
त्वं चन्द्रमा सर्वगुणाग्रधारी ॥ १५ ॥

एवं खलु भिक्षव आभास्वरा देवास्तथागतमभिसंस्तुत्यैकान्ते तस्थुः प्राञ्जलयस्तथागतं नमस्यन्तः ॥

अथ खलु सुब्रह्मदेवपुत्रप्रमुखा ब्रह्मकायिका देवास्तथागतं बोधिमण्डनिषण्णमनेकमणिरत्नकोटीनयुतशतसहस्रप्रत्युप्तेन रत्नजालेनाभिछाद्य त्रिप्रदक्षिणीकृत्य चाभिः सारूप्याभिर्गाथाभिरभ्यस्ताविषुः—

शुभविमलप्रज्ञ प्रभतेजधरा
द्वात्रिंशल्लक्षणवराग्रधरा ।
स्मृतिमं मतिमं गुणज्ञानधरा
अकिलान्तका शिरसि[4] वन्दमि ते ॥ १६ ॥

R 461 अमला विमला त्रिमलैर्विमला
त्रैलोक्यविश्रुत त्रिविद्यगता ।
त्रिविधाविमोक्षवरचक्षुददा
वन्दामि त्वां त्रिनयनं विमलम् ॥ १७ ॥

---

१ R सत्यस्वरे for सर्व°. २ R °कृपाग्र° for °कृपाभ्र°. ३ R प्रमुञ्चमाना for प्रमुञ्च नाथा.
४ R शिरसा for शिरसि.

कलिकलुष उद्धृत सुदान्तमना
क्रुपकरुण उद्गत [1]जगार्थकरा । L 360
मुनि मुदित उद्गत प्रशान्तमना
द्वय[2]मतिविमोचक उपेक्षरता ॥ १८ ॥

व्रत तपस[3] उद्गत जगार्थकरा ।
स्वचरीविशुद्धचरिपारगता ।
चतुसत्य[4]दर्शक विमोक्षरता
मुक्तो विमोचयसि चान्यजगत् ॥ १९ ॥

बलवीर्य आगतु इहा नमुचि
प्रज्ञाय वीर्य तव[5] मैत्र्य जितो ।
प्राप्तं च ते पदवरं अमृतं R 462
वन्दाम ते शठचमूमथना ॥ २० ॥

एवं खलु भिक्षवः सुब्रह्मदेव[6]पुत्रप्रमुखा ब्रह्मकायिका देवास्तथागतमाभिर्गाथाभिरभिष्टुत्य एकान्ते तस्थुः प्राञ्जलयस्तथागतं नमस्यन्तः ॥

अथ खलु ते शुक्लपाक्षिका मारपुत्रा येन तथागतस्तेनोपसंक्रामन् । उपसंक्रम्य महारत्नछत्रवितानैस्तथागतमभिच्छाद्य प्राञ्जलयस्तथागतमाभिः सारूप्याभिर्गाथाभिरभ्यस्ताविषुः —

प्रत्यक्षेऽस्मि बले तवा[7]तिविपुले मारस्य घोरा चमू
यत्सा[8] मारचमू महाप्रतिभया एकक्षणे[9] ते जिता ।
न च ते उत्थितु नैव कायु [10]त्रसितो नो वा गिरा व्याहृता
त्वां वन्दामहि सर्वलोकमहितं सर्वार्थसिद्धं मुनिम् ॥ २१ ॥

मारा कोटिसहस्रनेक[11]नयुता गङ्गाणुभिः संमिता[12]
ते तुभ्यं न समर्थ बोधिसुवटा संचालितुं कम्पितुम् ।
यज्ञा कोटिसहस्रनेक[11]नयुता गङ्गा यथा वालिका
यष्टा बोधि[13]वटासितेन भवता तेनाद्य विभ्राजसे ॥ २२ ॥ R 463

भार्या चेष्टतमा सुताश्च दयिता दास्यश्च दासास्तथा
उद्याना नगराणि राष्ट्रनिगमा राज्यानि सान्तःपुराः ।
हस्ता पादशिरोत्तमाङ्गमपि वा चक्षूंषि जिह्वा तथा L 361
त्यक्ता ते वरबोधिचर्य चरता तेनाद्य विभ्राजसे ॥ २३ ॥

---

१ R जगदर्थ for जगार्थ°. २ R द्वयमतिमोचक for °मतिविमो°. ३ R °तपसङ्गत for °तपस उद्गत. ४ R °सत्यदेशक for °दर्शक. ५ R तथ for तव. ६ R °देवपुत्रा for °पुत्रप्रमुखा. ७ R भवाति° for तवाति°. ८ R यथा सा for यत्सा. ९ R °क्षणेन for °क्षणे ते. १० R भ्रमितो; त्रमितो for त्रसितो. ११ R om. °नेक°. १२ R संस्थिता: for संमिताः. १३ R बोधिव्रताश्रितेन for °वटासितेन.

उक्तं यद्वचनं त्वया सुबहुशो बुद्धो भविष्याम्यहं
तारिष्ये बहुसत्त्वकोटिनयुता दुःखार्णवेनोद्यता ।
ध्यानाधीन्द्रियबुद्धिभिः क्वचितः सद्धर्मनावा स्वयं
सा चैषा प्रतिपूर्ण तुभ्य प्रणिधिस्तारिष्यसे प्राणिनः ॥ २४ ॥
यत्पुण्यं च स्तवित्व वादिवृषभं लोकस्य चक्षुर्ददं
सर्वे भूत्व उदग्रहृष्टमनसः प्रार्थेम सर्वज्ञताम् ।
R 464 समुदानीत्व वराग्रबोधिमतुलां बुद्धैः सुसंवर्णितां
एवं तद्विनिहत्य मारपरिषां[1] बुद्धेम सर्वज्ञताम् ॥ २५ ॥

एवं खलु भिक्षवो मारपुत्रास्तथागतमभिष्टुत्यैकान्ते तस्थुः प्राञ्जलयस्तथागतं नमस्यन्तः ॥

अथ खलु परनिर्मितवशवर्ती देवपुत्रोऽनेकैर्देवपुत्रशतसहस्रैः परिवृतः पुरस्कृतो जाम्बूनदसुवर्णवर्णैः पद्मैस्तथागतमभ्यवकीर्य संमुखमाभिर्गाथाभिरभ्यस्तावीत् —

अपिडित अलुडित अवितथवचना
अपगततमरज अमृतगतिगता ।
अरहसि दिवि भुवि श्रियेंक्रियमतुला[2]
अतिद्युतिस्मृतिमति प्रणिपति[3] शिरसा ॥ २६ ॥
रतिकर[4] रणजह रजमलमथना
रमयसि सुरनर सुविशदवचनैः ।
L 362 विकसित सुविपुल वरतनु किरणैः
सुरनरपतिरिव जयसि जगदिदम् ॥ २७ ॥
R 465 परगणिप्रमथन परचरि[5]कुशला
प्रियु भव नरमरु परमति धुनता ।
परचरि विभजसि सुनिपुणमतिमान्
पथि इह विचरतु दशबलगमने ॥ २८ ॥
त्यजि पृथु भवग्रहि वितथदुख महा
विनयसि सुरनर यथमति विनये ।
विचरसि चतुदिश शशिरिव गगने
चक्षु भव परायण इह भुवि त्रिभवे ॥ २९ ॥
प्रियु भव नरमरु न च खलि विषये
रमयसि शुभरति कामरतिविरतो ।

---

१ R °पर्षदं for °परिषां. २ R श्रियह्रिय° for श्रियक्रिय°. ३ R प्रणयति for प्रणिपति.
४ R रतिकरणजहं for रतिकर रणजह. ५ R वरचरि° for पर°.

दिनदर्शी परिषदि न ति समु त्रिभवे
नाथु गति परायणु त्वमिह हि जगतः ॥ ३० ॥

एवं खलु भिक्षवो वशवर्तिदेवप्रमुखाः परिनिर्मितवशवर्तिनो देवपुत्रास्तथागतमभिष्टुत्यै- R 466
कान्ते तस्थुः प्राञ्जलयस्तथागतं नमस्यन्तः ॥

अथ खलु सुनिर्मितो देवपुत्रो देवसंघपरिवृतः पुरस्कृतो नानारत्नपट्टदामैस्तथागतमभिछाद्य संमुखमाभिर्गाथाभिरभ्यस्तावीत् –

धर्मालोक भवान् समुद्गत त्रिविधमलैनुच्छिदो[1]
मोहाद्दृष्टिअविद्यघातको ह्रिरिशिरिभरितः ।
मिथ्यामार्गरतामिमां प्रजाममृते थर्पयितो[2] L 363
उत्पन्नो इह लोकि चेतियो दिवि भुवि महितः ॥ ३१ ॥

त्वं वैद्यो कुशलचिकित्सको ह्यमृतसुखददो
दृष्टिक्लेशमविद्यसंचयं पुरिममनुशयम्[3] ।
सर्वव्याध्यपनेसि देहिनां पुरिमजिनपथे
तस्माद्वैद्यतमोऽसि नायका विचरसि धरणीम् ॥ ३२ ॥

चन्द्रासूर्यप्रभाश्च ज्योतिषा मणि तथ ज्वलना
शक्रब्रह्मप्रभा न भासते पुरतु शिरिघने ।
प्रज्ञालोककरा प्रभंकरा प्रभसिरिभरिता R 467
प्रत्यक्षास्तव ज्ञाति अद्भुते प्रणिपति शिरसा ॥ ३३ ॥

सत्यासत्यकथी विनायका सुमधुरवचना
दान्ता शान्तमना जितेन्द्रिय प्रशमितमनसा[4] ।
शास्ता शासनियां प्रशाससे नरमरुपरिषां
वन्दे शाक्यमुनिं नरर्षभं सुरनरमहितम् ॥ ३४ ॥

ज्ञानिं ज्ञानकथाग्रधारका ज्ञपयसि त्रिभवे
त्रैविद्यत्रिविमोक्षदेशका[5] त्रिमलमलनुदा ।
भव्याभव्य मुने प्रजानसे यथमति विनये
वन्दे त्वां त्रिसहस्त्रि अद्भुतं दिवि भुवि महितम् ॥ ३५ ॥

एवं खलु भिक्षवः सुनिर्मितो देवपुत्रः सपरिवारस्तथागतमभिष्टुत्यैकान्तेऽस्थात् प्राञ्जलीकृतस्तथागतं नमस्कुर्वन् ॥

---

१ R °मलमुच्छेदो for °मलनुच्छिदो. २ R थपयित्वा for थपयितो. ३ R रिपुमनुशयम् for °पुरिममनु°. ४ R प्रणमित° for प्रशमित°. ५ R विमोक्ष° for त्रिविमोक्ष°.

L 364 अथ खलु संतुषितो देवपुत्रः सार्धं तुषितकायिकैर्देवैर्येन तथागतस्तेनोपसंक्रामत्। उपसंक्रम्य
R 468 महता दिव्यवस्त्रजालेन बोधिमण्डनिषण्णं तथागतमभिसंछाद्य संमुखमाभिर्गाथाभिरभ्यस्तौषीत्—

तुषितालयि यद्वसितस्त्वं
तत्र ति[१] देशितु धर्म उदारो।
न च छिद्यति सा अनुशास्ति
अद्यपि धर्मचरी सुरपुत्रा ॥ ३६ ॥

न च दर्शन तृप्ति लभामो
धर्म शृणोतु न विन्दति तृप्तिम्।
गुणसागर लोकप्रदीपा
वन्दिम ते शिरसा मनसा च ॥ ३७ ॥

तुषितालय यच्चलितस्त्वं[२]
शोषित अक्षण सर्वि तदा[३] ते।
यद बोधिवटे उपविष्टः
सर्वजगस्य किलेश प्रशान्ताः ॥ ३८ ॥

यस्य कृतेन च बोधि उदारा
एष ति प्राप्ति जिनित्वन मारम्।
त्वाँ[४] प्रणिधी तपसा परिपूर्णा
क्षिप्र प्रवर्तय चक्रमुदारम् ॥ ३९ ॥

बहु दिक्षिषु[५] प्राणिसहस्रा
धर्मरता श्रुणियामथ धर्मम्।
क्षिप्र प्रवर्तय चक्रमुदारं
R 469 मोचय प्राणिसहस्र भवेषु[६] ॥ ४० ॥

एवं खलु भिक्षवः संतुषितो देवपुत्रः सपरिवारस्तथागतमभिष्टुत्यैकान्तेऽस्थात् प्राञ्जलीकृतस्तथागतं नमस्यमानः ॥

अथ खलु सुयामदेवपुत्रप्रमुखाः सुयामा[७] देवा येन तथागतस्तेनोपसंक्रामत्। उपसंक्रम्य नानापुष्पधूपगन्धमाल्यविलेपनैर्बोधिमण्डनिषण्णं तथागतं संपूज्य संमुखमाभिः सारूप्याभिर्गाथाभिस्तुष्टुवुः—

सदृशोऽस्ति न ते कुतोन्तरे[८]
शील समाधि तथैव प्रज्ञया।
अधिमुक्तिविमुक्तिकोविदा
शिरसा वन्दिम ते तथागतम् ॥ ४१ ॥

---

१ R निर्देशितु for ति देशितु. २ R यद्वसितः for यच्चलितः. ३ R सदा for तदा. ४ R om. त्वा. ५ R दिक्षु for दिक्षिषु. ६ R भवेयुः for भवेषु. ७ R यामा for सुयामा. ८ R कुरूत्तरे for कुतोन्तरे.

दृष्टो[1] स वियूह शोभना
बोधिमण्डस्मि मरुभि या कृता ।
न तमर्हति अन्य कश्चना
यथ त्वं देवमनुष्यपूजितः ॥ ४२ ॥
न मुधाय भवान् समुद्गतो R 470
यस्य अर्थे बहु चीर्ण दुष्करा ।
विजितो हि शठः ससैन्यकः L 365
प्राप्ता बोधि अनुत्तरा त्वया ॥ ४३ ॥
आलोक कृतो दशादिशे
प्रज्ञादीपेन[2] त्रिलोक ज्वालितः ।
तिमिरं[3] अपनायिष्यसे
दार्स्यसि[4] चक्षुरनुत्तरं जगे ॥ ४४ ॥
बहुकल्प[5] स्तुवन्ति[6] भाषतो
रोमरूपस्य[7] न चान्तु अस्ति ते ।
गुणसागर लोकविश्रुता
शिरसा वन्दिम ते तथागतम् ॥ ४५ ॥

एवं खलु ते सुयामदेवपुत्रप्रमुखा देवास्तथागतमभिष्टुत्यैकान्ते तस्थुः प्राञ्जलस्तथागतं नमस्यन्तः ॥

अथ खलु शक्रो देवानामिन्द्रः सार्धं त्रायत्रिंशकायिकैर्देवैर्नानापुष्पधूपदीपगन्ध[8]माल्यविलेपनचूर्णचीवरछत्रध्वजपताका[9]व्यूहैस्तथागतं संपूज्य आभिर्गाथाभिरभ्यस्तावीत् – R 471

अस्खलिता अनवद्या सदा सुस्थिता मेरुकल्पा मुने
दशदिशि सुविघुष्ट ज्ञानप्रभा पुण्यतेजान्विता ।
बुद्धशतसहस्र संपूजितां पूर्वि[10] तुभ्यं मुने
तस्य विशेषु येन बोधिद्रुमे मारसेना जिता ॥ ४६ ॥
शीलश्रुतसमाधिप्रज्ञाकरा ज्ञानकेतुध्वजा
जरमरणनिघाति वैद्योत्तमा लोकचक्षुर्ददा ।
त्रिमलखिलप्रहीण शान्तेन्द्रिया शान्तचित्ता मुने
शरणु तवमुपेम शाक्यर्षभा धर्मराजा जगे ॥ ४७ ॥
बोधिचरी अनन्ततुल्या अभूद्वीर्यस्थामोद्गता
प्रज्ञाबल उपाय मैत्राबलं ब्राह्मपुण्यं बलम् ।

१ R दृष्टासनविष्ट पूज्य for दृष्टा स वियूह. २ R प्रज्ञाप्रदीपेन for प्रज्ञादीपेन. ३ R तिमिरिंमप° for तिमिरं अप°. ४ R दास्य for दास्यसि. ५ R कल्पकोटि for बहुकल्प. ६ R स्तुति निभाषतो for स्तुवन्ति भाषतो. ७ R रोमकूपस्य for °रूपस्य. ८ R om. °गन्ध°. ९ R om. °पताका°. १० R पूजिता च भुवि for संपूजिता पूर्वि.

एति बलमनन्ततुल्या भवं बोधि संप्रस्थिते
दशबलबलधारी अद्या[1] पुनर्बोधिमण्डे भुतो ॥ ४८ ॥

L 366
R 472
दृष्ट्व चमु अनन्तसत्त्वे सुरा भीतत्रस्ताभवन्
मा[2] खु श्रमणराजु बाधिष्यते बोधिमण्डे स्थित: ।
न च भवतु बभूव तेभ्यो भयं नो च कायेञ्जना
कर[3]हत गुरुभार संकम्पना मारसेना जिता ॥ ४९ ॥

यथ च पुरिमकेभि सिंहासने प्राप्त बोधि वरा
तथ त्वया अनुबुद्ध तुल्या समा अन्यथा त्वं न हि ।
सम[4]मनस समचित्त सर्वज्ञता स्थाम प्राप्तं त्वया
तेन भव स्वयंभु लोकोत्तमो पुण्यक्षेत्रं जगे ॥ ५० ॥

एवं खलु भिक्षव: शक्रो देवानामिन्द्र: सार्धं देवपुत्रैस्त्रायत्रिंशैस्तथागतमभिष्टुत्यैकान्तेऽस्थात् प्राञ्जलीकृतस्तथागतं नमस्कुर्वन् ॥

अथ खलु चत्वारो महाराजान: सार्धं चतुर्महाराजकायिकैर्देवपुत्रैर्येन तथागतस्तेनोपसंक्रामत् । उपसंक्रम्याभिमुक्तकचम्पकसुमनावार्षिकधानुस्कारिमाल्यदामपरिगृहीता अप्सर:शतसहस्रपरिवृता दिव्यसंगीतिसंप्रवादितेन तथागतस्य पूजां कृत्वा आभि: सारूप्याभिर्गाथाभिस्तुष्टुवु: —

R 473
सुमधुरवचना मनोज्ञघोषा
शशि[5] व प्रशान्तिकरा प्रसन्नचित्ता ।
प्रहसितवदना प्रभूतजिह्वा
परमसुप्रीतिकरा मुने नमस्ते ॥ ५१ ॥

रुतरवित य अस्ति सर्वलोके
सुमधुर प्रेमणिया नरा[6]मरूणाम् ।
भवंत[7] स्वरु प्रमुक्त मञ्जुघोषो
अभिभवते रुत सर्वि भाषमाणां ॥ ५२ ॥

रागु समयि दोषमोहक्लेशा
प्रीति जनेति अमानुषां विशुद्धाम् ।
अकलुषहृदया निशाम्य धर्मं
आर्य विमुक्ति लभन्ति ते हि सर्वे ॥ ५३ ॥

न च भव अति[8]मन्यसे अविद्वां
न च पुन विद्वमदेन जातु मत्त: ।

---

१ R om: अद्या. २ R मा खलु श्रमणुराचार्यो भविष्यते for मा खु श्रमणराजु बाधिष्यते. ३ R करहुत for °हत. ४ R समनस for सममनस. ५ R शशि इव for शशि व. ६ R सुरमरूणाम् for नरा°. ७ R भगवत स्वरूपमुक्त for भवंत स्वरु प्रमुक्त. ८ R अभिमन्यसे for अति°.

उन्नतु न च नैव चोनतस्त्वं L 367
गिरिरिव सुस्थितु सागरस्य मध्ये ॥ ५४ ॥ R 474
लाभ इह सुलब्ध मानुषाणां
यत्र हि तादृशु जातु सत्त्व लोके ।
श्रीरिव पदुमो[1] धनस्य दात्री
तथ तव[2] दास्यति धर्मु सर्वलोके ॥ ५५ ॥

एवं खलु चतुर्महाराजप्रमुखा महाराजकायिका देवा बोधिमण्डनिषण्णं तथागतमभिष्टुत्यैकान्ते तस्थुः प्राञ्जलयस्तथागतं नमस्यन्तः ॥

अथ खल्वन्तरिक्षा देवास्तथागतस्यान्तिकमुपसंक्रम्याभिसंबोधेः पूजाकर्मणे सर्वमन्तरीक्षं रत्नजालेन किङ्किणीजालेन रत्नछत्रै रत्नपताकाभी रत्नपट्टदामै रत्नावतंसकैर्विविधमुक्ताहारपुष्पदामार्धकायिकदेवतापरिगृहीतैरर्धचन्द्रकैश्च समलंकृत्य तथागताय निर्यातयन्ति स्म । निर्यात्य च संमुखमाभिर्गाथाभिरभ्यस्ताविषुः —

अस्माकु वासं गगने ध्रुवं मुने
पश्याम सत्त्वा[3] चरिया यथा जगे ।
भवतश्चरिं प्रेक्षिये[4] शुद्धसत्त्व R 475
स्खलितं न पश्याम तवैकचित्ते ॥ ५६ ॥
ये आगता पूजन बोधिसत्त्वा
गगनं स्फुटं तैर्नरनायकेभिः ।
हानिर्विमानान न चाभवन्त
तथा हि ते वै गगनात्मभावाः ॥ ५७ ॥
ये अन्तरीक्षातु प्रवर्षि पुष्पां
स्याच्चूडबन्धा हि महासहस्रा ।
ते तुभ्य काये पतिता अशेषा
नद्यो यथा सागरि संप्रविष्टाः ॥ ५८ ॥
पश्याम छत्राण्यवतंसका च
मालागुणां चम्पकपुष्पदामां ।
हारांश्च चन्द्रांश्च तथार्धचन्द्रां
क्षिपन्ति देवा न च संस्करोति ॥ ५९ ॥ R 476
वालस्य नाभूदवकाशमस्मिन्
देवैः स्फुटं सर्वत अन्तरीक्षम् ।
कुर्वन्ति पूजां द्विपदोत्तमस्य
न च ते मदो जायति विस्मयो वा ॥ ६० ॥

---

१ R परम for पदुमो. २ R भव. ३ R सर्वा for सत्त्वा. ४ R प्रेक्षिम for प्रेक्षिय.

L 368 एवं[1] खल्वन्तरीक्षदेवा बोधिमण्डे निषण्णं तथागतमभिष्टुत्यैकान्तेऽवतस्थिवन्तः प्राञ्जलयस्तथागतं नमस्यन्तः[2] ॥

अथ खलु भौमा देवास्तथागतस्य पूजाकर्मणे सर्वावन्तं धरणीतलं सुशोधितोपलिप्तं गन्धोदकपरिषिक्तं पुष्पावकीर्णं च कृत्वा नानादूष्य[3]वितानविततं च तथागताय निर्यातयन्ति स्म । आभिर्गाथाभिरभितुष्टुवुः —

वज्रमिव अभेद्या संस्थिता त्रिःसहस्रा
वज्रमयपदेनायं स्थितो[4] बोधिमण्डे ।
इह मम त्वचमांसं शुष्यतामस्थिमज्जा
न च अहु अस्पृशित्वा बोधि उत्थेष्य अस्मात् ॥ ६१ ॥

सविभव नरसिंहा सर्वियं त्रिःसहस्रा[5]
न करिषु अधिस्थानं स्याद्विदीर्णशेषा ।
तादृश महवेगा आगता बोधिसत्त्वा
R 477 येष क्रमतलेभिः कम्पिता क्षेत्रकोट्यः ॥ ६२ ॥

लाभ इह सुलब्धा भूमिदेवैरुदारा
यत्र परमसत्त्वश्चंक्रमी मेदिनीये ।
यत्र कु[6] रजु लोके सर्व ओभासितास्ते
चेतिभु त्रिसहस्रः किं पुनस्तुभ्य कायः ॥ ६३ ॥

हेस्तिं[7] शतसहस्रं यावतश्चाप[8]स्कन्धो
धरणितलु जगस्या यावतश्चोपजीव्यः ।
सर्व वयु धरेमो मेदिनी त्रिःसहस्रां
सर्व तव ददामो भुङ्क्ष्विमां त्वं यथेष्टम् ॥ ६४ ॥

L 369 यत्र भव स्थिहेद्वा चंक्रमेद्वा शयेद्वा
येऽपि सुगतपुत्राः श्रावका गौतमस्य ।
धर्मकथ कथेन्ती येऽपि वा तां शृणोन्ति
सर्वकुशलमूलं बोधिये नामयामः ॥ ६५ ॥

R 478 एवं खलु भौमा देवा बोधिमण्डनिषण्णं तथागतमभिष्टुत्यैकान्ते तस्थुः प्राञ्जलयस्तथागतं नमस्यन्तः ॥

॥ इति श्रीललितविस्तरे संस्तवपरिवर्तो नाम त्रयोविंशतितमोऽध्यायः ॥

---

१ After एवं, R reads भिक्षवो. २ R नमस्कुर्वन्ति स्म for नमस्यन्तः. ३ R नानापुष्प° for नानादूष्य°. ४ R वज्रमयेनावस्थितो for वज्रमयपदेनायं स्थितो. ५ R सर्वि भवनसंघाः for सर्वियं त्रिःसहस्रा. ६ R भू for कु. ७ R हस्ति for हेस्तिं. ८ R चास्य स्कन्धो for चाप°.

## त्रपुषभल्लिकपरिवर्तश्चतुर्विंशः ।

इति हि भिक्षवोऽभिसंबुद्धस्तथागतो देवैरभिष्टूयमानः पर्यङ्कमभिन्दन्[1]ननिमिषनयनो द्रुमराजं प्रेक्षते स्म । ध्यानप्रीत्याहारः सुखप्रतिसंवेदी सप्तरात्रं बोधिवृक्षमूलेऽभिनामयति स्म ॥

अथ सप्ताहेऽतिक्रान्ते कामावचरा देवपुत्रा दशगन्धोदककुम्भसहस्राणि परिगृह्य येन तथागतस्तेनोपसंक्रामन्ति स्म । रूपावचरा अपि देवपुत्रा दशगन्धोदककुम्भसहस्राणि परिगृह्य येन तथागस्तेनोपसंक्रामन्ति स्म । उपसंक्रम्य बोधिवृक्षं तथागतं च गन्धोदकेन[2] स्नापयन्ति स्म । गणनासमतिक्रान्ताश्च देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगास्तेन तथागतकायपतितेन गन्धोदकेन स्वकस्वकान् कायानुपलिम्पन्ति स्म । अनुत्तरायां च सम्यक्संबोधौ चित्तान्युत्पादयामासुः । स्वभवने प्रविष्टा अपि च ते देवपुत्रादयोऽविरहिता अभूवंस्तेन गन्धोदकगन्धेन[3], न चास्मै गन्धाय स्पृहामुत्पादयामासुः । तेनैव च प्रीतिप्रामोद्येन तथागतगौरवमनसिकारनिर्जातेनावैवर्तिका अभूवन्ननुत्तरायाः सम्यक्संबोधेः ॥ L 370 R 479

अथ खलु भिक्षवः समन्तकुसुमो नाम देवपुत्रस्तस्यामेव पर्षदि संनिपतितोऽभूत् । स तथागतस्य चरणयोर्निपत्य प्राञ्जलिस्तथागतमेतदवोचत् — को नामायं भगवन् समाधिर्येन समाधिना समन्वागतस्तथागतः सप्तरात्रं विहरत्यभिन्नपर्यङ्कः ? एवमुक्तो भिक्षवस्तथागतस्तं देवपुत्रमेतदवोचत् — प्रीत्याहारव्यूहो नाम देवपुत्र अयं समाधिर्येन समाधिना समन्वागतस्तथागतः सप्तरात्रं व्याहार्षीदभिन्नपर्यङ्कः ॥

अथ खलु भिक्षवः समन्तकुसुमो देवपुत्रस्तथागतं गाथाभिरभ्यस्तावीत् —

रथचरणनिचितचरणा दशशतअरजलज[4]कमलदलतेजा ।
सुरमुकुटघृष्टचरणा वन्दे चरणौ शिरिघनस्य ॥ १ ॥

अभिवन्द्य सुगतचरणौ प्रमुदितचित्तस्तदा[5] स सुरपुत्रः ।
इदमवचि विमतिहरणं प्रशान्तकरणं नरमरूणाम् ॥ २ ॥

शाक्यकुलनन्दिजनना अन्तकरा[6] रागदोषमोहानाम् ।
प्रम्लान[7]अन्तकरणा विनेहि काङ्क्षां नरमरूणाम् ॥ ३ ॥

किं कारणं दशबला बुद्ध्वा सर्वज्ञतामपरिमाणाम् । R 480
सप्ताहं महिमण्डे जिना न भिन्दन्ति पर्यङ्कम् ॥ ४ ॥

किं तु खलु पश्यमानः सप्ताहं अनिमिषेण नरसिंहा ।
प्रेक्षसि विशुद्धचक्षो विकसितशतपत्रतुल्याक्षः ॥ ५ ॥

---

१ R अभिनन्दन् for अभिन्दन्. २ R गन्धोदकैः for °दकेन. ३ R गन्धोदकेन for °दकगन्धेन. ४ R °अरजा° for °अरजलज°. ५ R om. तदा. ६ R अन्तक for अन्तकरा. ७ R अम्लान° for प्रम्लान°.

किं तु भवतेष प्रणिधी उताहु सर्वेष वादिसिंहानाम् ।
येन द्रुमराजमूले पर्यङ्क न भिन्दि सप्ताहम् ॥ ६ ॥
L 371 साधु समशुद्धदन्ता सुगन्धगन्धामुखं दशबलस्य ।
प्रवद वचनं अवितथं कुरुष्व प्रीतिं नरमरूणाम् ॥ ७ ॥
तमुवाच चन्द्रवदनः शृणुष्व मे भाषतो अमरपुत्र ।
अस्य प्रश्नस्याहं किंचिन्मात्रं प्रवक्ष्यामि ॥ ८ ॥
राजा यद्वद्यस्मिन्नभिषिक्तो भवति ज्ञातिसंघेन ।
सप्ताहु तं प्रदेशं न जहाति हि धर्मता राज्ञाम् ॥ ९ ॥
एवमेव दशबला अपि अभिषिक्ता भोन्ति[1] यद प्रणिधिपूर्णाः ।
सप्ताहु धरणिमण्डे जिना न भिन्दन्ति पर्यङ्कम् ॥ १० ॥
शूरो यथारिसंघां निरीक्षते निर्जितां निरवशेषां ।
बुद्धा पि बोधिमण्डे क्लेशां निर्हतां[2] निरीक्षन्ते ॥ ११ ॥
R 481 इह ते कामक्रोधा मोहप्रभावा जगत्परिनिकाशाः ।
साहोढा[3] इव चौरा विनाशिता ये निरवशेषाः ॥ १२ ॥
इह मे हतान विविधा मानविधामन्युना पुरनिकेताः[4] ।
सर्वाश्रवा[5] प्रहीना ज्ञानं चाग्रं समोत्पन्नम् ॥ १३ ॥
इह सा अकार्यकर्त्री भवतृष्णा चारिणी तथाविद्या ।
सानुशयमूलजाता पटुना[6] ज्ञानाग्निना दग्धा ॥ १४ ॥
इह सा अहं ममेति च कलिपाशु[7] दुरानुगाढलितमूला ।
नीवरणकठिनग्रन्थि छिन्ना मे ज्ञानशस्त्रेण ॥ १५ ॥
इह ते चिरं समायत[8] उल्लापनका विनाशपर्यन्ताः ।
स्कन्धाः सोपादाना ज्ञानेन मया परिज्ञाताः ॥ १६ ॥
इह ते द्वयसंमोहा मिथ्याग्राहा महानरकनिष्ठाः ।
मय उद्धृता अशेषा भूयश्च न जातु ज्ञास्यन्ते ॥ १७ ॥
L 372 इह नीवरणवनारी[9] दग्धा मे कुशलमूलतेजेन ।
चतुरश्च विपर्यासा निर्दग्धं[10] मया निरवशेषाः ॥ १८ ॥
इह सा वितर्कमाला संज्ञासूत्रेषु[11] ग्रन्थिता निपथी[12] ॥
विनिवर्तिता अशेषा बोध्यङ्गविचित्रमालाभिः ॥ १९ ॥

---

१ R भान्ति for भोन्ति. २ R निहता for निर्हतां. ३ R साह्वता for साहोढा. ४ R पुनर्निकेता for पुरनि°. ५ R सर्वाश्रवाप्रहीणा for सर्वाश्रवा प्रहीना. ६ R महा° for पटुना. ७ R कालिपाश° for कलिपाशु. ८ R ममायत for समा°. ९ R °वनादी for °वनारी. १० R विदग्ध for निर्दग्ध. ११ R सूत्रे सुगुम्फिता for संज्ञासूत्रेषु ग्रन्थिता. १२ R उत्पत्ती for निपथी.

दुर्गानि पञ्चषष्टि मोहानी त्रिंशतिं च[1] मलिनानि ।
चत्वारिंशदघानि छिन्ना मेऽस्मिं धरणिमण्डे ॥ २० ॥ R 482
षोडश असंवृतानि अष्टादश धातवश्च महिमण्डे ।
कृच्छ्राणि पञ्चविंशति छिन्नानि मयेहसंस्थेन ॥ २१ ॥
विंशति रजस्तराणि अष्टाविंशति जगस्य वित्रासाः ।
इह मे समतिक्रान्ता वीर्यबलपराक्रमं करित्वा ॥ २२ ॥
तथ बुद्धनर्दितानी पञ्चशतास्मिं मया समनुबुद्धा ।
परिपूर्णशतसहस्रं धर्मान मया समनुबुद्धम् ॥ २३ ॥
इह मेऽनुशय अशेषा अष्टानवतिः समूलपर्यन्ताः ।
पर्युत्थानकिसलया निर्दग्धा ज्ञानतेजेन ॥ २४ ॥
काङ्क्षा विमतिसमुदया दृष्टीजडजन्तिता अशुभमूला ।
तृष्णानदी त्रिवेगा[2] प्रशोषिता ज्ञानसूर्येण ॥ २५ ॥
कुहनलपनप्रहाणं मायामात्सर्यदोषईर्ष्याद्यम् ।
इह ते क्लेशारण्यं छिन्नं विनयाग्निना दग्धम् ॥ २६ ॥ R 483
इह ते विवादमूला आकर्षणदुर्गतीषु विषमासु ।
आर्यापवादवचना ज्ञानवरविरेचनैर्वान्ता ॥ २७ ॥
इह रुदितक्रन्दितानां शोचितपरिदेवितान पर्यन्तम् ।
प्राप्तं मया ह्यशेषं ज्ञानगुणसमाधिमागम्य ॥ २८ ॥
ओघा[3] अयोगग्रन्थाः शोकाः शल्या मदप्रमादाश्च[4] । L 373
विजिता मयेह सर्वे सत्यनयसमाधिमागम्य ॥ २९ ॥
इह मय किलेशगहना संकल्पविरूढ[5]मूल भववृक्षाः ।
स्मृतिपरशुना अशेषा छिन्ना ज्ञानाग्निना दग्धा ॥ ३० ॥
इह सो मया ह्यतिबलो अस्मिं मारस्त्रिलोकवशवर्ती ।
ज्ञानासिना शठात्मा हतो यथेन्द्रेण दैत्येन्द्रः ॥ ३१ ॥
इह जालिनी[6] अशेषा षड्विंशतिचारिणी धरणिमण्डे ।
प्रज्ञासिना बलवता छित्त्वा ज्ञानाग्निना दग्धा ॥ ३२ ॥
इह ते मूलक्लेशाः सानुशया दुःखशोकसंभूताः ।
मय उद्धृता अशेषा प्रज्ञा[7]बललाङ्गलमुखेन ॥ ३३ ॥ R 484
इह मे प्रज्ञाचक्षुर्विशोधितं प्रकृतिशुद्धसत्त्वानाम् ।
ज्ञानाञ्जनेन महता मोहपटलविस्तरं भिन्नम् ॥ ३४ ॥

---

१ R पञ्च for च. २ R अतिवेगा for त्रिवेगा. ३ R ओघो योग° for ओघा अयोग°. ४ R °प्रमदाश्च for प्रमादाश्च. ५ R °विमूढ° for विरूढ°. ६ R इन्द्रजालिनी for इह जालिनी. ७ R प्रज्ञावर° for °बल°.

इह धातुभूत चतुरो मदमकरविलोडिता विपुलतृष्णाः ।
स्मृतिशमथ[1]भास्करांशौ विशोषिता मे भवसमुद्राः ॥ ३५ ॥
इह विषयकाष्ठनिचयो वितर्क[2]सामो महामदनवह्निः ।
निर्वापितोऽतिदीप्तो विमोक्षरसशीततोयेन ॥ ३६ ॥
इह मे अनुशयपटला आस्वादतडिद्वितर्कनिर्घोषाः ।
वीर्यबलपवनवेगैर्विधूय विलयं समुपनीता ॥ ३७ ॥
इह मे हतो ह्यशेषश्चित्तचरिरिपुर्भवानुगतवैरी ।
प्रज्ञासिना बलवता स्मृतिविमलसमाधिमागम्य ॥ ३८ ॥
इह सा ध्वजाग्रधारी हस्त्यश्वरथोच्छ्रिता विकृतरूपा ।
नमुचिबलवीर्यसेना मैत्रीमागम्य विध्वस्ता ॥ ३९ ॥
L 374 इह पञ्चगुणसमृद्धाः षडिन्द्रियहया सदा[3] मदोन्मत्ताः ।
बद्धा मया ह्यशेषाः समाधिसशुभं समागम्य ॥ ४० ॥
इह अनुनयप्रतिघानां कलहविवादप्रहाणपर्यन्तः ।
प्राप्तो मया ह्यशेषो [4]अप्रतिहतसमाधिमागम्य ॥ ४१ ॥
इह ममियिता[5] च सर्वे आध्यात्मिकबाहिरा परिक्षीणा ।
R 485 कल्पितविकल्पितानि च शून्यमिति समाधिमागम्य ॥ ४२ ॥
इह लालयिता सर्वे[6] मर्त्या दिव्या भवाग्रपर्यन्ताः ।
त्यक्ता मया ह्यशेषा आगम्य समाधिमनिवर्तम् ॥ ४३ ॥
सर्वभवबन्धनानि च मुक्तानि मयेह तानि सर्वाणि ।
प्रज्ञाबलेन निखिला त्रिविधमिह विमोक्षमागम्य ॥ ४४ ॥
इह हेतुदर्शनाद्वै जिता मया हेतुकास्त्रयः ।
संज्ञा नित्यानित्ये संज्ञा सुखदुःख चात्मनि च ॥ ४५ ॥
इह मे कर्मविधाना समुदयमुदिता षडायतनमूला ।
छिन्ना द्रुमेन्द्रमूले सर्वानित्यप्रहारेण ॥ ४६ ॥
इह मोहतमः कलुषं[7] दुष्टीकृत दर्परोष[8]संकीर्णम् ।
भित्त्वा क्षत्रे सुचिरान्धकारं प्रभासितं ज्ञानसूर्येण ॥ ४७ ॥
इह रागमदनमकरं तृष्णोर्मिजलं कुदृष्टिसंग्राहम् ।
संसारसागरमहं संतीर्णो वीर्यबलनावा ॥ ४८ ॥
इह तन्मयानुबुद्धं यद्बुद्धो[9] रागद्वेषमोहांश्च ।
प्रदहति चित्तवितर्को दवाग्निपतितानिव पतङ्गां ॥ ४९ ॥

---

१ R °समर्थ भास्करकराग्रैः for °शमथभास्करांशौ. २ R वितर्कसंमो for °सामो. ३ R om. सदा. ४ R अप्रणिहित° for अप्रतिहत°. ५ R मथिताश्च for ममियिता च. ६ R भवे for सर्वे. ७ R कलुषैः for कलुषं. ८ R दर्पदोषै for °रोषै. ९ R यद् बुद्धा for यद् बुद्धो.

इह अहु चिरप्रयातो ह्यपरिमित कल्पकोटिनियुतानि ।
संसारपथा क्लिष्टो विश्रांतो नष्टसंतापः ॥ ५० ॥ R 486
इह तन्मयानुबुद्धं सर्वपरप्रवादिभिर्यदप्राप्तम् । L 375
अमृतं लोकहितार्थं जरामरणशोकदुःखान्तम् ॥ ५१ ॥
यत्र स्कन्धैर्दुःखं आयतनैः तृष्णसंभवं दुःखम् ।
भूयो न चोद्भविष्यति अभयपुरमिहाभ्युपगतोऽस्मि ॥ ५२ ॥
इह ते मयानुबुद्धा रिपवो अध्यात्मिका महाकृत्स्नाः ।
बद्धा च संप्रदग्धाः कृताश्च मे पुन भवनिकेताः ॥ ५३ ॥
इह तन्मयानुबुद्धं यस्यार्थे कल्पकोटिनियुतानि ।
त्यक्ता समांसनयना रत्नानि बहून्यमृतहेतोः ॥ ५४ ॥
इह तन्मयानुबुद्धं यद्बुद्धं प्राक्तनैर्जिनैरपरिमाणैः ।
यस्य मधुराभिरम्यः शब्दो लोकेषु विख्यातः ॥ ५५ ॥
इह तन्मयानुबुद्धं प्रतीत्यसमु[1]दागतं जगच्छून्यम् ।
चित्तेक्षणेऽनुयातं मरीचिगन्धर्वपुरतुल्यम् ॥ ५६ ॥
इह मे तत्खलु शुद्धं वरनयनं येन ( लोक ) धातवः सर्वा ।
पश्यामि पाणिमध्ये न्यस्तानि यथा द्रुमफलानि ॥ ५७ ॥
पूर्वेनिवासस्मरणं तिस्रो विद्या मयेह संप्राप्ताः ।
अपरिमितकल्पनयुता स्मरामि स्वप्नादिव विबुद्धः ॥ ५८ ॥
यैरादीप्त सुरनरा विपरी[2]तविसंज्ञिनो विपर्यस्ताः ।
सोऽपि च तथा अवितथा इह मय पीतो ह्यमृतमण्डः ॥ ५९ ॥ R 487
यस्यार्थाय दशबला मैत्री भावेन्ति सर्वसत्त्वेषु ।
मैत्रीबलेन जित्वा पीतो मेऽस्मिन्नमृतमण्डः ॥ ६० ॥
यस्यार्थाय दशबलाः करुणा भावेन्ति सर्वसत्त्वेषु ।
करुणाबलेन जित्वा पीतो मेऽस्मिन्नमृतमण्डः ॥ ६१ ॥
यस्यार्थाय दशबला मुदिता भावेन्ति सर्वसत्त्वेषु । L 376
मुदिताबलेन जित्वा पीतो मे[3]ऽस्मिन्नमृतमण्डः ॥ ६२ ॥
यस्यार्थाय दशबला उपेक्ष भावेन्ति कल्पनयुतानि ।
तमुपेक्षबलैर्जित्वा पीतो मेऽस्मिन्नमृतमण्डः ॥ ६३ ॥
यत्पीतं च दशबलैर्गङ्गानदीवालिकाबहुतरेभिः ।
प्राग्जिनसिंहैः पूर्वे इह मे पीतो ह्यमृतमण्डः ॥ ६४ ॥

---

१ R समुत्पादा° for °समुदा°. २ R विपरीतसंज्ञिनो for °तविसंज्ञिनो. ३ R इह मे ह्यमृत° for मेऽस्मिन्नमृत°.



ल. ३५

या भाषिता च वाग्मे मारस्येहागतस्य ससैन्यस्य ।
भेत्स्यामि न पर्यङ्कं अप्राप्य जरामरणपारम् ॥ ६५ ॥

भिन्ना मया ह्यविद्या दीप्तेन ज्ञानकठिनवज्रेण ।
प्राप्तं च दशबलत्वं तस्मात्प्र[1]भिनद्मि पर्यङ्कम् ॥ ६६ ॥

R 488 प्राप्तं मयारहत्वं क्षीणा मे आश्रवा निरवशेषाः ।
भग्ना च नमुचिसेना भिनद्मि तस्माद्धि पर्यङ्कम् ॥ ६७ ॥

नीवरणकपो[2]टानि च पञ्च मयेह प्रदारिता सर्वा ।
तृष्णालता विछिन्ना हन्तेह भिनद्मि पर्यङ्कम् ॥ ६८ ॥

अथ सो मनुष्यचन्द्रः सविलम्बितमासनात्समुत्थाय ।
भद्रासने निषीदन्महाभिषेकं प्रतीच्छंश्च ॥ ६९ ॥

रत्नघटसहस्रैरपि नानागन्धोदकैश्च सुरसंघा ।
स्नपयन्ति लोकबन्धुं दशबलगुणपारमिप्राप्तम् ॥ ७० ॥

वादित्रसहस्रैरपि स[3]मन्ततो देवकोटिनयुतानि ।
अतुलां करोन्ति पूजां अप्सरनयुतैः सह समग्राः ॥ ७१ ॥

एवं खलु देव[4]सुताः स[5]हेतुं सप्रत्ययं च सनिदानम् ।
सप्ताहु धरणिमण्डे जिना न भिन्दन्ति पर्यङ्कम् ॥ ७२ ॥

L 377 इति हि भिक्षवोऽभिसंबुद्धबोधिस्तथागतः प्रथमे सप्ताहे तत्रैवासनेऽस्थात्—इह मयानुत्तरा सम्यक्संबोधिरभिसंबुद्धा, इह मयानवराग्रस्य जातिजरामरणदुःखस्यान्तः कृत इति । द्वितीये सप्ताहे तथागतो दीर्घचंक्रमं चंक्रम्यते स्म त्रिसाहस्रमहासाहस्रलोकधातुमुपगृह्य ।
R 489 तृतीये सप्ताहे तथागतोऽनिमिषं बोधिमण्डमीक्षते स्म—इह मया[6]नुत्तरां सम्यक्संबोधिमभिसंबुध्यानवराग्रस्य [7]जातिजरामरणदुःखस्यान्तः कृत इति । चतुर्थे सप्ताहे तथागतो दहरचंक्रमं चंक्रम्यते स्म पूर्वसमुद्रात्पश्चिमसमुद्रमुपगृह्य ॥

अथ खलु मारः पापीयान् येन तथागतस्तेनोपसंक्रामत् । उपसंक्रम्य तथागतमेतदवोचत्—परिनिर्वातु भगवन्, परिनिर्वातु सुगत । समय इदानीं भगवतः परिनिर्वाणाय । एवमुक्ते भिक्षवस्तथागतो मारं पापीयांसमेतदवोचत्—न तावदहं पापीयन् परिनिर्वास्यामि यावन्मे न स्थविरा भिक्षवो भविष्यन्ति दान्ता व्यक्ता विनीता विशारदा बहुश्रुता धर्मानुधर्मप्रतिपन्नाः प्रतिबलाः स्वयमाचार्यकं ज्ञानं परिदीपयितुमु[8]र्त्पन्नोत्पन्नानां च परप्रवादिनां सह धर्मेण निगृह्याभिप्रायं प्रसाद्य सप्रातिहार्यं धर्मं देशयितुम् । न तावदहं पापीयन् परिनिर्वास्यामि यावन्मया बुद्धधर्मसंघवंशो लोकेन प्रतिष्ठापितो भविष्यति । अपरिमिता बोधिसत्त्वा न व्याकृता भविष्यन्ति

१ R प्रभिन्नमिव for प्रभिनद्मि. २ R °कपाटाश्च for °टानि च. ३ R सन्ततो for समन्ततो. ४ R देवपुत्रा for °सुता. ५ R हेतुप्रत्ययं for सहेतुं सप्रत्ययं. ६ R °नुत्तरा सम्यक्संबोधिरनुबुद्धा for °त्तरां... संबुध्य. ७ R om. जाति°. ८ R उत्पन्नानुत्प° for उत्पन्नोत्प°.

अनुत्तरायां सम्यक्संबोधौ । न तावदहं पापीयन् परिनिर्वास्यामि यावन्मे न चतस्रः पर्षदो दान्ता विनीता व्यक्ता विशारदा भविष्यन्ति यावत्सप्रातिहार्यं धर्मं देशयितुमिति ॥

अथ खलु मारः पापीयानिदं वचनं श्रुत्वा एकान्ते प्रक्राम्य स्थितोऽभूत् दुःखी L 378 दुर्मना विप्रतिसारी अधोमुखः काष्ठेन महीं विलिखन् विषयं मेऽतिक्रान्त इति ॥

अथ खलु तास्तिस्रो मारदुहितरो रतिश्चारतिश्च तृष्णा च मारं पापीयांसं गाथयाध्यभाषन्त — R 490

दुर्मनासि कथं तात प्रोच्यतां यद्यसौ नरः ।
रागे[1]पाशेन तं बद्ध्वा कुञ्जरं वा नयामहे ॥ ७३ ॥
आनयित्वा च तं शीघ्रं करिष्याम वशे तव ।
* * * * * * * * ॥ ७४ ॥

मार आह —

अरहन् सुगतो लोके न रागस्य वशं व्रजेत् ।
विषयं मे ह्यतिक्रान्तस्तस्माच्छोचाम्यहं भृशम् ॥ ७५ ॥

ततस्ताः स्त्रीचापल्यादविदितप्रभावा अपि बोधिसत्त्वभूतस्यैव तथागतस्य पितुर्वचनमश्रुत्वैव प्रभूतयौवनमध्ययौवनधारिण्यो भूत्वा विचक्षुःकर्मणे तथागतस्यान्तिकमुपसंक्रान्ताः स्त्री[2]माया अति तत्सर्वमकार्षुः । ताश्च तथागतो न मनसि करोति स्म । भूयश्च ता जराजर्जरा अभ्यतिष्ठन् । ततस्ताः पितुरन्तिके गत्वैवमाहुः —

सत्यं वदसि नस्तात न रागेण स नीयते ।
विषयं मे ह्यतिक्रान्तस्तस्माच्छोचाम्यहं भृशम् ॥ ७६ ॥
वीक्षेत यद्यसौ रूपं यदस्माभिर्विनिर्मितम् ।
गौतमस्य विनाशार्थं ततोऽस्य हृदयं स्फुटेत् ॥ ७७ ॥

तत्साधु नस्तातेदं जराजर्जरशरीरमन्तर्धापय ॥

मार आह — L 379

नाहं पश्यामि तं लोके पुरुषं सचराचरे । R 491
बुद्धस्य यो ह्यधिष्ठानं शक्नुयात्कर्तुमन्यथा ॥ ७८ ॥
शीघ्रं गत्वा निवेदय अत्ययं स्वकृतं मुनेः ।
सर्वं पौरा[3]णकं कायं करिष्यति यथामतम् ॥ ७९ ॥

ततस्ता गत्वा तथागतं क्षमापयन्ति स्म — अत्ययं नो भगवान् प्रतिगृह्णातु । अत्ययं नो सुगतो प्रतिगृह्णातु यथा बालानां यथा मूढानां यथा व्यक्तानामकुशलानामक्षेत्रज्ञानां यां[4] वयं भगवन्तमासादयितव्यं मन्यामहे । ततस्तास्तथागतो गाथयाध्यभाषत —

गिरिं नखैर्विलिखे[5]थ लोहं दन्तैर्विखादथ ।
शिरसा विभित्सै[6]थ गिरिमगाधे गाधमेषत ॥ ८० ॥

---

[1] R नागपाशेन for राग°. [2] R om. स्त्रीमाया अति तत्सर्वमकार्षुः. [3] R पौराणिकं for °णकं. [4] R यावद्वयं for या वयं. [5] R विलिखत for °खेथ. [6] R विभित्सथ.

तस्माद्युष्माकं दारिका अत्ययं प्रतिगृह्णामि । तत्कस्मात् ? वृद्धिरेषा आर्ये धर्मविनये[1] यो[2]ऽत्ययमत्ययतो दृष्ट्वा प्रतिदेशयत्यायत्यां च संवरमापद्यते ॥

पञ्चमे सप्ताहे भिक्षवस्तथागतो मुचिलिन्दनागराजभवने विहरति स्म सप्ताहे महादुर्दिने । अथ खलु मुचिलिन्दनागराजः स्वभवनान्निष्क्रम्य तथागतस्य काये सप्तकृद्भोगेन परिवेष्ट्य फणैश्छादयति स्म – मा भगवतः कायं शीतवाताः प्राक्षुरिति । पूर्वस्या[3] अपि दिशोऽन्ये-
R 492 ऽपि संबहुला नागराजा आगत्य तथागतस्य कायं सप्तकृद्भोगैः परिवेष्ट्य फणैश्छादयन्ति स्म – मा भगवतः कायं शीतवाताः प्राक्षुरिति । यथा पूर्वस्यां दिशि एवं दक्षिणपश्चिमोत्तराभ्यो दिग्भ्यो
L 380 नागराजा आगत्य तथागतस्य कायं सप्तकृत्वो[4] भोगैः परिवेष्ट्य फणैश्छादयन्ति – स्म मा भगवतः कायं शीतवाताः प्राक्षुरिति । स च नागराजभोगराशिर्मेरुपर्वतेन्द्रवदुच्चैस्त्वेन स्थितोऽभूत् । न च तैर्नागराजैस्तादृशं कदाचित्सुखं प्राप्तं पूर्वं यादृशं तेषां तानि सप्तरात्रिंदिवसानि तथागतकायसंनिकर्षादासीत् । ततः सप्ताहस्यात्ययेन ततस्ते नागराजा व्यपगतदुर्दिनं विदित्वा तथागतस्य कायाद्भोगानपनीय तथागतस्य पादौ शिरसा[5]भिवन्द्य त्रिप्रदक्षिणीकृत्य स्वकस्वकानि भवनान्युपजग्मुः । मुचिलिन्दोऽपि नागराजस्तथागतस्य पादौ शिरसाभिवन्द्य त्रिप्रदक्षिणीकृत्य स्वभवनं प्राविक्षत् ॥

षष्ठे सप्ताहे तथागतो मुचिलिन्दभवनादजपालस्य न्यग्रोधमूलं गच्छति स्म । अन्तरे च मुचिलिन्दभवनस्यान्तराच्चाजपालस्य नद्या नैरञ्जनायास्तीरे चरकपरिव्राजकवृद्ध[6]श्रावकगौतमनिर्ग्रन्थाजीविकादयस्तथागतं दृष्ट्वाभिभाषन्ते स्म – अपि भगवता गौतमेनेदं सप्ताहमकालदुर्दिनं सम्यँक्[7]सुखेन व्यतिनामितम् ?

अथ खलु भिक्षवस्तथागतस्तस्यां वेलायामिदमुदानयति स्म –

सुखो विवेकस्तुष्टस्य श्रुतधर्मस्य पश्यतः ।
अव्याबध्यं सुखं लोके प्राणिभूतेषु[8] संयतः ॥ ८१ ॥
R 493 सुखा विरागता लोके पापानां समतिक्रमः ।
अस्मिन् मानुष्यविषये एतद्वै परमं सुखम् ॥ ८२ ॥

पश्यति स्म भिक्षवस्तथागतो लोकमादीप्तं प्रदीप्तं जात्या जरया व्याधिभिर्मरणेन शोकपरिदेवदुःख[9]दौर्मनस्योपायासैः । तत्र तथागत इदमिहोदानमुदानयति स्म –

L 381 अयं लोकः संतापजातः शब्दस्पर्शरसरूपगन्धैः ।
भयं[10]भीतो भयं भूयो मार्गते भवतृष्णया ॥ ८३ ॥

सप्तमे सप्ताहे तथागतो तारायणमूले विहरति स्म । तेन खलु पुनः समयेनोत्तरापथकौ द्वौ भ्रातरौ त्रपुषभल्लिक[11]नामकौ वणिजौ पण्डितौ निपुणौ विविधपण्यं गृहीत्वा महालब्धलाभौ दक्षिणापथादुत्तरापथं गच्छेते स्म महता सार्थेन पञ्चभिर्धुर[12]शतैः सुपरिपूर्णैः । तयोः सुजातः कीर्तिश्च नामाजानेयौ द्वौ बलीवर्दा[13]वास्ताम् । नास्ति तयोर्लग्नभयम् । यत्रान्ये बलीवर्दा न

१ R om. धर्मविनये. २ R ये येऽत्ययम् for योऽत्ययम्. ३ R यथा पूर्वस्यामपि for पूर्वस्या अपि. ४ R सप्तकृत्वोपभोगैः for °कृत्वो भोगैः. ५ R शिरोभिः for शिरसा. ६ R om. °वृद्ध°. ७ R om. सम्यक्. ८ R प्राणिभूतस्य संयमः for प्राणिभूतेषु संयतः. ९ R om. °दुःख°. १० R भवंभूतो for भय°. ११ R °भल्लिकौ नाम for °भल्लिकनामकौ. १२ R रथशतैः for धुरशतैः. १३ L बलीवर्धौ for °वर्दौ.

वहन्ति स्म तत्र तौ युज्येते स्म । यत्र चाग्रतो भयं भवति स्म तत्र, तौ कीलबद्धाविव
तिष्ठेते स्म । न च तौ प्रतोदेन वाह्येते स्म । उत्पलहस्तकेन वा सुमनादामकेन
वा तौ वाह्येते स्म । तेषां तारायणसमीपे क्षीरिकावननिवासिनीदेवताधिष्ठानात्ते शकटाः
सर्वे[1] विष्ठिता न वहन्ति स्म । वस्त्रादीनि च सर्वशकटाङ्गानि च छिद्यन्ते स्म, भिद्यन्ते[2] च ।
शकटाचक्राणि च नाभीपर्यन्तं भूमौ निमग्नानि सर्वप्रयत्नैरपि ते शकटा न वहन्ति
स्म । ते विस्मिता भीताश्चाभूवन् – किं नु खल्वत्र कारणम्, कोऽयं विकारो यदिमे स्थले शकटा R 494
विष्ठिताः ? तैस्तौ सुजातकीर्तिबलीवर्दौ योजितौ । तावपि न वहेते स्म सोत्पलहस्तेन च
सुमनादामकेन च वाह्यमानौ । तेषामेतदभवत् – असंशयं पुरतः किंचिद्भयं येनैतावपि न वहतः ।
तैरश्वदूताः पुरतः प्रेषिताः । अश्वदूताः प्रत्यागताः । प्राहुर्नास्ति किंचिद्भयमिति । तयापि देवतया
स्वरूपं संदर्श्य आश्वासिताः – मा भेतव्यमिति । तावपि बलीवर्दौ येन तथागतस्तेन शकटा L 382
प्रकर्षितौ यावत्ते पश्यन्ति स्म तथागतं वैश्वानरमिव प्रदीप्तं द्वात्रिंशन्महापुरुषलक्षणैः समलंकृत-
मचिरोदितमिव दिनकरं श्रिया दैदीप्यमानम् । दृष्ट्वा च ते विस्मिता बभूवुः – किं नु खल्वयं ब्रह्मा
इहानुप्राप्त उताहो शक्रो देवेन्द्र उताहो वैश्रवण उताहो सूर्यचन्द्रौ वा उताहो किंचिद्गिरिदेवतं
वा नदीदेवतं वा । ततस्तथागतः काषायाणि वस्त्राणि प्रकटायति स्म । ततस्ते आहुः – प्रव्रजितः
खल्वयं काषायसंवृतो नास्माद्भयमस्तीति । ते प्रसादं प्रतिलभ्या अन्योन्यमेवमाहुः – प्रव्रजितः
खल्वयं कालभोजी भविष्यति । अस्ति किंचित् ? आहुः[3] – अस्ति मधुतर्पणं लिखितकाश्चेक्षवः ।
ते मधुतर्पणमिक्षुलिखितकांश्चादाय येन तथागतस्तेनोपसंक्रामन् । उपसंक्रम्य तथागतस्य पादौ
शिरसाभिवन्दित्वा त्रिप्रदक्षिणीकृत्यैकान्ते तस्थुः । एकान्ते स्थितास्ते तथागतमेवमाहुः – R 495
प्रतिगृह्णातु भगवन्निदं पिण्डपात्रमस्माकमनुकम्पामुपादाय ॥

अथ खलु भिक्षवस्तथागतस्यैतदभूत् – असाधु[4] खल्विदं स्याद्यदहं हस्ताभ्यां प्रतिगृह्णी-
याम् । कस्मिन् खलु पूर्वकैस्तथागतैः सम्यक्संबुद्धैः प्रतिगृहीतम् ? पात्रेणेत्यज्ञासीत् ॥

इति हि भिक्षवस्तथागतस्य भोजनकालसमय[5] इति विदित्वा तत्क्षणमेव चतसृभ्यो दिग्भ्य-
श्चत्वारो महाराजा आगत्य चत्वारि सौवर्णानि पात्राण्यादाय तथागतस्योपनामयन्ति स्म – प्रति-
गृह्णातु भगवन्निमानि सौवर्णानि (चत्वारि) पात्राण्यस्माकमनुकम्पामुपादाय । तानि[6] न श्रमणप्रति-
रूपाणि इति कृत्वा तथागतो न प्रतिगृह्णीते स्म । एवं चत्वारि रूप्यमयानि चत्वारि वैडूर्य- L 383
मयानि स्फटिकमयानि मुसाँरगल्वमयानि[7] अश्मगर्भमयानि । ततश्चत्वारि सर्वरत्नमयानि पात्राणि
गृहीत्वा तथागतस्योपनामयन्ति स्म । न श्रमणस्य सारूप्याणि इति कृत्वा तथागतो न
प्रतिगृह्णीते स्म ॥

अथ खलु भिक्षवस्तथागतस्य पुनरेतदभूत् – एवं कतमद्विधैः पात्रैः पूर्वकैस्तथागतै-
रर्हद्भिः सम्यक्संबुद्धैः प्रतिगृहीतम् ? शैलपात्रैरित्यज्ञासीत् । एवं च चित्तमुत्पन्नं तथागतस्य ॥

---

१ R अधिविष्ठिता for सर्वे विष्ठिता. २ R om. भिद्यन्ते च. ३ R आहारोऽस्ति for आहुः अस्ति.
४ R साधु for असाधु. ५ R om. °समय. ६ R तानि च श्रमणाप्रति° for तानि न श्रमणप्रति°.
७ R सुशालगर्भ° for मुसारगल्व°.

अथ खलु वैश्रवणो महाराजस्तदन्यांस्त्रीन् महाराजानामन्त्रयते स्म – इमानि खलु पुन-
R 496 र्मार्षाश्चत्वारि शैलपात्राणि नीलकायिकैर्देवपुत्रैरस्मभ्यं दत्तानि – तत्रास्माकमेतदभूत् — एषु वयं पेरिभोक्ष्याम[1] इति । ततो वैरोचनो नाम नीलकायिको देवपुत्रः सोऽस्मानेवमाह –

मा एषु भोक्ष्यथ भाजनेषु
धारेतिमे[2] चेतियसंमतीते ।
भविता जिनः शाक्यमुनीति नाम्ना
तस्येति पात्राण्युपनामयेथा ॥ ८४ ॥

अयं स कालः समयश्च मार्षा
उपनामितुं शाक्यमुनेर्हि भाजना ।
संगीतितूर्यस्वरनादितेन
दास्याम पात्राणि विधाय पूजाम् ॥ ८५ ॥

स भाजनं[3] धर्ममयं ह्यभेद्यं
इमे च शैलामय भेद्य भाजना ।
प्रतिग्रहीतुं क्षमते न चान्यः
प्रतिग्रहार्थाय व्रजाम हन्त ॥ ८६ ॥

अथ खलु चत्वारो महाराजाः स्वस्वजनपार्षद्याः पुष्पधूपगन्धे[4]माल्यविलेपनतूर्यताडा-
R 497 वचरसंगीतिसंप्रभाणितेन[5] स्वैः स्वैः पाणिभिस्तानि पात्राणि परिगृह्य येन तथागतस्तेनोपसंक्रामन् । उपसंक्रम्य तथागतस्य पूजां कृत्वा तानि पात्राणि दिव्यकुसुमप्रतिपूर्णानि तथागतायोपनामयन्ति स्म ॥

L 384 अथ खलु भिक्षवस्तथागतस्यैतदभवत् – अमी खलु पुनश्चत्वारो महाराजाः श्रद्धाः प्रसन्नाः मम चत्वारि शैलपात्राण्युपनामयन्ति । न च मे चत्वारि शैलपात्राणि कल्पन्ते । अथैकस्य प्रतिगृहीष्यामि, त्रयाणां वैमनस्यं[6] स्यात् । यन्न्वहमिमानि चत्वारि पात्राणि प्रतिगृह्यैकं पात्रमधितिष्ठेयम् । अथ खलु भिक्षवस्तथागतो दक्षिणं पाणिं प्रसार्य वैश्रवणं महाराजं गाथयाध्यभाषत –

उपनामयस्व सुगतस्य भाजनं
त्वं भेष्यसे भाजनमग्रयाने ।
अस्मद्विधेभ्यो हि प्रदाय भाजनं
स्मृतिर्मतिश्चैव न जातु हीयते ॥ ८७ ॥

अथ खलु भिक्षवस्तथागतो वैश्रवणस्य महाराजस्यान्तिकात्तत्पात्रं[7] प्रतिगृह्णीते स्म अनुकम्पामुपादाय । प्रतिगृह्य च धृतराष्ट्रं महाराजं गाथयाध्यभाषत –

१ R परिभोजयाम for °भोक्ष्याम. २ R धारेति मोचेति समतैते for धारेतिमे चेतियसंमतीते. ३ R भोजनं. ४ R °माल्यगन्ध° for °गन्धमाल्य°. ५ R °संप्रभणितेन for संप्रभाणितेन. ६ R वैमनस्याव for वैमनस्यं स्यात्. ७ R om. महाराजस्य.

योभाजनं देति तथागतस्य
न तस्य जातु स्मृति प्रज्ञ हीयते ।
अतिनाम्य कालं च सुखंसुखेन
यावत्पदं बुध्यति शीतिभावम् ॥ ८८ ॥ R 498

अथ खलु भिक्षवस्तथागतो धृतराष्ट्रस्य महाराजस्यान्तिकात्तत्पात्रं प्रतिगृह्णीते स्म अनुकम्पामुपादाय । प्रतिगृह्य च विरूढकं महाराजं गाथयाध्यभाषत –

ददासि यस्त्वं परिशुद्धभाजनं
विशुद्धचित्ताय तथागताय ।
भविष्यसि त्वं लघु शुद्धचित्तः
प्रशंसितो देवमनुष्यलोके ॥ ८९ ॥

अथ खलु भिक्षवस्तथागतो विरूढकस्य महाराजस्यान्तिकात्तत्पात्रं प्रतिगृह्णीते स्म अनुकम्पामुपादाय । प्रतिगृह्य च विरूपाक्षं महाराजं गाथयाध्यभाषत –

अच्छिद्रशीलस्य तथागतस्य L 385
अच्छिद्रवृत्तस्य अच्छिद्रभाजनम् ।
अच्छिद्रचित्तः प्रददासि श्रद्धया
अच्छिद्र ते भेष्यति पुण्यदक्षिणा ॥ ९० ॥

प्रतिगृह्णीते स्म भिक्षवस्तथागतो विरूपाक्षस्य महाराजस्यान्तिकात्तत्पात्रं अनुकम्पामुपादाय । प्रतिगृह्य चैकं पात्रमधितिष्ठति स्म अधिमुक्तिबलेन । तस्यां च वेलायामिदमुदानमुदानयति स्म –

दत्तानि पात्राणि पुरे[1] भवे मया R 499
फलपूरिता प्रेमणिया[2] च कृत्वा ।
तेनेमि पात्राश्चतुरः सुसंस्थिता
ददन्ति देवाश्चतुरो महर्द्धिकाः ॥ ९१ ॥

तत्रेदमुच्यते ।

स सप्तरात्रं वरबोधिवृक्षं
संप्रेक्ष्य धीरः परमार्थदर्शी ।
षड्भिः प्रकारैः प्रविकम्प्य चोर्वीं
अभ्युत्थितः सिंहगतिर्नृसिंहः ॥ ९२ ॥

समन्त नागेन्द्रविलम्बगामी
क्रमेण तारायणमूलमेत्य ।

१ R पुराभवे for पुरे भवे. २ R प्रमणीयाश्च for णिया च.

उपाविशन्मेरुवदप्रकम्प्यो
ध्यानं समाधिं च मुनिः प्रदध्यौ ॥ ९३ ॥
तस्मिंश्च काले त्रपुषश्च भल्लिको
भ्रातृद्वयं वणिजगणेन सार्धम् ।
शकटानि ते पञ्च धनेन पूर्णा
संपुष्पिते सालवने प्रविष्टाः ॥ ९४ ॥
महर्षितेजेन च अक्षमात्रं
चक्राणि भूमौ विविशुः क्षणेन ।
तां तादृशीं प्रेक्ष्य च ते अवस्थां
महद्भयं वणिजगणस्य जातम् ॥ ९५ ॥
ते खड्गहस्ताः शरशक्तिपाणयो
वने मृगं वा मृगयन् क एषः ।
वीक्षन्त ते शारदचन्द्रवक्त्रं
जिनं सहस्रांशुमिवाभ्रमुक्तम् ॥ ९६ ॥
प्रहीनकोपा अपनीतदर्पाः
प्रणम्य मूर्ध्ना विमृषुः क एषः ।
R 500 नभस्तलादेवत वाच भाषते
बुद्धो ह्ययं लोकहितार्थकारी ॥ ९७ ॥
रात्रिंदिवा सप्त न चान्नपानं
अनेन भुक्तं करुणात्मकेन ।
यदिच्छथा आत्मन क्लेशशान्तिं
भोजेथिमं भावितकायचित्तम् ॥ ९८ ॥
L 386 शब्दं च ते तं मधुरं निशाम्य
वन्दित्व कृत्वा च जिनं प्रदक्षिणम् ।
प्रीतास्ततस्ते सहितैः सहायैः
जिनस्य पिण्डाय मतिं प्रचक्रुः ॥ ९९ ॥

तेन खलु भिक्षवः समयेन त्रपुषभल्लिकानां वणिजां प्रत्यन्तकर्वटे गोयूथं प्रतिवसति स्म। अथ ता गावस्तस्मिन् काले तस्मिन् समये सर्पिमण्डं प्रदुग्धा अभूवन्। अथ गोपालास्तत्सर्पिमण्डमादाय येन त्रपुषभल्लिकौ वणिजौ तेनोपसंक्रामन् । उपसंक्रम्येमां प्रकृतिमारोचयन्ति स्म – यत्खलु यूयं भद्रा जानीयात – सर्वास्ता गावः सर्पिमण्डं प्रदुग्धाः । तत्किमेतत्प्रशस्तमाहोस्विन्नेति ?

तत्र लोलुपजात्या ब्राह्मणा एवमाहुः – अमङ्गल्यमेतद्ब्राह्मणानाम् । महायज्ञो यष्टव्य इति ॥

१ R अहीनकोपाः for प्रहीन॰.

तेन खलु पुनर्भिक्षवः समयेन त्रपुषभल्लिकानां वणिजां शिखण्डी नाम ब्राह्मणः पूर्वजातिसालोहितो ब्रह्मलोके प्रत्याजातोऽभूत् । स ब्राह्मणरूपमभिनिर्माय तान् वणिजो गाथाभिरध्यभाषत —

युष्माकं प्रणिधिः पूर्वे बोधिप्राप्तस्तथागतः ।
अस्माकं भोजनं भुक्त्वा धर्मचक्रं प्रवर्तयेत् ॥ १०० ॥ R 501
स चैष प्रणिधिः पूर्णो बोधिप्राप्तस्तथागतः ।
आहारमुपनाम्येत भुक्त्वा चक्रं प्रवर्तयेत् ॥ १०१ ॥
सुमङ्गलं सुनक्षत्रं गवां वः सर्पिदोहनम् ।
पुण्यकर्मणस्तस्यैष अनुभावो महर्षिणः ॥ १०२ ॥
एवं संचोद्य वणिजः शिखण्डी भवनं गतः ।
उदग्रमनसः सर्वे बभुवुस्त्रपुषाह्वयाः ॥ १०३ ॥
क्षीरं यदासीच्च हि गोसहस्रा
अशेषतस्तं समुदानयित्वा ।
अग्रं च तस्मात्परिगृह्य ओजः L 387
साधेंसु ते भोजन गौरवेण ॥ १०४ ॥
शतं सहस्रैकपलस्य मूल्यं
या रत्नपात्री अभु[1] चन्द्रनामिका ।
चौक्षां सुधौतां विमलां च कृत्वा
समतीर्थिकां पूरिषु भोजनेन ॥ १०५ ॥
मधुं गृहीत्वा तथ रत्नपात्रीं
तारायणीमूलमुपेत्य शास्तुः ।
प्रतिगृह्ण भक्ते अनुगृह्ण चास्मान्
इदं प्रणीतं परिभुङ्क्ष्व भोज्यम् ॥ १०६ ॥
अनुकम्पनार्थाय उभौ[2] च भ्रातृणां
पूर्वाशयं ज्ञात्व च बोधिप्रस्थितौ ।
प्रतिगृहीत्वा परिभुञ्जि शास्ता
भुक्त्वा क्षिपी पात्रि नभस्तलेस्मिं ॥ १०७ ॥
सुब्रह्मनामा च हि देवराजो R 502
जग्राह यस्तां वररत्नपात्रीम् ।
अधुनाप्यसौ तां खलु ब्रह्मलोके
संपूजयत्यन्यसुरैः सहायः ॥ १०८ ॥

---

१ R अभूच्चन्दननामिका for अभु चन्द्रनामिका. २ R उभयोश्च for उभौ च.

अथ खलु तथागतस्तस्यां वेलायां तेषां त्रपुषभल्लिकानां वणिजानामिमां संहर्षणामकार्षीत् –

दिशां स्वस्तिकरं दिव्यं मङ्गल्यं चार्थसाधकम् ।
अर्था वः शासतां सर्वे भवत्वाशु प्रदक्षिणा ॥ १०९ ॥
श्रीर्वोऽस्तु दक्षिणे हस्ते श्रीर्वो वामे प्रतिष्ठिता ।
श्रीर्वोऽस्तु सर्वसा[1]ङ्गेषु मालेव शिरसि स्थिता ॥ ११० ॥
धनैषिणां प्रयातानां वणिजां वै दिशो दश ।
उत्पद्यन्तां महालाभास्ते च सन्तु सुखोदयाः ॥ १११ ॥
कार्येण केनचिद्येन गच्छथा पूर्विकां दिशम् ।
नक्षत्राणि वः पालेन्तु ये तस्यां दिशि संस्थिता ॥ ११२ ॥
कृत्तिका रोहिणी चैव मृगशिरार्द्रा पुनर्वसुः ।
पुष्यश्चैव तथाश्लेषा इत्येषां पूर्विकादिशाम् ॥ ११३ ॥
L 388 इत्येते सप्त नक्षत्रा लोकपाला यशस्विनः ।
अधिष्ठिता पूर्वभागे देवा रक्षन्तु सर्वतः ॥ ११४ ॥
तेषां चाधिपती राजा धृतराष्ट्रेति विश्रुतः ।
स सर्वगन्धर्वपतिः सूर्येण सह रक्षतु ॥ ११५ ॥
पुत्रा पि तस्य बहव एकनामा विचक्षणाः ।
R 503 अशीतिर्दश चैक[2]श्च इन्द्रनामा महाबला ।
तेऽपि व अधिपालेन्तु आरोग्येन शिवेन च ॥ ११६ ॥
पूर्वस्मिन् वै दिशो भागे अष्टौ देवकुमारिकाः ।
जयन्ती विजयन्ती च सिद्धार्था अपराजिता ॥ ११७ ॥
नन्दोत्तरा नन्दिसेना नन्दिनी नन्दवर्धनी ।
ता पि व अधिपालेन्तु आरोग्येन शिवेन च ॥ ११८ ॥
पूर्वस्मिन् वै दिशो भागे चा[3]पालं नाम चेतियम् ।
अवुस्तं जिनेभि ज्ञातमर्हन्तेभि च तायिभिः ।
ते[4]ऽपि व अधिपालेन्तु आरोग्येन शिवेन च ॥ ११९ ॥
क्षेमाश्च वो दिशः सन्तु मा च वः पापमागमत् ।
लब्धा[5]र्थाश्च निवर्तध्वं सर्वदेवेभि रक्षिताः ॥ १२० ॥
येन केनचित्कृत्येन गच्छेथा दक्षिणां दिशम् ।
नक्षत्राणि वः पालेन्तु ये तां दिशामधिष्ठिता ॥ १२१ ॥

---

१ R सर्वरोगेषु for °साङ्गेषु. २ R चैकस्य for चैकश्च. ३ R चापलं नाम चेटिका for चापालं नाम चेतियम्. ४ R सापि for तेऽपि. ५ R लब्धाश्चार्थो for लब्धार्थाश्च.

मघा च द्वौ च फाल्गुन्यौ हस्ता चित्रा च पञ्चमी ।
स्वातिश्चैव विशाखा च एतेषां दक्षिणा दिशा ॥ १२२ ॥
इत्येते सप्त नक्षत्रा लोकपाला यशस्विनः । R 504
आदिष्टा दक्षिणे भागे ते वो रक्षन्तु सर्वतः ॥ १२३ ॥
तेषां चाधिपती राजा विरूढक इति स्मृतः । L 389
सर्वकुम्भाण्डाधिपतिर्यमेन सह रक्षतु ॥ १२४ ॥
पुत्रा पि तस्य बहव एकनामा विचक्षणाः ।
अशीतिर्दश चैकश्च इन्द्रनामा महाबलाः ।
तेऽपि व अधिपालेन्तु आरोग्येन शिवेन च ॥ १२५ ॥
दक्षिणेऽस्मिन् दिशो भागे अष्टौ देवकुमारिकाः ।
श्रियामती यशमती यशप्राप्ता यशोधरा ॥ १२६ ॥
सुउत्थिता सुप्रथमा सुप्रबुद्धा सुखावहा ।
ता पि व अधिपालेन्तु आरोग्येन शिवेन च ॥ १२७ ॥
दक्षिणेऽस्मिन् दिशो भागे पद्मनामेन चेतिकम्[1] ।
नित्यं ज्वलिततेजेन दिव्यं[2] सर्वप्रकाशितम् ।
तेऽपि[3] वै अधिपालेन्तु आरोग्येन शिवेन च ॥ १२८ ॥
क्षेमाश्च वो दिशः सन्तु मा च वः पापमागमत् ।
लब्धार्थाश्च निवर्तध्वं सर्वदेवेभि रक्षिताः ॥ १२९ ॥
येन केनचित्कृत्येन गच्छेथा पश्चिमां दिशम् ।
नक्षत्राणि वः पालेन्तु ये तां दिशमधिष्ठिता ॥ १३० ॥ R 505
अनुराधा च जेष्ठा च मूला च दृढवीर्यता ।
द्वावाषाढे अभिजिच्च श्रवणो भवति सप्तमः ॥ १३१ ॥
इत्येते सप्त नक्षत्रा लोकपाला यशस्विनः ।
आदिष्टा पश्चिमे भागे ते वो रक्षन्तु सर्वदा ॥ १३२ ॥
तेषां चाधिपती राजा विरूपाक्षेति तं विदुः[4] ।
स सर्वनागाधिपतिर्वरुणेन सह रक्षतु ॥ १३३ ॥
पुत्रा पि तस्य बहवः एकनामा विचक्षणाः । L 390
अशीतिर्दश चैकश्च इन्द्रनामा महाबलाः ।
तेऽपि व अधिपालेन्तु आरोग्येन शिवेन च ॥ १३४ ॥
पश्चिमेऽस्मिन् दिशो भागे अष्टौ देवकुमारिकाः
अलम्बुशा मिश्रकेशी पुण्डरीका तथारुणा ॥ १३५ ॥

---

१ R चेटिकां for चेतिकम्. २ R नित्यं for दिव्यं. ३ R सापि for तेऽपि. ४ R विरूपाक्ष इति स्मृतः for विरूपाक्षेति तं विदुः.

एकादशा नवमिका[1] शीता कृष्णा च द्रौपदी ।
ता पि व अधिपालेन्तु आरोग्येन शिवेन च ॥ १३६ ॥
पश्चिमेऽस्मिन् दिशो भागे अष्टङ्गो[2] नाम पर्वतः ।
प्रतिष्ठा चन्द्रसूर्याणां अष्टमर्थं[3] ददातु वः ।
R 506 सोऽपि व अधिपालेतु आरोग्येन शिवेन च ॥ १३७ ॥
क्षेमाश्च वो दिशः सन्तु मा च वः पापमागमत् ।
लब्धार्थाश्च निवर्तध्वं सर्वदेवेभि रक्षिताः ॥ १३८ ॥
येन केनचित्कृत्येन गच्छेथा उत्तरां दिशम् ।
नक्षत्राणि वः पालेन्तु ये तां दिशमधिष्ठिता ॥ १३९ ॥
धनिष्ठा शतभिषा चैव द्वे च[4] पूर्वोत्तरापरे ।
रेवती अश्विनी चैव भरणी भवति सप्तमी ॥ १४० ॥
इत्येते सप्त नक्षत्रा लोकपाला यशस्विनः ।
आदिष्टा[5] उत्तरे भागे ते वो रक्षन्तु सर्वदा ॥ १४१ ॥
तेषां चाधिपती राजा कुबेरो नरवाहनः ।
सर्वयक्षाणामधिपतिर्माणिभद्रेण सह रक्षतु ॥ १४२ ॥
पुत्रा पि तस्य बहव एकनामा विचक्षणाः ।
अशीतिर्दश चैकश्च इन्द्रनामा महाबलाः ।
L 391 ते पि व अधिपालेन्तु आरोग्येन शिवेन च ॥ १४३ ॥
उत्तरेऽस्मिन् दिशो भागे अष्टौ देवकुमारिकाः ।
R 507 इलादेवी सुरादेवी पृथ्वी पद्मावती तथा ॥ १४४ ॥
उपस्थिता महाराजा आशा श्रद्धा हिरी शिरी ।
ता पि व अधिपालेन्तु आरोग्येन शिवेन च ॥ १४५ ॥
उत्तरेऽस्मिन् दिशो भागे पर्वतो गन्धमादनः ।
आवासो यक्षभूतानां चित्रकूटः सुदर्शनः ।
तेऽपि व अधिपालेन्तु आरोग्येन शिवेन च ॥ १४६ ॥
क्षेमाश्च वो दिशः सन्तु मा च वः पापमागमत् ।
लब्धार्थाश्च निवर्तध्वं सर्वदेवेभि रक्षिताः ॥ १४७ ॥
अष्टाविंशति नक्षत्रा सप्त सप्त चतुर्दिशम् ।
द्वात्रिंशद्देवकन्याश्च अष्टावष्टौ चतुर्दिशम् ॥ १४८ ॥
अष्टौ श्रमणा ( चाष्टौ ) ब्राह्मणा ( अष्टौ ) जनपदेषु नैगमाः ।
अष्टौ देवाः सइन्द्रकास्ते वो रक्षन्तु सर्वतः ॥ १४९ ॥

१ R नवनामि for नवमिका. २ R अष्टमो for अष्टङ्गो. ३ R इष्टमर्थं for अष्टमर्थं. ४ R द्वौ च भद्रे पदे तथा for द्वे च पूर्वोत्तरापरे. ५ R अदिष्टा for आदिष्टा.

स्वस्ति वो गच्छतां भोतु स्वस्ति भोतु निवर्ततताम् ।
स्वस्ति पश्यत वै ज्ञातिं स्वस्ति पश्यन्तु ज्ञातयः ॥ १५० ॥

सेन्द्रा यक्षा महाराजा अर्हन्तमनुकम्पिताः ।
सर्वत्र स्वस्ति गच्छध्वं प्राप्स्यध्वममृतं शिवम् ॥ १५१ ॥

संरक्षिता ब्राह्मण वासवेन[2] R 508
विमुक्तिचित्तैश्च अनाश्रवैश्च ।
नागैश्च यक्षैश्च सदानुकम्पिताः
पालेथ आयुः शरदां शतं समम् ॥ १५२ ॥

प्रदक्षिणां दक्षिणलोकनाथः
तेषां दिशैषऽप्रतिमो विनायकः ।
अनेन यूयं कुशलेन कर्मणा
मधुसंभवा नाम जिना भविष्यथ ॥ १५३ ॥

प्रथमादिदं लोकविनायकस्य L 392
असङ्गतो व्याकरणं जिनस्य ।
पश्चादनन्ता बहुबोधिसत्त्वा
ये व्याकृता बोधयि नो विवर्त्याः ॥ १५४ ॥

श्रुत्वा इमं व्याकरणं जिनस्य
उदग्रचित्ता परमाय प्रीत्या ।
तौ भ्रातरौ सार्धं सहायकैस्तैः
बुद्धं च धर्मं शरण प्रपन्नाः ॥ १५५ ॥ इति ॥

॥ इति श्रीललितविस्तरे त्रपुषभल्लिकपरिवर्तो नाम चतुर्विंशतितमोऽध्यायः ॥

१ R प्राप्नुध्वम् for प्राप्स्यध्वम्. २ R न शिवेन for वासवेन.

# अध्येषणापरिवर्तः पञ्चविंशः।

R 509 इति हि भिक्षवस्तथागतस्य तारायणमूले विहरतः प्रथमाभिसंबुद्धस्यैकस्य रहोगतस्य प्रतिसंलीनस्य लोकानुवर्तनां प्रत्येतदभवत् – गम्भीरो बतायं मया धर्मोऽधिगतोऽभिसंबुद्धः शान्तः प्रशान्त उपशान्तः प्रणीतो दुर्दृशो दुरनुबोधोऽ[1]तर्कोऽवितर्कावचरः। अलमार्यः पण्डित[2]विज्ञवेदनीयो यदुत सर्वोपधिनिःसर्गोऽवेदितोऽनिवेदितः सर्ववेदितनिरोधः परमार्थोऽनालयः। शीतीभावोऽनादानोऽनुपादानोऽविज्ञप्तोऽविज्ञापनीयोऽसंस्कृतः षड्विषयसमतिक्रान्तः। अकल्पोऽविकल्पोऽनभिलाप्यः। अरुतोऽघोषोऽनुदाहारः। अनिदर्शनोऽप्रतिघः सर्वालम्बनसमतिक्रान्तः शमथधर्मोपच्छेदः। शून्यतानुपलम्भः। [3]तृष्णाक्षयो [4]विरागो निरोधो निर्वाणम्। अहं चेदिमं परेभ्यो धर्मं देशयेयम्, ते चे[5]न्नाजानीयुः, स मे स्यात्[6]क्लमथो मिथ्या[7]व्यायामोऽक्षणधर्मदेशनता च। यन्न्वहमल्पोत्सुकस्तूष्णीभावेन विहरेयम्। तस्यां च वेलायामिमां गाथामभाषत –

L 393 गम्भीर शान्तो विरजः प्रभास्वरः
प्राप्तो मि धर्मो ह्यमृतोऽसंस्कृतः।
देशेय चाहं न परस्य जाने
यन्नून तूष्णी पवने [8]वसेयम्॥ १॥

अपगतगिरिवाक्पथो ह्यलिप्तो
यथ गगनं तथा स्वभावधर्मम्।
R 510 चित्तमन विचारविप्रमुक्तं
[9]परमसुआश्चरियं परो विजाने॥ २॥

न च पुनरयु शक्य अक्षरेभिः
प्रविशतु अनर्थयोगविप्रवेशः।
पुरिमजिनकृताधिकारसत्त्वाः
ते इमु श्रुणित्व हि धर्मु श्रद्दधन्ति॥ ३॥

न च पुनरिह कश्चिदस्ति धर्मः
सो पि न विद्यते यस्य नास्तिभावाः॥ ४॥
हेतुक्रियपरंपरा य जाने
तस्य न भोतिह अस्तिनास्तिभावाः॥ ४॥

---

१ R अतर्कोऽचलोऽवितर्काव° for अतर्कोऽवितर्का°. २ R om. °विज्ञ°. ३ R तृष्णानिरोध° for तृष्णाक्षयो. ४ R विरागनिरोधो for विरागो नि°. ५ R जानीयुः for नाजानीयुः. ६ R कुपथो for क्लमथो. ७ R °व्यायामं क्षण° for °व्यायामोऽक्षण°. ८ R चरेयम् for वसेयम्. ९ R परम आश्च° for परमसुआश्च°.

कल्पशतसहस्र अप्रमेया
    अहु चरितः पुरिमे जिनसकाशे।
न च मय प्रतिलब्ध एष क्षान्ती
    यत्र न आत्म न सत्त्व नैव जीवः ॥ ५ ॥
यद मय प्रतिलब्ध एष क्षान्ती
    म्रियति न चेह न कश्चि जायते वा।
प्रकृति इमि निरात्म सर्वधर्माः
    तद मां व्याकरि बुद्ध दीपनामा ॥ ६ ॥
करुण मम अनन्त सर्वलोके
    पर[1]तु न चो[2]र्थनतामहं प्रतीक्षे।
[3]यद पुन जनता प्रसन्न ब्रह्मे
    तेन अधीष्टु प्रवर्तयिष्य चक्रम् ॥ ७ ॥
एव च अयु धर्म ग्राह्यु मे स्यात् R 511
    सचि मम ब्रह्म क्रमे निपत्य याचेत्।
प्र[4]वदहि विरजा प्र[5]णीतु धर्मं
    सन्ति विजानक सत्त्वे[6] स्वाकराश्च ॥ ८ ॥

इति हि भिक्षवस्तथागतस्तस्मिन् समये ऊर्णाकोशात्प्रभामुत्सृजति स्म यया प्रभया त्रिसाहस्रमहासाहस्रो लोकधातुर्महता सुवर्णवर्णावभासेन स्फुटोऽभूत् ॥

अथ खलु दशत्रिसाहस्रमहासाहस्राधिपतिः शिखी महाब्रह्मा बुद्धानुभावेनैव तथागतस्य चेतसैव चेतःपरिवितर्कमाज्ञासीत्[7]—अल्पोत्सुकतायै भगवतश्चित्तमभिनतं न[8] धर्मदेशनायामिति। L 394
तस्यैतदभवत्—यन्न्वहमुपसंक्रम्य तथागतमध्येष्येयं[9] धर्मचक्रप्रवर्तनतायै ॥

अथ खलु शिखी महाब्रह्मा तस्यां वेलायां तदन्यान् ब्रह्मकायिकान् देवपुत्रानामन्त्रयते स्म—नश्यति बतायं मार्षा लोको विनश्यति, यत्र हि नाम तथागतोऽनुत्तरां सम्यक्संबोधिमभिसंबुध्याल्पोत्सुकतायै चित्तमभिनामयति न[10] धर्मदेशनायाम्। यन्नु वयमुपसंक्रम्य तथागतमर्हन्तं सम्यक्संबुद्धमध्येष्येमहि धर्मचक्रप्रवर्तनाय ॥

अथ खलु भिक्षवः शिखी महाब्रह्मा अष्टषष्ट्या ब्राह्मणशतसहस्रैः परिवृतः पुरस्कृतो येन तथागतस्तेनोपसंक्रामत्। उपसंक्रम्य तथागतस्य पादौ शिरसाभिवन्द्य प्राञ्जलिस्तथागतमेतदवोचत्—नश्यति बतायं भगवन् लोकः, प्रणश्यति बतायं भगवन् लोकः, यत्र हि नाम तथागतोऽनुत्तरां सम्यक्संबोधिमभिसंबुध्याल्पोत्सुकतायै चित्तमभिनामयति न धर्मदेशनायाम्। तत्साधु देशयतु R 512

१ परमनु for परतु न. २ R चानर्थरतामहं प्रतीक्ष्य for चार्थनतामहं प्रतीक्षे. ३ R इयं पुनर् for यद पुन. ४ R प्रवदति. ५ R विप्रणीत for प्रणीत. ६ R सत्त्वश्चारकाश्च for सत्त्व स्वाकराश्च. ७ R आज्ञाय for आज्ञासीत्. ८ R om. न. ९ R अध्येषयेयं for अध्येष्येयं. १० R न च for न.

भगवान् धर्मम्, देशयतु सुगतो धर्मम्। सन्ति सत्त्वाः स्वाकाराः सुविज्ञापकाः शक्ता भव्याः प्रतिबलाः भगवतो भाषितस्यार्थमाज्ञातुम्। तस्यां च वेलायामिमां गाथामभाषत –

समुदानिय ज्ञानमहाग्रमण्डलं
विसृज्य रश्मीन् दशदिक्षु चैव।
तदङ्ग ज्ञानां[1]शु नृपद्मबोधका
उपेक्षकस्तिष्ठसि वादिभास्कर:॥ ९॥

निमन्त्रयित्वार्यधनेन सत्त्वां
आश्वासयित्वा बहुप्राणकोट्यः।
न युक्तमेतत्तव लोकबन्धो
यं तूष्णिभावेन उपेक्षसे जगत्॥ १०॥

पराहनस्वोत्तमधर्मदुन्दुभिं
सद्धर्मशङ्खं च प्रपूरयाशु।
उच्छ्रेपयस्व महधर्मयूपं
प्रज्वालयस्व मे[2]हधर्मदीपम्॥ ११॥

L 395 प्रवर्ष वै धर्मजलं प्रधानं
प्रतारयेमां भवसागरस्थां।
प्रमोचयेमां महव्याधिक्लिष्टां
क्लेशाग्नितप्ते प्रशमं कुरुष्व॥ १२॥

निदर्शय त्वं खलु शान्तिमार्गं
क्षेमं शिवं निर्जरतामशोकम्।
निर्वाणमार्गागमनादनाथे
विपथस्थिते नाथ कृपां कुरुष्व॥ १३॥

विमोक्षद्वाराणि अपा[3]वृणिष्व
प्रचक्ष्व तं धर्मनयं ह्यकोप्यम्।
R 513 जात्यन्धभूतस्य जनस्य नाथ
त्वमुत्तमं शोधय धर्मचक्षुः॥ १४॥

न ब्रह्मलोके न च देवलोके
न यक्षगन्धर्वमनुष्यलोके।
लोकस्य यो जातिजरापनेता
नान्योऽस्ति त्वत्तो हि मनुष्यचन्द्रः॥ १५॥



१ R ज्ञानासु for ज्ञानांशु. २ R उत्तम° for मह°. ३ R अपावृणुष्व.

अध्येषकोऽहं तव धर्मराज
अध्याचराक्त्वन[1] सर्वदेवान् ।
अनेन पुण्येन अहं पि क्षिप्रं
प्रवर्तयेयं वरधर्मचक्रम् ॥ १६ ॥

अधिवासयति स्म भिक्षवस्तथागतः शिखिनो ब्रह्मणस्तूष्णीभावेन सदेवमानुषासुरस्य लोकस्यानुग्रहार्थमनुकम्पामुपादाय ॥

अथ खलु शिखी महाब्रह्मा तथागतस्य तूष्णीभावेनाधिवासनां विदित्वा दिव्यैश्चन्दनचूर्णैरगुरुचूर्णैश्च तथागतमभ्यवकीर्य प्रीतिप्रामोद्यजातस्तत्रैवान्तरधात् ॥

अथ खलु भिक्षवस्तथागतस्य धर्मालोकस्यादरोत्पादनार्थं शिखिनश्च महाब्रह्मणः पुनः
पुनस्तथागताध्येषणया कुशलमूलविवृद्ध्यर्थं धर्मस्य चातिगम्भीरोदारतामुपादाय पुनरप्येकस्य
रहोगतस्य प्रतिसंलीनस्यायमेवंरूपं चेतोवितर्कोऽभूत्—गम्भीरः खल्वयं मया धर्मोऽभिसंबुद्धः
सूक्ष्मो निपुणो दुरनुबोधः अतर्कोऽतर्कावचरः पण्डितविज्ञवेदनीयः सर्वलोकविप्रत्यनीको दुर्दशः
सर्वोपधिनिःसर्गः सर्वसंस्कारोपशमः सर्वतमोपच्छेदः शून्यतानुपलम्भस्तृष्णाक्षयो विरागो निरोधो L 396
निर्वाणम् । अहं चेदिदं धर्मं देशयेयम्, परे च मे न विभावयेयुः, सा मे परमा विहेठा भवेत् । R 514
यन्वहमल्पोत्सुकविहारेणैव विहरेयम् ॥

अथ खलु भिक्षवः शिखी महाब्रह्मा बुद्धानुभावेन पुनरपि तथागतस्येदमेवंरूपेण[1] चेतःपरिवितर्कमाज्ञाय येन शक्रो देवानामिन्द्रस्तेनोपसंक्रामत् । उपसंक्रम्य शक्रं देवानामिन्द्रमेतदवोचत्—यत्खलु कौशिक जानीयास्तथागतस्यार्हतः सम्यक्संबुद्धस्याल्पोत्सुकतायै चित्तं नतं न धर्मदेशनायाम् । नक्ष्यते[2] बतायं कौशिक लोकः, विनंक्ष्यते[3] बतायं कौशिक लोकः, महाविद्यान्धकारक्षिप्तो[4] बतायं कौशिक लोको भविष्यति, यत्र हि नाम तथागतस्यार्हतः सम्यक्संबुद्धस्याल्पोत्सुकतायै चित्तं नतं न धर्मसंप्रकाशनायाम्[5] । कस्माद्वयं न गच्छामस्तथागतमर्हन्तं सम्यक्संबुद्धं धर्मचक्रप्रवर्तनायाध्येषितुम् ? तत्कस्मात् ? न ह्यनध्येषितास्तथागता धर्मचक्रं प्रवर्तयन्ति । साधु मार्षेति शक्रो ब्रह्मा भौमाश्च देवा अन्तरीक्षाश्चातुर्महाराजकायिकास्त्रायत्रिंशा यामास्तुषिता निर्माणरतयः परनिर्मितवशवर्तिनो ब्रह्मकायिका आभास्वरा बृहत्फला शुभकृत्स्ना संबहुलानि च शुद्धावासकायिकदेवपुत्रशतसहस्राण्यतिक्रान्तवर्णा अतिक्रान्तायां रात्रौ केवलं तारायणमूलं दिव्येन वर्णेन दिव्येनावभासेनावभास्य येन तथागतस्तेनोपसंक्रामन् । उपसंक्रम्य तथागतस्य पादौ शिरसाभिवन्द्य प्रदक्षिणीकृत्य चैकान्ते तस्थुः ॥

अथ खलु शक्रो देवानामिन्द्रो येन तथागतस्तेनाञ्जलिं प्रणम्य तथागतं गाथयाभितुष्टाव— R 515

उत्तिष्ठ विजितसंग्राम प्रज्ञाकारा तिमिस्रा[6] विवर लोके । L 397
चित्तं हि ते विमुक्तं शशिरिव पूर्णो ग्रहविमुक्तः ॥ १७ ॥

---

१ R अन्धवदाकृत्व न for अध्याचराक्त्वन. १ R एवंरूपं for एवंरूपेण. २ R न क्षान्तो for नक्ष्यते. ३ R विनंक्ष्यति for विनंक्ष्यते. ४ R महान्धकार° for महाविद्यान्धकार°. ५ R धर्मदेशनायां for धर्मसंप्रकाश°. ६ R प्रज्ञाकरातृमिस्रा for प्रज्ञाकारा तिमिस्रा.

एवमुक्ते तथागतस्तूष्णीमेवास्थात् ॥

अथ खलु शिखी महाब्रह्मा शक्रं देवानामिन्द्रमेतदवोचत् – नैव कौशिक तथागता अर्हन्तः सम्यक्संबुद्धा अध्येष्यन्ते धर्मचक्रप्रवर्तनतायै यथा त्वमध्येषसे ॥

अथ खलु शिखी महाब्रह्मा एकांसमुत्तरासङ्गं कृत्वा दक्षिणजानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन तथागतस्तेनाञ्जलिं प्रणम्य तथागतं गाथयाध्यभाषत –

उत्तिष्ठ विजितसंग्राम प्रज्ञाकारा तिमिस्रा विवर लोके ।
देशय त्वं मुने धर्मं आज्ञातारो भविष्यन्ति ॥ १८ ॥

एवमुक्ते भिक्षवस्तथागतः शिखिनं महाब्रह्माणमेतदवोचत् – गम्भीरः खल्वयं महाब्रह्मन् मया धर्मोऽभिसंबुद्धः सूक्ष्मो निपुणः पेयालं यावत्सा मे स्यात्परमा विहेठा । अपि च मे ब्रह्मन्निमे गाथेऽभीक्ष्णं प्रतिभासः[1] –

प्रतिस्रोतगामि मार्गो गम्भीरो दुर्दृशो मम ।
न तं द्रक्ष्यन्ति रागान्धा अलं तस्मात्प्रकाशितुम् ॥ १९ ॥
R 516 अनुस्रोतं प्रवाह्यन्ते कामेषु पतिता प्रजाः ।
कृच्छ्रेण मेऽयं संप्राप्तं अलं तस्मात्प्रकाशितुम् ॥ २० ॥

अथ खलु भिक्षवः शिखी महाब्रह्मा शक्रश्च देवानामिन्द्रस्तथागतं तूष्णीभूतं विदित्वा सार्धं तैर्देवपुत्रैर्दुःखिता दुर्मनास्तत्रैवान्तरधायिषुः ॥

L 398 त्रिरपि च तथागतस्याल्पोत्सुकतायै चित्तं नमयति स्म ॥

तेन खलु पुनर्भिक्षवः समयेन मागधकानां मनुष्याणामिमान्येवंरूपाणि पापकानि अकुशलानि दृष्टिगतान्युत्पन्नान्यभूवन् । तद्यथा । केचिदेवमाहुः – वाता न वास्यन्ति । केचिदेवमाहुः – अग्निर्न ज्वलिष्यति । केचिदाहुः – देवो न वर्षिष्यति । केचिदाहुः – नद्यो न वह्यन्ति । केचिदाहुः – शस्यानि न प्रजास्यन्ति । केचिदाहुः – पक्षिण आकाशे न क्रमिष्यन्ति । केचिदाहुः – गुर्विण्यो नारोग्येण प्रसविष्यन्ति ॥

अथ खलु भिक्षवः शिखी महाब्रह्मा तथागतस्यैवमेवंरूपं चित्तवितर्कमाज्ञाय मागधकानां च मनुष्याणामिमानि दृष्टिगतानि विदित्वा अतिक्रान्तायां रात्रावभिसंक्रान्तेन वर्णेन सर्वावन्तं तारायणमूलं दिव्येनावभासेनावभास्य येन तथागतस्तेनोपसंक्रामत् । उपसंक्रम्य तथागतस्य पादौ
R 517 शिरसाभिवन्द्यैकांसमुत्तरासङ्गं कृत्वा दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन तथागतस्तेनाञ्जलिं प्रणम्य तथागतं गाथाभिरध्यभाषत –

वादो बभूव समलैर्विचिन्तितो
धर्मोऽविशुद्धो[2] मगधेषु पूर्वम् ।
अमृतं मुने तद्विवृणीष्व द्वारं
शृण्वन्ति धर्मं[3] विमलेन बुद्धम् ॥ २१ ॥



१ R प्रतिभासतः for °भासः. २ R ह्यशुद्धो for अविशुद्धो. ३ R धर्मं विपुलं for धर्मं विमलेन.

कृतस्वकार्थो[1]ऽसि भुजिष्यतां गतो
दुःखाभिसंस्कारमलापकृष्टः ।
न हानिवृद्धी कुशलस्य तेऽस्ति
त्वमग्रधर्मेष्विह पारमिं गतः ॥ २२ ॥
न ते मुने सदृश इहास्ति लोके
कुतोऽधिकः स्यादिह ते महर्षे ।
भवानिहाग्रस्त्रिभवे विरोचते
गिरिर्यथाऽसाव[2]सुरालयस्थः ॥ २३ ॥
महाकृपां जानय[3] दुःखिते जने L 399
न त्वादृशा जातु भवन्त्युपेक्षकाः ।
भवान् विशारद्यबलैः समन्वितः
त्वमेव शक्तो जनतां प्रतारितुम् ॥ २४ ॥
इयं सुशल्या सुचिरातुरा प्रजा R 518
सदेवका सश्रमणा द्विजाखिला ।
आरोगिनी भोतु निरातुरज्वरा
न चापरः शरणमिहास्य विद्यते ॥ २५ ॥
चिरानुबद्धास्तव देवमानुषाः
कल्याणचित्ता अमृतार्थिनश्च ।
धर्मं यमेवाधिगमिष्यते जिनो
यथावदन्यूनमुदाहरिष्यति ॥ २६ ॥
तस्माद्धिया चोमिसु[4] विक्रम त्वां
विनयस्व सत्त्वां चिरनष्टमार्गां ।
अविश्रुता[5]र्था शमनाय काङ्क्षिताः
सुदुर्बला बृंहणकाङ्क्षिणो वा ॥ २७ ॥
इयं तृषार्ता जनता महामुने
उदीक्षते धर्मजलं तवान्तिके ।
मेघो यथा संतृषितां वसुंधरां
कुरु तर्पणां नायक धर्मवृष्ट्या ॥ २८ ॥
चिरप्रणष्टा विचरन्ति मानवा
भवे कुदृष्टीगहने सकण्टके ।

---

१ R °स्वकार्यो for °स्वकार्थो. २ R यथा सा च सुरा° for यथासावसुरा°. ३ R विजनय for जानय.
४ R चापि सुविक्रम for चोमिसु विक्र°. ५ R अपि श्रुता° for अविश्रुता°.

अकण्टकं मार्गमृजुं प्रचक्ष्व तं
R 519 यं भावयित्वा ह्यमृतं लभेयम् ॥ २९ ॥
अन्धाप्रपाते पतिता ह्यनायका
नोद्धर्तुमन्यैरिह शक्यमेते ।
महाप्रपाते पतितां समुद्धर
छन्दं समुत्पाद्य वृषोऽसि बुद्धिमान् ॥ ३० ॥
न संगतिस्तेऽस्ति सदा मुने चिरं
कदाचिदौदुम्बरपुष्पसंनिभाः ।
जिनाः पृथिव्यां प्रभवन्ति नायकाः
प्रासाक्षणो[1] मोचय नाथ सत्त्वां ॥ ३१ ॥
अभूच्च ते पूर्वभवेष्वियं मतिः
तीर्णः स्वयं तारयिता भवेयम् ।
असंशयं पारगतोऽसि सांप्रतं
सत्यां प्रतिज्ञां कुरु सत्यविक्रमः ॥ ३२ ॥
धर्मोल्कया विधम मुनेऽन्धकारा
उच्छ्रेपय त्वं हि तथागतध्वजम् ।
अयं स कालः प्रतिलोभ्युदीरणे[2]
मृगाधिपो वा नद दुन्दुभिस्वरः ॥ ३३ ॥

अथ खलु भिक्षवस्तथागतः सर्वावन्तं लोकं बुद्धचक्षुषा व्यवलोकयन् सत्त्वान् पश्यति स्म
L 400 हीनमध्यप्रणीतानुच्चनीचमध्यमान् स्वाकारान् सुविशोधकान्[3] दुराकारान् दुर्विशोधकानुद्घाटितज्ञान-
R 520 विपञ्चिज्ञान् पदपरमांस्त्रीन् सत्त्वराशीनेकं मिथ्यत्वनियतमेकं सम्यक्त्वनियतमेकमनियतम् । तद्यथापि नाम भिक्षवः पुरुषः पुष्करिण्यास्तीरे स्थितः पश्यति जलरुहाणि कानिचिदुदकान्तर्गतानि कानिचिदुदकसमानि कानिचिदुदकाभ्युद्गतानि, एवमेव भिक्षवस्तथागतः सर्वावन्तं लोकं बुद्धचक्षुषा व्यवलोकयन् पश्यति स्म सत्त्वांस्त्रिषु राशिषु व्यवस्थितान् ॥

अथ खलु भिक्षवस्तथागतस्यैतदभवत्—देशयेयं चाहं धर्मं न वा देशयेयम् । स एष मिथ्यत्वनियतो राशिर्नैवायं धर्ममाजानीयात् । देशयेयं चाहं वा धर्मं न वा देशयेयम् । योऽयं सम्यक्त्वनियतो राशिराज्ञास्यत्येवैष धर्मम् । ( यत्खलु पुनरयमनियतो राशिराज्ञास्यत्येवैष धर्मम् । ) यत्खलु पुनरयमनियतो राशिः, तस्मै सचेद्धर्मं देशयिष्यामि, आज्ञास्यति । उत न देशयिष्यामि, नाज्ञास्यते ॥

अथ खलु भिक्षवस्तथागतोऽनियतराशिव्यवस्थितान् सत्त्वानारभ्य महाकरुणामवक्रामयति स्म ॥

---

१ R प्रासक्षणो for प्रातीक्षणो. २ R प्रतिभाति for प्रतिलाभी. ३. R दुर्विशो° for सुविशो°.

अथ खलु तथागत आत्मनश्चेमं सम्यग्ज्ञानमधिकृत्य शिखिनश्च महाब्रह्मणोऽध्येषणां विदित्वा शिखिनं महाब्रह्माणं गाथाभिरध्यभाषत–

अपावृतास्तेषाममृतस्य द्वारा
ब्रह्मन् ति सततं ये श्रोतवन्तः ।
प्रविशन्ति श्रद्धा नविहेठसंज्ञाः R 521
शृण्वन्ति धर्मं मगधेषु सत्त्वाः ॥ ३४ ॥

अथ खलु शिखी महाब्रह्मा तथागतस्याधिवासनां विदित्वा तुष्ट उदग्र आत्तमनाः प्रमुदितः प्रीतिसौमनस्यजातस्तथागतस्य पादौ शिरसा वन्दित्वा तत्रैवान्तरधात् ॥

अथ खलु भिक्षवो भौमा देवास्तस्यां वेलायामन्तरीक्षेभ्यो देवेभ्यो घोषमुदीरयन्ति स्म, L 401 शब्दमनुश्रावयन्ति स्म – अद्य मार्षा तथागतेनार्हता सम्यक्संबुद्धेन धर्मचक्रप्रवर्तनायै[1] प्रतिश्रुतम् । तद्भविष्यति बहुजनहिताय बहुजनसुखाय लोकानुकम्पायै महतो जनकायस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां च । परिहास्यन्ते बत भो मार्षा असुराः कायाः । दिव्याः कायाः परिपूरिं गमिष्यन्ति । बहवश्च सत्त्वा लोके परिनिर्वास्यन्ति । एवमेवान्तरीक्षा देवा भौमेभ्यो देवेभ्यः[2] प्रतिश्रुत्य चातुर्महाराजिकानां देवानां घोषमुदीरयन्ति स्म । चातुर्महाराजिकास्त्रायत्रिंशानाम्, त्रायत्रिंशा यामानाम्, यामा तुषितनिर्माणरतीनाम्, निर्माणरतयः परनिर्मितवशवर्तिनाम्, तेऽपि ब्रह्मकायिकानां देवानां[3] घोषमुदीरयन्ति स्म, शब्दमनुश्रावयन्ति स्म–अद्य मार्षास्तथागतेनार्हता सम्यक्संबुद्धेन धर्मचक्रप्रवर्तनायै प्रतिश्रुतम् । तद्भविष्यति बहुजनहिताय बहुजनसुखाय R 522 लोकानुकम्पायै महतो जनकायस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां च । परिहास्यन्ते बत भो मार्षा असुराः कायाः । दिव्याः काया विवर्धिष्यन्ते । बहवश्च सत्त्वा लोके परिनिर्वास्यन्तीति ॥

इति हि भिक्षवस्तत्क्षणं तन्मुहूर्तं तल्लवं यावद्ब्रह्मकायिका देवास्तस्माद्भौमादारभ्य[4] एकवागेकनिर्नाद एकनिर्घोषोऽभ्युद्गतोऽभूत्–अद्य मार्षास्तथागतेनार्हता सम्यक्संबुद्धेन धर्मचक्रप्रवर्तनायै प्रतिश्रुतमिति ॥

अथ खलु भिक्षवो धर्मरुचिश्च नामा बोधिवृक्षदेवता धर्मकायश्च धर्ममतिश्च धर्मचारी च, L 402 एते चत्वारो बोधिवृक्षदेवतास्तथागतस्य चरणयोर्निपत्यैवमाहुः – क्व भगवान् धर्मचक्रं प्रवर्तिष्यतीति ? एवमुक्ते भिक्षवस्तथागतस्तान्[5] देवतानेतदवोचत् – वाराणस्यामृषिपतने मृगदावे । ते आहुः– परीत्तजनकाया भगवन् वाराणसी महानगरी, परीत्तद्रुमच्छायश्च मृगदावः । सन्त्यन्यानि भगवन् महानगराणि ऋद्धानि स्फीतानि क्षेमानि सुभिक्षाणि रमणीयानि आकीर्णबहुजनमनुष्याणि उद्यानवन[6]-पर्वतप्रतिमण्डितानि । तेषां भगवानन्यतमे धर्मचक्रं प्रवर्तयतु । तथागतोऽवोचत् – मैवं भद्रमुखाः[7] । तत्कस्मात् ?

---

१ L वर्तनतायै for °वर्तनायै. २ R om. देवेभ्यः ३ R om. देवानां. ४ R तस्मादेवारभ्यैक° for तस्माद् भौमादारभ्य एक°. ५ R ता वृक्षदेवता for तान् देवतान्. ६ R उद्यानोपवन° for उद्यानवन°. ७ R भद्रमुखोऽवोचत् for भद्रमुखाः.

षष्टिं यज्ञसहस्रकोटिनयुता ये तत्र यष्टा मया
षष्टिं बुद्धसहस्रकोटिनयुता ये तत्र संपूजिता ।
पौराणामृषिणामिहालयु वरो वाराणसी नामवा
R 523 देवानागमभिष्टुतो महितलो धर्माभिनिम्नः सदा ॥ ३५ ॥

बुद्धा कोटिसहस्र नैकनवतिः पूर्वे स्मरामी अह
ये तस्मिन्नृषिसाह्वये वनवरे वर्तीसु चक्रोत्तमम् ।
शान्तं चाप्युपशान्तध्यानभिमुखं नित्यं मृगैः सेवितं
इत्यर्थे ऋषिसाह्वये वनवरे वर्तिष्यि चक्रोत्तमम् ॥ ३६ ॥ इति ॥

॥ इति श्रीललितविस्तरेऽध्येषणापरिवर्तो नाम पञ्चविंशतितमोऽध्यायः ॥

## ॥ धर्मचक्रप्रवर्तनपरिवर्तः षड्विंशः ॥

अथ खलु भिक्षवस्तथागतः कृतकृत्यः कृतकरणीयः सर्वबन्धनसमुच्छिन्नः सर्वक्लेशोद्धृतो निर्वान्तमलक्लेशो निहतमारप्रत्यर्थिकः सर्वबुद्धधर्मनयानुप्रविष्टः सर्वज्ञः सर्वदर्शी दशबलसमन्वागत- L 403 श्चतुर्वैशारद्यप्राप्तोऽष्टादशावेणिक[1]बुद्धधर्मप्रतिपूर्णः पञ्चचक्षुःसमन्वागतोऽनावरणेन बुद्धचक्षुषा सर्वावन्तं लोकमवलोक्यैवं चिन्तयति स्म—कस्मा[2] अयमहं सर्वप्रथमं धर्मं देशयेयम्? कतमः सत्त्वः शुद्धः स्वाकारः सुविनेयः सुविज्ञापकः सुविशोधको मन्दरागदोषमोहोऽपरोक्षविज्ञानो योऽश्रुतवान्[3] R 524 धर्मस्य परिहीयते[4]? तस्मायहं सर्वप्रथमं धर्मं देशयेयम्, यश्च मे धर्मं देशितमाजानीयान्न च मां स विहेठयेत् ॥

अथ खलु भिक्षवस्तथागतस्यैतदभूत्—रुद्रकः खलु रामपुत्रः शुद्धः स्वाकारः सुविज्ञापकः सुविशोधको मन्दरागमोहोऽपरोक्षविज्ञानः। सोऽश्रवणा[5]द्धर्मस्य[6] परिहीयते। श्रावकेभ्यो नैवसंज्ञानासंज्ञायतनसहव्रतायै धर्मं देशयति। कुत्रासावेतर्हि प्रतिवसतीत्याज्ञासीत्। अद्य सप्ताहकालगत इति। देवता अपि तथागतस्य चरणयोर्निपत्यैवमाहुः—एवमेतद्भगवन्, एवमेतत्सुगत, अद्य सप्ताहकालगतो रुद्रको रामपुत्रः। तस्य मे भिक्षव एतदभूत्—महाहानिर्वर्तते रुद्रकस्य रामपुत्रस्य, य इममेव सुप्रणीतं धर्ममश्रुत्वा कालगतः। सचेदसाविमं धर्मम[7]श्रोष्यदाज्ञास्यत्। तस्मै चाहं प्रथमं धर्मं देशयिष्यम्, न च मां स व्यहेठयिष्यत् ॥

पुनरपि भिक्षवस्तथागतस्यैतदभूत्—कोऽन्यः सत्त्वः शुद्धः सुविनेयः पूर्ववद्यावन्न च धर्मदेशनां विहेठयेदिति। ततो भिक्षवस्तथागतस्यैतदभवत्—अयं खल्वप्यारांडः[8] कालापः शुद्धो यावन्न च मे धर्मदेशनां विहेठयेदिति। समन्वाहरति स्म भिक्षवस्तथागतः कुत्रासावेतर्हीति। समन्वाहरंश्चाज्ञासीदद्य त्रीण्यहानि कालगतस्येति। शुद्धावासकायिका अपि च देवता एनमर्थं L 404 तथागतस्यारोचयन्ति स्म—एवमेतद्भगवन्, एवमेतत्सुगत। अद्य त्र्यहं[9] कालगतस्याराडस्य कालापस्य। R 525 ततस्तथागतस्यैतदभवत्—महाहानिर्वर्तते अराडस्य कालापस्य, य इममेवं सुप्रणीतं धर्ममश्रुत्वा कालगत इति ॥

पुनरपि भिक्षवस्तथागतस्यैतदभूत्—कः खल्वन्यः सत्त्वः शुद्धः स्वाकारो यावन्न च मे धर्म[10]देशनां विहेठयेदिति ॥

अथ खलु भिक्षवस्तथागतस्यैतदभवत्—ते खलु पञ्चका भद्रवर्गीयाः शुद्धाः स्वाकाराः सुविज्ञापकाः सुविशोधका मन्दरागदोषमोहा अपरोक्षविज्ञानाः। तेऽश्रवणाद्धर्मस्य परिहीयन्ते। तैश्चाहं दुष्करचर्यां चरन्नुपस्थितोऽभूवम्। ते मया धर्मं देशितमाज्ञास्यन्ति, न च मे ह विहेठयिष्यन्ति ॥

---

१. R °दशवैणिक° for °दशावेणिक°. २ R कस्मावहं for कस्मा अयमह. ३. R अश्रद्धावान् for अश्रुतवान्. ४ R तस्मादहं for तस्मायहं. ५ R स श्रवणाद् for सोऽश्रव°. ६. अपरिहीयते for परि°. ७ R धर्मं श्रोष्यत्याज्ञास्यति for धर्ममश्रोष्यदाज्ञास्यत्. ८ R अराडः कालामः everywhere. ९ R त्रयाह for त्र्यहं. १० R om. धर्म°.

अथ खलु भिक्षवस्तथागतस्यैतदभवत्—यन्न्वहं पञ्चकेभ्यो भद्रवर्गीयेभ्यः प्रथमं धर्मं देशयेयम् ॥

अथ खलु भिक्षवस्तथागतस्य पुनरेतदभवत्—कस्मिन्नेतर्हि पञ्चका भद्रवर्गीयाः प्रतिवसन्ति ? अथ तथागतः सर्वावन्तं लोकं बुद्धचक्षुषा व्यवलोकयन् पश्यति स्म । अद्राक्षीत्पञ्चकान् भद्रवर्गीयान् वाराणस्यां विहरत ऋषिपतने मृगदावे । दृष्ट्वा च तथागतस्यैतदभवत्—यन्न्वहं पञ्चकेभ्यो भद्रवर्गीयेभ्यः सर्वप्रथमं धर्मं देशयेयम् । ते हि मम सर्वप्रथमं धर्मं देशितमाज्ञास्यन्ति । तत्कस्य हेतोः ? चरिताविनो[1] हि ते भिक्षवः सुपरिपण्डितशुक्लधर्माणो मोक्षमार्गाभिमुखा निबन्धापनीताः ॥

L 405
R 526 अथ खलु भिक्षवस्तथागत एवमनुविचिन्त्य बोधिमण्डादुत्थाय त्रिसाहस्रमहासाहस्रं लोकधातुं संप्रकम्प्यानुपूर्वेण मगधेषु चर्यां चरन् काशिषु जनपदेषु चारिकां[2] प्रक्रामत् । अथ गयायां बोधिमण्डस्य चान्तरादन्यतम आजीवकोऽद्राक्षीत्तथागतं दूरत एवागच्छन्तम् । दृष्ट्वा च पुनर्येन तथागतस्तेनोपजगाम । उपेत्यैकान्तेऽस्थात् । एकान्ते स्थितश्च भिक्षव आजीवकस्तथागतेन सार्धं विविधां संमोदनीं कथां कृत्वा एवमाह—विप्रसन्नानि ते आयुष्मन् गौतम इन्द्रियाणि । परिशुद्धः पर्यवदातः पीतनिर्भासश्च ते छविवर्णः । तद्यथापि नाम शारदं[3] कालं पाण्डुरवर्णं प्रभास्वरं पीतनिर्भासं भवति, एवमेव भवतो गौतमस्य परिशुद्धानीन्द्रियाणि परिशुद्धं मुखमण्डलं पर्यवदातम् । तद्यथापि नाम तालफलस्य पक्वस्य समनन्तरवृन्तच्युतस्य बन्धनाश्रयः पीतनिर्भासो भवति परिशुद्धः पर्यवदातः, एवमेव भवतो गौतमस्य परिशुद्धानीन्द्रियाणि परिशुद्धं मुखमण्डलं पर्यवदातम् । तद्यथापि नाम जाम्बूनदवर्णनिष्कः उल्कामुखप्रकृष्टो[4] दक्षिणकर्मारपुत्रेण सुपरिकर्मकृतः पाण्डुकम्बलोपनिक्षिप्तो वर्णवान् भवति परिशुद्धः पर्यवदातः पीतनिभासोऽतीव प्रभास्वरः, एवमेव भवतो गौतमस्य विप्रसन्नानीन्द्रियाणि, परिशुद्धस्त्वग्वर्णः, पर्यवदातं मुखमण्डलम् । कस्मिन्नायुष्मन् गौतम ब्रह्मचर्यमुष्यते ? एवमुक्ते भिक्षवस्तथागतस्तमाजीवकं गाथया प्रत्यभाषत—

R 527 आचार्यो न हि मे कश्चित्सदृशो मे न विद्यते ।
एकोऽहमस्मि संबुद्धः शीतीभूतो निराश्रवः ॥ १ ॥

सोऽवोचत्—अर्हं खलु गौतममात्मानं प्रातिजानीषे । तथागतोऽवोचत्—

L 406 अहमेवारहं लोके शास्ता ह्यहमनुत्तरः ।
सदेवासुरगन्धर्वे नास्ति मे प्रतिपुद्गलः ॥ २ ॥

सोऽवोचत्—जिनं खलु गौतम मात्मानं प्रतिजानीषे । तथागतोऽवोचत्—

जिना हि मादृशा ज्ञेया ये प्राप्ता आश्रवक्षयम् ।
जिता मे पापका धर्मास्तेनोपग जिनो ह्यहम् ॥ ३ ॥

---

१ R चरिता विना for चरिताविनो. २ R चर्यां for चारिकां. ३ R शारदः कालः for शारदं कालं. ४ R° प्रविष्टो for प्रकृष्टो.

सोऽवोचत्—क तर्ह्यायुष्मन् गौतम गमिष्यसि? तथागतोऽवोचत्—

वाराणसीं गमिष्यामि गत्वा वै काशिनां[1] पुरीम् ।
अन्धभूतस्य लोकस्य कर्तास्म्यसदृशां प्रभाम् ॥ ४ ॥
वाराणसीं गमिष्यमि गत्वा वै काशिनां पुरीम् ।
शब्दहीनस्य लोकस्य ताडयिष्येऽमृतदुन्दुभिम् ॥ ५ ॥
वाराणसीं गमिष्यामि गत्वा वै काशिनां पुरीम् ।
धर्मचक्रं प्रवर्तिष्ये लोकेष्वप्रतिवर्तितम् ॥ ६ ॥

तद्भविष्यसि गौतम इत्युक्त्वा स आजीवको दक्षिणामुखः प्राक्रामत् । तथागतोऽप्युत्तरा- R 528
मुखः प्राक्रामत् ॥

इति हि भिक्षवस्तथागतो गयायां सुदर्शनेन नागराजेन निमन्त्रितोऽभूत् वासेन भक्तेन च । ततस्तथागतो रोहितवस्तुमगमत्[2], तस्मादुरुबिल्वाकल्पं तस्मादणाल्मगमत, ततः सारथिपुरम् । एषु च सर्वेषु भिक्षवस्तथागतो गृहपतिभिर्भक्तेन वासेन चोपनिमन्त्र्यमाणोऽनुपूर्वेण गङ्गाया नद्यास्तीरमुपागमत् ॥

तेन खलु पुनर्भिक्षवः समयेन गङ्गा महानदी सुपरिपूर्णा समतीर्थका वहति स्म ॥ L 407

अथ खलु भिक्षवस्तथागतो नाविकसमीपमुपागमत्पारसंतरणाय । स प्राह—प्रयच्छ गौतम तरपण्यम् । न मेऽस्ति मार्ष तरपण्यमित्युक्त्वा तथागतो विहायसा पथा तीरात्परं तीरमगमत् । ततः स नाविकस्तं दृष्ट्वातीव विप्रतिसार्यभूत्—एवंविधो दक्षिणीयो मया न तारित इति । हा कष्टमिति कृत्वा मूर्छितः पृथिव्यां पतितः । तत एनां प्रकृतिं नाविको राज्ञे बिम्बिसाराय आरोचयामास—श्रमणः स्वामि गौतमस्तरपण्यं याचमानो नास्ति तरपण्यमित्युक्त्वा विहायसा अतस्तीरात्परं तीरं गत इति । तच्छ्रुत्वा तदग्रेण राज्ञा बिम्बिसारेण सर्वप्रव्रजितानां तरपण्यमुत्सृष्टमभवत् ॥

इति हि भिक्षवस्तथागतोऽनुपूर्वेण जनपदचर्यां चरन् येन वाराणसी महानगरी तेनोपसंक्रामत् । उपसंक्रम्य काल्यमेव[3] निवास्य पात्रचीवरमादाय वाराणसीं महानगरीं पिण्डाय प्राविक्षत् ।
तस्यां पिण्डाय चरित्वा कृतभक्तकृत्यः पश्चाद्भक्तपिण्डपात्रप्रतिक्रान्तः येन ऋषिपतनो मृगदावो R 529
येन च पञ्चका भद्रवर्गीयास्तेनोपसंक्रामति स्म । अद्राक्षुः खलु पुनः पञ्चका भद्रवर्गीयास्तथागतं दूरत एवागच्छन्तम् । दृष्ट्वा च क्रियाबन्धमकार्षुः—एष स आयुष्मन्तः श्रमणो गौतम आगच्छति स्म शैथिलिको बाहुलिकः प्रधानविभ्रष्टः । अनेन खल्वपि तयापि तावत्पूर्विकया दुष्करचर्यया न शकितं किंचिदुत्तरिमनुष्यधर्मादलमार्यज्ञानदर्शनविशेषं साक्षात्कर्तुम् । किं
पुनरेतर्हि औदारिकमाहारमाहरन् सुखल्लिकायोगमनुयुक्तो विहरन् । अभव्यः खल्वेष शैथिलिको L 408
बाहुलिकः । नास्य केनचित्प्रत्युद्गन्तव्यं न प्रत्युत्थातव्यम् । न पात्रचीवरं प्रतिग्रहीतव्यं नाशनं दातव्यं न पानीयं परिभोग्यं न पादप्रतिष्ठानं स्थापयित्वातिरिक्तान्यासनानि । वक्तव्यं च—

---

१ R काशिकां for काशिनां. २ R रोहितवस्त्रम् for वस्तुम्. ३ L काल्पं; R कालम् काल्यम्.

संविद्यन्त इमान्यायुष्मन् गौतम अतिरिक्तान्यासनानि । सचेदाकाङ्क्षसि निषीदेति । आयुष्मां-
स्त्वाज्ञानकौण्डिन्यश्चित्तेनाधिवासयति स्म । वाचा च न प्रतिक्षिपति स्म । यथा यथा च
भिक्षवस्तथागतो येन पञ्चका भद्रवर्गीयास्तेनोपसंक्रामति स्म, तथा तथा ते स्वकस्वकेष्वासनेषु
न रमन्ते स्म, उत्थातुकामा अभूवन् । तद्यथापि नाम पक्षी शकुनिः पञ्जरगतः स्यात्, तस्य च
पञ्जरगतस्याधोऽग्निर्दग्धो भवेत् । सोऽग्निसंतप्तस्त्वरितमूर्ध्वमुत्पतितुकामो भवेत् प्रत्रेतुकामश्च, एवमेव
R 530 यथा यथा तथागतः पञ्चकानां भद्रवर्गीयाणां सकाशमुपसंक्रामति स्म, तथा तथा पञ्चका
भद्रवर्गीयाः स्वकस्वकेष्वासनेषु न रमन्ते स्म, उत्थातुकामा अभूवन् । तत्कस्मात् ? न स
कश्चित्सत्त्वः सत्त्वनिकाये संविद्यते यस्तथागतं दृष्ट्वा आसनान्न प्रत्युत्तिष्ठेत् । यथा यथा च तथागतः
पञ्चकान् भद्रवर्गीयानुपसंक्रामति स्म, तथा तथा पञ्चका भद्रवर्गीयास्तथागतस्य श्रियं तेजश्चासहमाना
आसनेभ्यः प्रकम्प्यमानाः[2] सर्वे क्रियाकारं[3] भित्त्वा चोत्थायासनेभ्यः, कश्चित्प्रत्युद्गच्छति स्म,
कश्चित्प्रत्युद्गम्य पात्रचीवरं प्रतिगृह्णाति स्म । कश्चिदासनमुपनामयति स्म । कश्चित्पादप्रतिष्ठापनं
कश्चित्पादप्रक्षालनोदकमुपस्थापयति स्म । एवं चावोचत्—स्वागतं ते आयुष्मन् गौतम,
स्वागतं ते आयुष्मन् गौतम । निषीदेदमासनं प्रज्ञप्तम् । न्यषीदत्खल्वपि भिक्षवस्तथागतः प्रज्ञप्त
L 409 एवासने । पञ्चका पि भद्रवर्गीयास्ते तथागतेन सार्धं विविधां[4] संमोदनीं संरञ्जनीं कथां
कृत्वैकान्ते निषेदुः । एकान्ते निषण्णाश्च ते पञ्चका भद्रवर्गीयास्तथागतमेतदवोचन्—
विप्रसन्नानि ते आयुष्मन् गौतमेन्द्रियाणि, परिशुद्धश्छविवर्ण इति हि सर्वं पूर्ववत् । तदस्ति ते
आयुष्मन् गौतम कश्चिदुत्तरिमनुष्यधर्मादलमार्यज्ञानदर्शनविशेषः साक्षात्कृतः ? एवमुक्ते भिक्षव-
स्तथागतः पञ्चकान् भद्रवर्गीयानेतदवोचत्—मा यूयं भिक्षवस्तथागतमायुष्मद्वादेन समुदाचरिष्ट । मा वो
R 531 भूद्दीर्घरात्रमर्थाय हिताय सुखाय । अमृतं मया भिक्षवः साक्षात्कृतोऽमृतगामी च मार्गः । बुद्धोऽ-
हमस्मि भिक्षवः सर्वज्ञः सर्वदर्शी शीतीभूतोऽनाश्रवः । वशी सर्वधर्मेषु । धर्ममहं भिक्षवो देश-
यिष्यामि, आशु गच्छत शृणुत प्रतिपद्यध्वम् । श्रोतमवदधत अहमवे[5]वदाम्यनुशास्मि । यथा मया सम्य-
गववदिताः सम्यगनुशिष्टा यूयमप्याश्रवाणां चेतोविमुक्तिं प्रज्ञाविमुक्तिं च दृष्ट एव धर्मे
साक्षात्कृत्वोपसंपद्य प्रवेदयिष्यथ—क्षीणा नो जातिरुषितं च ब्रह्मचर्यम्, कृतं करणीयम्, नापर-
मित्यतोऽन्यद्भवं प्रजानाम इति । ननु च युष्माकं भिक्षव एतदभूत्—अयं खल्वायुष्मन्त आगच्छति
श्रमणो गौतमः शैथिलिको बाहुलिकः प्रधानविभ्रष्ट इति पूर्ववत् । सचेदाकाङ्क्षसि निषीदेति ।
तेषां च एहि भिक्षव इत्युक्ते यत्किंचित्तीर्थिकलिङ्गं तीर्थिकध्वजः, सर्वोऽसौ तत्क्षणमेवान्तरधात् ।
त्रिचीवरं पात्रं च प्रादुरभूत्, तदनु छिन्नाश्च केशाः । तद्यथापि नाम वर्षशतोपसंपन्नस्य
भिक्षोरीर्यापथः संवृत्तोऽभूत् । सैव च तेषां प्रव्रज्याभूत्सैवोपसंपद्भिक्षुभावः ॥

अथ खलु भिक्षवस्तस्यां वेलायां पञ्चका भद्रवर्गीया[6] भिक्षवस्तथागतस्य चरणयो-
L 410 र्निपत्यात्ययं देशयन्ति स्म । तथागतस्यान्तिके शास्तृसंज्ञां प्रेमं च प्रसादं च गौरवं चोत्पादयन्ति
R 532 स्म । गौरवजाताश्च बहुविचित्रपुष्करिण्यां तथागतस्य स्नानपरिकर्म कुर्वन्ति स्म । स्नान-

---

१ R ज्ञातकौण्डिन्यः for आज्ञान° everywhere. २ R प्रकम्पमाणाः. ३ R क्रियां for क्रियाकारं.
४ R विविधाः संमोदनीः संरंजनीः कथाः. ५ R अहमेव for अहमव°. ६ R om. भद्रवर्गीया.

प्रत्युत्तीर्णस्य च भिक्षवस्तथागतस्यैतदभवत्—कस्मिन् खलु पूर्वकैस्तथागतैरर्हद्भिः सम्यक्संबुद्धैर्निषद्य धर्मचक्रं प्रवर्तितम् ? यस्मिंश्च भिक्षवः पृथिवीप्रदेशे पूर्वकैस्तथागतैरर्हद्भिर्धर्मचक्रं प्रवर्तितमभूत्, अथ तस्मिन् पृथिवीप्रदेशे सप्तरत्नमयमासनसहस्रं[1] प्रादुरभूत् ॥

अथ तथागतः पूर्वकाणां तथागतानां गौरवेण त्रीण्यासनानि प्रदक्षिणीकृत्य सिंह इव निर्भीश्चतुर्थ आसने पर्यङ्कमाभुज्य निषीदति स्म । पञ्चका अपि भिक्षवस्तथागतस्य पादौ शिरोभिरभिवन्द्य तथागतस्य पुरतो निषेदुः ॥

अथ खलु भिक्षवस्तस्यां वेलायां तथारूपां कायात्प्रभां तथागतः प्रामुञ्चद्यया प्रभया अयं त्रिसाहस्रमहासाहस्रो लोकधातुर्महतावभासेन स्फुटोऽभूत् । तेन चावभासेन या अपि लोकान्तरिका अघा अघस्फुटा अन्धकारतमिस्रा यत्रेमौ चन्द्रसूर्यौ एवंमहर्द्धिकावेवं महानुभावावेवं महेशाख्यौ आभया आभां वर्णेन वर्णं तेजसा तेजो नाभितपतो नाभिविरोचतः[2] । तत्र ये सत्त्वा उपपन्नास्ते स्वकस्वकमपि बाहुं प्रसारितं न पश्यन्ति स्म; तत्रापि तस्मिन् समये महत उदारस्यावभासस्य लोके प्रादुर्भावोऽभूत् । ये च तत्र सत्त्वा उपपन्नास्ते तेनावभासेन परिस्फुटाः समाना अन्योन्यं पश्यन्ति स्म । अन्योन्यं संजानन्ते स्म । एवं चाहुः—अन्येऽपि किल भोः सत्त्वा इहोपपन्नाः, अन्येऽपि किल भोः सत्त्वा इहोपपन्नाः इति । अयं च त्रिसाहस्रमहासाहस्रो लोकधातुः षड्विकारमष्टादशमहानिमित्तमभूत्—अकम्पत् प्राकम्पत् संप्राकम्पत् । अवेधत् प्रावेधत संप्रावेधत् । अचलत् प्राचलत् संप्राचलत् । अक्षुभ्यत् प्राक्षुभ्यत् संप्राक्षुभ्यत् । अरणत् प्रारणत् संप्रारणत् । अगर्जत् प्रागर्जत् संप्रागर्जत् । अन्तेऽवनमति स्म, मध्ये उन्नमति स्म । मध्येऽवनमति स्म अन्ते उन्नमति स्म । पूर्वस्यां दिश्यवनमति स्म, पश्चिमायां दिश्युन्नमति स्म । पश्चिमायां दिश्यवनमति स्म, पूर्वस्यां दिश्युन्नमति स्म । दक्षिणस्यां दिश्यवनमति स्म, उत्तरस्यां दिश्युन्नमति स्म । उत्तरस्यां दिश्यवनमति स्म, दक्षिणस्यां दिश्युन्नमति स्म । तस्मिंश्च समये हर्षणीयास्तोषणीयाः प्रेमणीयाः प्रसादनीया अवलोकनीयाः प्रह्लादनीया निर्वर्णनीया अप्रतिवर्णनीया असेचनीया[3] अप्रतिकूला अनुत्त्रासकराः शब्दाः श्रूयन्ते स्म । न च कस्यचित्सत्त्वस्य तस्मिन् क्षणे विहेठा वा त्रासो वा भयं वा स्तम्भितत्वं वाभूत् । न च भूयः सूर्यचन्द्रमसोर्न शक्रब्रह्मलोकपालानां तस्मिन् क्षणे प्रभाः प्रज्ञायन्ते स्म । सर्वनरकतिर्यग्योनियमलोकोपपन्नाश्च सत्त्वास्तस्मिन् क्षणे विगतदुःखा अभूवन् सर्वसुखसमर्पिताः । न च कस्यचित्सत्त्वस्य रागो बाधते स्म, द्वेषो वा मोहो वा ईर्ष्या वा मात्सर्यं वा मानो वा म्रक्षो वा मदो वा क्रोधो वा व्यापादो वा परिदाहो वा । सर्वसत्त्वास्तस्मिन् क्षणे मैत्रचित्ता हितचित्ताः परस्परं मातापितृसंज्ञिनोऽभूवन् । ततश्च प्रभाव्यूहादिमा गाथा निश्चरन्ति स्म—

योऽसौ तुषितालयाच्च्युत्वा ओक्रान्तु[4] मातुकुक्षौ हि ।
जातश्च लुम्बिनिवने प्रतिगृहीतः शचीपतिना ॥ ७ ॥

---

१ R आसनशतं for °सहस्रं. २ R न विरोचतः for नाभिवि°. ३ R असेचनका for °नीया. ४ R आक्रान्तु for ओक्रान्तु.

L 412 यः[1] सिंहविक्रमगतिः सप्तपदा विक्रमी असंमूढः ।
ब्रह्मस्वरामथ गिरं प्रमु[2]मोच जगत्यहं श्रेष्ठः ॥ ८ ॥
चतुरो द्वीपांस्त्यक्त्वा प्रव्रजितः सर्वसत्त्वहितहेतोः ।
दुष्करतपश्चरित्वा उपागमद्येन महिमण्डः ॥ ९ ॥
सबलं निहत्य मारं बोधिप्राप्तो हिताय लोकस्य ।
वाराणसीमुपगतो धर्मचक्रं प्रवर्तयिता[3] ॥ १० ॥
सब्रह्मणा सह सुरैरध्येष्टो वर्तय[4]स्व शमचक्रम् ।
अधिवासितं च मुनिना लोके कारुण्यमुत्पाद्य ॥ ११ ॥
सोऽयं दृढप्रतिज्ञो वाराणसिमुपगतो मृगदावम् ।
चक्रं ह्यनुत्तरमसौ प्रवर्तयितात्यद्भुतं श्रीमान् ॥ १२ ॥
यः श्रोतुकामु धर्मं यः कल्पनयुतैः समार्जितु जिनेन ।
शीघ्रमसौ त्वरमाणो आगच्छतु धर्मश्रवणाय ॥ १३ ॥
दुरवाप्यं मानुष्यं बुद्धोत्पादः सुदुर्लभा श्रद्धा ।
श्रेष्ठं च धर्मश्रवणं अष्टाक्षणविवर्जन दुरापाः ॥ १४ ॥
R 535 प्राप्ताश्च तेऽद्य सर्वे बुद्धोत्पादः क्षणस्तथा श्रद्धा ।
धर्मश्रवणश्च वरः प्रमादमखिलं विवर्जयत ॥ १५ ॥
भवति कदाचिदवस्था यः कल्पनयुतैर्न श्रूयते धर्मः ।
संप्राप्तः स[5] च वाद्य प्रमादमखिलं विवर्जयत ॥ १६ ॥
भौमादीन् देवगणान् संचोदयती च ब्रह्म[6]पर्यन्ताम् ।
आयात लघुं सर्वे वर्तयिता नायको ह्यमृतचक्रम् ॥ १७ ॥
संचोदिताश्च महता देवघोषेण तत्क्षणं सर्वे ।
त्यक्त्वा देवसमृद्धिं प्राप्ता बुद्धस्य ते पार्श्वे ॥ १८ ॥

L 413 इति हि भिक्षवो भौमैर्देवैर्वाराणस्यां ऋषिपतने मृगदावे धर्मचक्रप्रवर्तनार्थं तथागतस्य महामण्डलमात्रोऽधिष्ठितोऽभूत् चित्रो दर्शनीयो विपुलो विस्तीर्णः सप्तयोजनशता[7]न्यायामो विस्तारेण । उपरिष्टाच्च देवैश्छत्रध्वजपताकावितानसमलंकृतं गगनतलं समलंकृतमभूत् । कामावचरै रूपावचरैश्च देवपुत्रैश्चतुरशीतिसिंहासनशतसहस्राणि तथागतायोपनामितान्यभूवन्—इह निषद्य भगवान् धर्मचक्रं प्रवर्तयतु अस्माकमनुकम्पामुपादायेति ॥

अथ खलु भिक्षवस्तस्मिन् समये पूर्वदक्षिणपश्चिमोत्तराभ्यो दिग्भ्य ऊर्ध्वमधः समन्ताद्दशभ्यो दिग्भ्यो बहवो बोधिसत्त्वकोट्यः पूर्वप्रणिधानसमन्वागता आगत्य तथागतस्य चरणयोर्निपत्य धर्मचक्रप्रवर्तनायाध्येषन्ते स्म । ये चेह त्रिसाहस्रमहासाहस्रे लोकधातौ शक्रो वा ब्रह्मा वा लोकपाला

१ R यो हि for यः. २ R मुमोच for प्रमु°. ३ R प्रवर्तनाय for प्रवर्तयिता. ४ R वर्तयास्व for °यस्व. ५ R सचैवाद्य for स च वाद्य°. ६ R ब्रह्मचर्यपर्यन्ताम् for ब्रह्मपर्य°. ७ R °शतायामो for °शतान्यायामो.

त्रा तदन्ये वा महेशाख्यमहेशाख्या देवपुत्रास्तेऽपि सर्वे तथागतस्य चरणयोः शिरोभिः R 536
प्रणिपत्य तथागतमध्येषन्ते स्म धर्मचक्रप्रवर्तनाय–प्रवर्तयतु भगवान् धर्मचक्रम्, प्रवर्तयतु सुगतो धर्मचक्रं बहुजनहिताय बहुजनसुखाय लोकानुकम्पायै महतो जनकायस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां च। यजस्व भगवन् धर्मयज्ञम्, प्रवर्ष महाधर्मवर्षम्, उच्छ्रेपय महाधर्मध्वजम्, प्रपूरय महाधर्मशङ्खम्, प्रताडय महाधर्मदुन्दुभिम्॥

तत्रेदमुच्यते।

त्रिसहस्र इतो बहु ब्रह्म[1] सुरेश्वर पाल तथा
उपगम्य जिनस्य क्रमेभि निपत्य उदाहरिषु।
स्मर पूर्वप्रतिज्ञां महामुनि या त्वय वाच कृता L 414
अहु ज्येष्ठु विशिष्टु प्रजाय करिष्ये दुखस्य क्षयम्॥ १९॥
त्वय धर्षितु मारु ससैन्यु द्रुमेन्द्रि स्थिहित्व मुने
वरबोधि विबुद्ध सुशान्ति निपातित क्लेशद्रुमाः।
अभिप्रायु प्रपूर्ण अशेष य चिन्तित कल्पशता
जनतां प्रसमीक्ष्य अनायिक वर्तय [2]चक्रवरम्॥ २०॥
सुगतस्य प्रभाय [3]प्रभासित क्षेत्रसहस्रशता R 537
बहवः शतबुद्धसुताश्च उपागत ऋद्धिबलैः।
विविधां सुगतस्य करित्वन पूज महानिचयां
स्तवयिंसु तथागतु भूतगुणेभि अध्येषितु कारुणिकम्॥ २१॥
करुणाघन विद्युतप्रज्ञ विप[4]र्ययेन वायुसमा
अभिगर्जितु कल्पसहस्र निमन्त्रितु सर्वजगत्।
अष्टाङ्गिकमार्गजलो धर वर्ष समेहि जगस्य तृषां
बलइन्द्रियध्यानविमोक्ष विवर्धय [5]सस्यधनम्॥ २२॥
बहुकल्पसहस्र सुशिक्षितु शून्यतत्त्वे[6] स्थिता
समुदानितु धर्मजु भेषजु जानितु सत्त्वचरी।
जनता इय व्याधिशतेभि उपद्रुत क्लेशगणैः
जिनवैद्य प्रमो[7]चय वर्तय धर्मचक्रवरम्॥ २३॥
[8]षडि पारमिते चिररात्रु विवर्धितु कोशु त्वया
असमं तु अचाल्यु प्रणीतु सुसंचितु धर्मधनम्।
[9]प्रेज सर्व अनाथ दरिद्र अनायिक दृष्ट्व इमां
विचरं धन सप्त विनायक चक्र [10]प्रवर्तयही॥ २४॥ R 538

---

१ R °ब्रह्मस्वरैश्च for °ब्रह्मसुरेश्वर°. २ R धर्मचक्र° for चक्र°. ३ R सुभासित for प्रभा°. ४ R विपश्यन् for° श्यन. ५ R सत्त्वधुरं for सस्यधनम्. ६ R °तथत्व° °for °तत्त्व°. ७ R प्रमोचक for चय. ८ R सहि कालमिते for षडि पार°. ९ R व्रज सत्त्व for प्रेज सर्व. १० R प्रवर्त हे for प्रवर्तयही.

L 415 धनधान्य हिरण्यसुवर्ण तथैव च वस्त्र शुभा
वर पुष्प विलेपन धूपन चूर्ण गृहाश्च वराः ।
अन्तःपुर राज्य प्रियात्मज त्यक्त प्रहर्षयतो
जिन बोधि गवेषत सातिविबुद्ध प्रवर्तय चक्रवरम् ॥ २५ ॥

तथ शीलु अखण्डु अकल्मषु रक्षितु कल्पशतां
सद क्षान्ति सुभावित वीर्य अलीनु [1]अभूषि तव ।
वर ध्यान अभिज्ञ विपश्यन प्रज्ञ उपेक्ष मुने
परिपूर्ण मनोरथ [2]निर्व्वैर वर्तय चक्रवरम् ॥ २६ ॥

अथ खलु भिक्षवः सहचित्तोत्पादधर्मचक्रप्रवर्ती नाम बोधिसत्त्वो महासत्त्वस्तस्यां वेलायां [3]चक्रं सर्वरत्नप्रत्युप्तं सर्वरत्नप्रशोभितं नानारत्नालंकारव्यूहविभूषितं सहस्रारं सहस्ररश्मि सनाभिकं सनेमिकं सपुष्पदामं सहेमजालं सकिङ्किणीजालं सगन्धहस्तं सपूर्णकुम्भं सनन्दिकावर्तं
R 539 सस्वस्तिकालंकृतं नानारङ्गरक्तदिव्यवस्त्रोपशोभितं दिव्यपुष्प[4]गन्धमाल्यविलेपनानुलिप्तं सर्वाकारवरोपेतं तथागताय धर्मचक्रप्रवर्तनाय पूर्वप्रणिधानाभिनिर्हृतं बोधिसत्त्वाशयविशोधितं तथागतपूजार्हं सर्वतथागतसमन्वाहृतं सर्वबुद्धाधिष्ठाना[5]विलोपितं पूर्वकैस्तथागतैरर्हद्भिः सम्यक्संबुद्धैः [6]प्रत्येषितं प्रवर्तितपूर्वं च धर्मचक्रमुपनामयति स्म । उपनाम्य च कृताञ्जलिपुटस्तथागतमाभिर्गाथाभिरभ्यष्टावीत्–

दीपंकरेण यद व्याकृतु शुद्धसत्त्वो
बुद्धो भविष्यसि हि त्वं नरसिंहसिंहः ।
तस्मिं समासि प्रणिधी इयमेवरूपा
संबोधिप्राप्तु अहु धर्म अध्येषयेयम् ॥ २७ ॥

L 416 न च शक्य सर्वि गणनाय अनुप्रवेष्टुं
ये आगता दशदिशेभिरिहाग्रसत्त्वाः ।
अध्येषि शाक्यकुलनन्दन [7]धर्मचक्रे
प्रह्वा कृताञ्जलिपुटाश्चरणौ निपत्य ॥ २८ ॥

या बोधिमण्डि प्रकृता च सुरैर्वियूहा
या वा वियूह कृत सर्वजिनात्मजेभिः ।
सा सर्व संस्थित वियूह ति धर्मचक्रे
R 540 परिपूर्णकल्प भणमानु क्षयं न गच्छेत् ॥ २९ ॥

त्रिसहस्रि लोकि गगनं स्फुट [8]देवसंघैः
धरणीतलं असुरकिन्नरमानुषैश्च ।
[9]उत्कासशब्दु नपि श्रूयति तन्मुहूर्तं
सर्वि प्रसन्नमनसो जिनमभ्युदीक्षन् ॥ ३० ॥

---

१ R अभूषितका for अभूषि तव. २ R निर्जर for निर्व्वैर. ३ R om. चक्रं. ४ R °गन्धधूपमाल्य° for °गन्धमाल्य°. ५ R [illegible] for °विलोपितं. ६ R प्रेषितं for प्रत्येषितं. ७ R धर्मचक्रं for °चक्रे. ८ R सार्विदेवैः for देवसंघैः. ९ R उल्कशब्दम् for उल्कासशब्दु.

इति हि भिक्षवस्तथागतो रात्र्याः प्रथमे यामे तूष्णीभावेनाधिवासयति[1] स्म । रात्र्या मध्यमे यामे संरञ्जनीयां कथां प्रवर्तयति स्म । रात्र्याः पश्चिमे यामे पञ्चकान् भद्रवर्गीयानामन्त्र्यैतदवोचत्—द्वाविमौ भिक्षवः प्रव्रजितस्यान्तावक्रमौ । यश्च कामेषु कामसुखल्लिका योगो हीनो ग्राम्यः पार्थग्जनिको नालमार्योऽनर्थोपसंहितो नायत्यां ब्रह्मचर्याय न निर्विदे न विरागाय न निरोधाय नाभिज्ञाय न संबोधये न निर्वाणाय संवर्तते । या चेयमे[2]मध्यमा प्रतिपदा आत्मकायक्लमथानुयोगो दुःखो[3]ऽनर्थोपसंहितो दृष्टधर्मदुःखश्चायत्यां च दुःखविपाकः । एतौ च भिक्षवो द्वावन्तावनुपगम्य मध्यमयैव L 417 प्रतिपदा तथागतो धर्मं देशयति—यदुत सम्यग्दृष्टिः सम्यक्संकल्पः सम्यग्वाक् सम्यक्कर्मान्तः R 541 सम्यगाजीवः सम्यग्व्यायामः सम्यक्स्मृतिः सम्यक्समाधिरिति । चत्वारीमानि भिक्षव आर्यसत्यानि । कतमानि चत्वारि ? दुःखं दुःखसमुदयो दुःखनिरोधो दुःखनिरोधगामिनी प्रतिपत् । तत्र कतमद् दुःखम् ? जातिरपि दुःखं जरापि दुःखं व्याधिरपि दुःखं मरणमपि अप्रियसंप्रयोगोऽपि प्रियविप्रयोगोऽपि दुःखम् । यदपि इच्छन् पर्येषमाणो न लभते तदपि दुःखम् । संक्षेपात्[4] पञ्चोपादानस्कन्धा दुःखम् । इदमुच्यते दुःखम् । तत्र कतमो दुःखसमुदयः ? येयं तृष्णा पौनर्भविकी नन्दीरागसहगता तत्रतत्राभिनन्दिनी अयमुच्यते दुःखसमुदयः । तत्र कतमो दुःखनिरोधः ? योऽस्या एव तृष्णायाः पुनर्भविक्या नन्दीरागसहगतायास्तत्रतत्राभिनन्दिन्या जनिकाया निर्वर्तिकाया अशेषो विरागो निरोधः अयं दुःखनिरोधः । तत्र कतमा दुःखनिरोधगामिनी प्रतिपत् ? एष एवार्याष्टाङ्गमार्गः । तद्यथा । सम्यग्दृष्टिर्यावत्सम्यक्समाधिरिति । इदमुच्यते दुःखनिरोधगामिनी प्रतिपदार्यसत्यमिति । इमानि भिक्षवश्चत्वार्यार्यसत्यानि । इति दुःखमिति मे भिक्षवः पूर्वमश्रुतेषु धर्मेषु योनिशोमनसिकाराद्बहुलीकारात्ज्ञानमुत्पन्नं चक्षुरुत्पन्नं विद्योत्पन्ना[5] भूरिरुत्पन्ना मेधोत्पन्ना प्रज्ञोत्पन्ना[5] आलोकः प्रादुर्भूतः । अयं[6] दुःखसमुदय इति मे भिक्षवः पूर्वमश्रुतेषु धर्मेषु योनिशोमनसिकाराद्बहुलीकाराज्ज्ञानमुत्पन्नं चक्षुरुत्पन्नं विद्योत्पन्ना भूरिरुत्पन्ना मेधोत्पन्ना प्रज्ञोत्पन्ना आलोकः प्रादुर्भूतः । अयं दुःखनिरोध इति मे भिक्षवः सर्वं पूर्ववद्यावदालोकः प्रादुर्भूतः । इयं दुःखनिरोधगामिनी प्रतिपदिति मे भिक्षवः L 418 पूर्ववदेव पेयालं यावदालोकः प्रादुर्भूतः । यत्खल्विदं दुःखं परिज्ञेयमिति मे भिक्षवः पूर्ववदेव पेयालं R 542 यावदालोकः प्रादुर्भूतः । स खल्वयं दुःखसमुदयः प्रहातव्य इति मे भिक्षवः पूर्वमश्रुतेषु धर्मेषु[7] सर्वं यावदालोक इति । स खल्वयं दुःखनिरोधः साक्षात्कर्तव्य इति मे भिक्षवः पूर्ववद्यावदालोक इति । सा खल्वियं दुःखनिरोधगामिनी प्रतिपद्भावयितव्येति पूर्ववद्यावदालोक इति । तत्खल्विदं दुःखं परिज्ञातमिति मे भिक्षवः पूर्वमश्रुतेषु इति पेयालम् । स खल्वयं दुःखसमुदयः प्रहीण इति मे भिक्षवः पूर्वमश्रुतेति पेयालम् । स खल्वयं दुःखनिरोधः साक्षात्कृत इति मे भिक्षवः पूर्वमश्रुतेति पेयालम् । सा खल्वियं दुःखनिरोधगामिनी प्रतिपद्भावितेति मे भिक्षवः पूर्वमश्रुतेषु धर्मेषु योनिशोमनसिकाराद्बहुलीकाराज्ज्ञानमुत्पन्नं चक्षुरुत्पन्नं भूरिर्रुत्पन्ना[8] विद्योत्पन्ना मेधोत्पन्ना प्रज्ञोत्पन्ना आलोकः प्रादूर्भूतः ॥

---

१ R अभिनामयति for अधिवासयति. २ R मध्यमा for अमध्यमा. ३ R om. दुःखो. ४ R संक्षेपतो. ५ R om. प्रज्ञोत्पन्ना. ६ R om. from अयं upto आलोकः प्रादुर्भूतः. ७ R om. धर्मेषु. ८ R om. भूरिरुत्पन्ना प्रज्ञोत्पन्ना.

इति हि भिक्षवो यावदेव मे एषु चतुर्ष्वार्यसत्येषु योनिशो मनसि कुर्वतो एवं त्रिपरिवर्तं द्वादशाकारं ज्ञानदर्शनमुत्पद्यते, न तावदहं भिक्षवोऽनुत्तरां सम्यक्संबोधिमभिसंबुद्धोऽस्मि इति प्रतिज्ञासिषम्। न च मे ज्ञानदर्शनमुत्पद्यते। यतश्च मे भिक्षव एषु चतुर्ष्वार्यसत्येष्वेवं त्रिपरिवर्तं द्वादशाकारं ज्ञानदर्शनमुत्पन्नम्, अकोप्या च मे चेतोविमुक्तिः, प्रज्ञाविमुक्तिश्च साक्षा-
R 543 त्कृता, ततोऽहं भिक्षवोऽनुत्तरां सम्यक्संबोधिमभिसंबुद्धोऽस्मि इति प्रतिज्ञासिषम्। ज्ञानदर्शनं मे उदपादि। क्षीणा मे जातिः, उषितं ब्रह्मचर्यम्, कृतं करणीयम्, नापरस्माद्भवं प्रजानामि॥

तत्रेदमुच्यते।

L 419 वाचाय ब्रह्मरुत किन्नरगर्जिताय
अंशैः[1] सहस्रनयुतेभि समुद्गताय।
बहुकल्पकोटि सद सत्यसुभाविताय
कौण्डिन्यमालपति शाक्यमुनिः स्वयंभूः॥ ३१॥
चक्षुरनित्यमध्रुवं तथ श्रोत घ्राणं
जिह्वा पि काय मन दुःखा अनात्म शून्या।
जडास्वभाव तृणकुड्म इवा निरीहा
नैवात्र आत्म न नरो न च जीवमस्ति॥ ३२॥
हेतुं प्रतीत्य इमि संभुत सर्वधर्मा
अत्यन्तदृष्टिविगता गगनप्रकाशा।
न च कारकोऽस्ति तथ नैव च वेदकोऽस्ति
न च कर्म पश्यति[2] कृतं ह्यशुभं शुभं वा॥ ३३॥
स्कन्धा प्रतीत्य समुदेति हि दुःखमेवं
R 544 संभोन्ति[3] तृष्ण सलिलेन विवर्धमाना।
मार्गेण धर्मसमताय विपश्यमाना
अत्यन्तक्षीण क्षयधर्मतया निरुद्धाः॥ ३४॥
संकल्पकल्पजनितेन अयोनिशेन
भवते अविद्य न पि संभवकोऽस्य कश्चि।
संस्कारहेतु ददते न च संक्रमोऽस्ति
विज्ञानमुद्भवति संक्रमणं प्रतीत्य॥ ३५॥
विज्ञान नाम तथ च रूप समुत्थितास्ति
नामे च रूपि समुदेन्ति षडिन्द्रियाणि।
L 420 षडिन्द्रियैर्निपतितो इति स्पर्श उक्तः
स्पर्शेन तिस्र अनुवर्तति वेदना च॥ ३६॥

---

१ R अङ्गैः for अंशैः. २ R नश्यति for पश्यति. ३ R [illegible] for संभोन्ति.

यत्किंचि वेदयितु सर्व सतृष्ण उक्ता
तृष्णात सर्व उपजायति दुःखस्कन्धः ।
उपादानतो भवति सर्व भवप्रवृत्तिः[1]
भवप्रत्यया च समुदेति हि जातिरस्य ॥ ३७ ॥
जातीनिदान जरव्याधिदुखानि भोन्ति R 545
उपपत्ति नैक विविधा भवपञ्जरेऽस्मिन् ।
एवमेष सर्व इति प्रत्ययतो जगस्य
न च आत्म पुद्गलु न संक्रमकोऽस्ति कश्चि ॥ ३८ ॥
यस्मिन्न कल्पु न विकल्पु योनिमाहुः
यद्योनिशो भवति न तत्र अविद्य काचि ।
यस्मिन्निरोधु भवतीह अविद्यतायाः
सर्वे भवाङ्ग क्षयक्षीण क्षयं निरुद्धा ॥ ३९ ॥
एवमेष प्रत्ययत बुद्ध तथागतेन
तेन स्वयंभु स्वकमात्मनु व्याकरोति ।
न स्कन्ध आयतन धातु वदेमि बुद्धं
नान्यत्र हेत्ववगमाद्भवतीह बुद्धः ॥ ४० ॥
भूमिर्न चात्र परतीर्थिक निःसृतानां[2]
शून्या प्रवादि इह ईदृश धर्मयोगे ।
ये पूर्वबुद्धचरिता सुविशुद्धसत्त्वाः
ते शक्नुवन्ति इमि धर्म विजाननाय ॥ ४१ ॥ R 546

एवं हि द्वादशाकारं धर्मचक्रं प्रवर्तितम् । L 421
कौण्डिन्येन च आज्ञातं निर्वृत्ता रतना त्रयः ॥ ४२ ॥
बुद्धो धर्मश्च संघश्च इत्येतद्रतनत्रयम् ।
परस्परां गतः शब्दो यावद् ब्रह्मपुरालयम् ॥ ४३ ॥
वर्तितं विरजं चक्रं लोकनाथेन तायिना ।
उत्पन्ना रतना त्रीणि लोके परमदुर्लभा ॥ ४४ ॥
कौण्डिन्यं प्रथमं कृत्वा पञ्चकाश्चैव भिक्षवः ।
षष्टीनां देवकोटीनां धर्मचक्षुर्विशोधितम् ॥ ४५ ॥
अन्ये चाशीतिकोट्यस्तु रूपधातुकदेवताः ।
तेषां विशोधितं चक्षु धर्मचक्रप्रवर्तने[3] ॥ ४६ ॥



१ R °प्रकृतिः for °प्रवृत्तिः. २ R निर्मितानां for निःसृतानां. ३ प्रवर्तिते for प्रवर्तने.

चतुरशीतिसहस्राणि मनुष्याणां समागता।
तेषां विशोधितं चक्षु मुक्ता सर्वेभि दुर्गती ॥ ४७ ॥
दशदिशतु अनन्त बुद्धस्वरो गच्छि तस्मिं क्षणे
रुत मधुर मनोज्ञ संश्रूयन्ते चान्तरीक्षे शुभ।
R 547 एष दशबलेन शाक्यर्षिणा धर्मचक्रोत्तमं
ऋषिपतनमुपेत्य वाराणसी वर्तितो नान्यथा ॥ ४८ ॥
दश दिशित यि केचि बुद्धशता सर्वि तूष्णीभुताः
तेष मुनिनये उपस्थायकाः सर्वि पृच्छी जिनां[1]।
किमिति दशबलेभि धर्मकथा छिन्न श्रुत्वा रुतं
साधु भणत शीघ्र किं कारणं तूष्णीभावेन स्थिताः ॥ ४९ ॥
पूर्वभवशतेभि वीर्यबलै बोधि समुदानिया
बहव शतसहस्र पश्चान्मुखा बोधिसत्त्वा कृताः।
L 422 तेन हितकरेण उत्तप्तता[2] प्राप्त बोधिः शिवा
चक्र त्रिपरिवर्त प्रावर्तिता तेन तूष्णीभुताः ॥ ५० ॥
इमु वचन श्रुणित्व तेषां मुनीसत्त्वकोट्यः शता
मैत्रबल जनित्व संप्रस्थिता अग्रबोधिं शिवाम्।
R 548 वयमपि अनुशिक्षि तस्या मुने वीर्यस्थामोद्गतं
क्षिप्र भवेम लोकि लोकोत्तमा धर्मचक्षुर्ददाः ॥ ५१ ॥ इति ॥

अथ खलु मैत्रेयो बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत्—इमे भगवन् दशदिग्लोकधातुसंनिपतिता बोधिसत्त्वा महासत्त्वा भगवतः सकाशाद्धर्मचक्रप्रवर्तनविकुर्वणस्य प्रवेशं श्रोतुकामाः। तत्साधु भगवान् देशयतु तथागतोऽर्हन् सम्यक्संबुद्धः कियद्रूपं तथागतेन धर्मचक्रं प्रवर्तितम्? भगवानाह — गम्भीरं मैत्रेय धर्मचक्रं ग्राहानुपलब्धित्वात्। दुर्दर्शं तच्चक्रं द्वयविगतत्वात्। दुरनुबोधं तच्चक्रं मनसिकारामनसिकारत्वात्। दुर्विज्ञानं[3] तच्चक्रं ज्ञानविज्ञानसमतानुबद्धत्वात्। अनाविलं तच्चक्रं अनावरणविमोक्षप्रतिलब्धत्वात्। सूक्ष्मं तच्चक्रं अनुपमोपन्यासविगतत्वात्[4]। सारं तच्चक्रं वज्रोपमज्ञानप्रतिलब्धत्वात्। अभेद्यं तच्चक्रं पूर्वान्तसंभवत्वात्। अप्रपञ्चं तच्चक्रं सर्वप्रपञ्चोपारम्भविगतत्वात्। अकोप्यं तच्चक्रं अत्यन्तनिष्ठत्वात्। सर्वत्रानुगतं तच्चक्रं आकाशसदृशत्वात्। तत्खलु पुनर्मैत्रेय धर्मचक्रं सर्वधर्मप्रकृतिस्वभावं संदर्शनविभवचक्रं अनुत्पादानिरोधासंभवचक्रं अनालयचक्रं अकल्पाविकल्प-
R 549 धर्मनयविस्तीरणचक्रं शून्यताचक्रं अनिमित्तचक्रं अप्रणिहितचक्रं अनभिसंस्कारचक्रं विवेक[5]-
L 423 चक्रं विरागचक्रं विरोधचक्रं तथागतानुबोधचक्रं धर्मधात्वसंभेदचक्रम्। भूतकोट्यविकोपनचक्रं असङ्गानावरणचक्रं प्रतीत्यावतारोभयान्तदृष्टिसमतिक्रमणचक्रं अनन्तमध्यधर्मधात्वविकोपनचक्रं अनाभोगबुद्धकार्यप्रतिप्रश्रब्ध[6]चक्रं अप्रवृत्यभिनिर्वृत्तिचक्रं अत्यन्तानुपलब्धिचक्रं अनायूहा-

---

१ R जनां for जिनां. २ R उत्तप्ता for उत्तप्तता. ३ R दुर्दमनं for दुर्विज्ञानं. ४ R om. अनुपम°. ५ R विबोध° for विवेक°. ६ R °[illegible]° for प्रश्रब्ध.

निर्यूहचक्रं अनभिलाप्यचक्रं प्रकृतियथावच्चक्रं एकविषयसर्वधर्मसमतावतारचक्रं अक्षणसत्त्वविनयाधिष्ठानप्रत्युदावर्त्यचक्रं अद्वय[1]समारोपपरमार्थनयप्रवेशचक्रं धर्मधातुसमवसरणचक्रम् । अप्रमेयं तच्चक्रं सर्वप्रमाणातिक्रान्तम् । असंख्येयं तच्चक्रं सर्वसंख्यापगतम् । अचिन्त्यं तच्चक्रं चित्तपथसमतिक्रान्तम् । अतुल्यं तच्चक्रं तुलापगतम् । अनभिलाप्यं तच्चक्रं सर्वरुतघोषवाक्पथातीतम् । अप्रमाणमनुपममुपमापगतमाकाशसमसदृशमनुच्छेदमशाश्वतं प्रतीत्यावतारा विरुद्धशान्तमत्यन्तोपशमं तत्त्वं तथावितथानन्यथानन्यथीभावं सर्वसत्त्वरुतचरणम् । निग्रहो माराणां पराजयस्तीर्थिकानां समतिक्रामणं संसारविषयादवतारणं बुद्धविषये परिज्ञातमार्यपुद्गलैरनुबद्धं प्रत्येकबुद्धैः परिगृहीतं बोधिसत्त्वैः स्तुतं सर्वबुद्धैर[2]संभिन्नं सर्वतथागतैः । एवंरूपं मैत्रेय तथागतेन धर्मचक्रं प्रवर्तितं यस्य प्रवर्तनात्तथागत इत्युच्यते । सम्यक्संबुद्ध इत्युच्यते । स्वयंभूरित्युच्यते । धर्मस्वामीत्युच्यते । नायक इत्युच्यते । विनायक इत्युच्यते । परिणायक इत्युच्यते । सार्थवाह R 550 इत्युच्यते । सर्वधर्मवशवर्तीत्युच्यते । धर्मेश्वर इत्युच्यते । धर्मचक्रप्रवर्तीत्युच्यते । धर्मदानपतिरित्युच्यते । यज्ञस्वामीत्युच्यते । सुयष्टयज्ञ इत्युच्यते । सिद्धि[3]व्रत इत्युच्यते । पूर्णाभिप्राय इत्युच्यते । देशिक इत्युच्यते । आश्वासक इत्युच्यते । क्षेमंकर इत्युच्यते । शूर इत्युच्यते । L 424 रणंजह इत्युच्यते । विजितसंग्राम इत्युच्यते । उच्छ्रितछत्रध्वजपताक इत्युच्यते । आलोककर इत्युच्यते । प्रभंकर इत्युच्यते । तमोनुद इत्युच्यते । उल्काधारीत्युच्यते । महावैद्यराज इत्युच्यते । भूतचिकित्सक इत्युच्यते । महाशल्यहर्ता इत्युच्यते । वितिमिरज्ञानदर्शन इत्युच्यते । समन्तदर्शीत्युच्यते । समन्तविलोकित इत्युच्यते । समन्तचक्षुरित्युच्यते । समन्तप्रभ इत्युच्यते । समन्तालोक इत्युच्यते । समन्तमुख इत्युच्यते । समन्तप्रभाकर इत्युच्यते । समन्तचन्द्र इत्युच्यते । समन्तप्रासादिक इत्युच्यते । अप्रतिष्ठानायूहानिर्यूह इत्युच्यते । धरणीसम इत्युच्यते अनुन्नतावनतत्वात् । शैलेन्द्रसम इत्युच्यते अप्रकम्प्यत्वात् । सर्वलोकश्रीरित्युच्यते सर्वलोके[4]गुणसमन्वागतत्वात् । अनवलोकितमूर्ध इत्युच्यते सर्वलोकाभ्युद्गतत्वात् । समुद्रकल्प इत्युच्यते गम्भीरदुरवगाहत्वात् । धर्मरत्नाकर इत्युच्यते सर्वबोधिपाक्षिकधर्मरत्नप्रतिपूर्णत्वात् । वायुसम इत्युच्यते अनिकेतत्वात् । असङ्गबुद्धिरित्युच्यते असक्ताबद्धामुक्तचित्तत्वात् । अवैवर्तिकधर्म इत्युच्यते सर्वधर्मनिर्वेधिके[5]ज्ञानत्वात् । तेजःसम इत्युच्यते दुरासदसर्वमननाप्रहीणसर्वक्लेशदाहप्रत्युपस्थानत्वात् । अप्सम इत्युच्यते अनाविलसंकल्पनिर्मलकायचित्तवाहितपापत्वात् । R 551 आकाशसम इत्युच्यते असङ्गज्ञानविषयानन्तमध्येधर्मधातुगोचरज्ञानाभिज्ञप्राप्तत्वात् । अनावरणज्ञानविमोक्षविहारीत्युच्यते नानावरणीयधर्मसुप्रहीणत्वात् । सर्वधर्मधातुप्रसृतकाय इत्युच्यते गगनसमचक्षुःपथसमतिक्रान्तत्वात् । उत्तमसत्त्व इत्युच्यते सर्वलोकविषयासंक्लिष्टत्वात् । असङ्गसत्त्व इत्युच्यते । अप्रमाणबुद्धिरित्युच्यते । लोकोत्तरधर्मदेशिक इत्युच्यते । लोकाचार्य इत्युच्यते । लोके[6]वैद्य इत्युच्यते । लोकाभ्युद्गत इत्युच्यते । लोकधर्मानुपलिप्त इत्युच्यते । लोकनाथ इत्युच्यते । L 425 लोकज्येष्ठ इत्युच्यते । लोकश्रेष्ठ इत्युच्यते । लोकेश्वर इत्युच्यते । लोकमहित इत्युच्यते । लोकपरायण

---

१ R अद्वयासमालोप° for अद्वयसमारोप°. २ R अभिसंभिन्नं for असंभिन्नं. ३ R सिद्धव्रत. ४ R om. °गुण°. ५ R °निर्विरोधि° for °निर्वेधिक°. ६ R लोकचैत्य for °वैद्य.

इत्युच्यते । लोकपारंगत इत्युच्यते । लोकप्रदीप इत्युच्यते । लोकोत्तर इत्युच्यते । लोकगुरु-
रित्युच्यते । लोकार्थकर इत्युच्यते । लोकानुवर्तक इत्युच्यते । लोकविदित्युच्यते । लोकाधिपतेयप्राप्त
इत्युच्यते । महादक्षिणीय इत्युच्यते । पूजार्ह इत्युच्यते । महापुण्यक्षेत्र इत्युच्यते । महासत्त्व इत्युच्यते[1] ।
अग्रसत्त्व इत्युच्यते । वरसत्व इत्युच्यते । प्रवरसत्त्व इत्युच्यते । उत्तमसत्त्व इत्युच्यते । अनुत्तरसत्त्व
इच्युच्यते । असमसत्त्व इत्युच्यते । असदृशसत्त्व इत्युच्यते । सततसमाहित इत्युच्यते । सर्वधर्मसमता-
विहारीत्युच्यते । मार्गप्राप्त इत्युच्यते । मार्गदर्शक इत्युच्यते । मार्गदेशिक इत्युच्यते । सुप्रतिष्ठित-
R 552 मार्ग इत्युच्यते । मारविषयसमतिक्रान्त इत्युच्यते । मारमण्डलविध्वंसकर इत्युच्यते । अजरामरशीती-
भाव इच्युच्यते । विगततमोन्धकार इत्युच्यते । विगतकण्टक इत्युच्यते । विगतकाङ्क्ष इत्युच्यते ।
विगतक्लेश इत्युच्यते । विनीतसंशय इत्युच्यते । विमतिसमुद्घटित इत्युच्यते । विरक्त इत्युच्यते ।
विमुक्त इत्युच्यते । विशुद्ध इत्युच्यते । विगतराग इत्युच्यते । विगतदोष इत्युच्यते । विगतमोह
इत्युच्यते । क्षीणाश्रव इत्युच्यते । निःक्लेश इत्युच्यते । वशीभूत इत्युच्यते । सुविमुक्तचित्त
इत्युच्यते । सुविमुक्तप्रज्ञ इत्युच्यते । [2]आजानेय इत्युच्यते । महानाग इत्युच्यते । कृतकृत्य
इत्युच्यते । कृतकरणीय इत्युच्यते । अपहृतभार इत्युच्यते । अनुप्राप्तस्वकार्थ इत्युच्यते ।
परिक्षीणभवसंयोजन इत्युच्यते । समताज्ञानविमुक्त इत्युच्यते । सर्वचेतोवशिपरमपारमिताप्राप्त
L 426 इत्युच्यते । दानपारग इत्युच्यते । शीलाभ्युद्गत इत्युच्यते । क्षान्तिपारग इत्युच्यते । वीर्याभ्युद्गत
इत्युच्यते । ध्यानाभिज्ञप्राप्त इत्युच्यते । प्रज्ञापारंगत इत्युच्यते । सिद्धप्रणिधान इत्युच्यते । महामैत्र-
विहारीत्युच्यते । महाकरुणाविहारीत्युच्यते । महामुदिताविहारीत्युच्यते । महोपेक्षाविहारीत्युच्यते । सत्त्व-
संग्रहप्रयुक्त इत्युच्यते । अनावरणप्रतिसंवित्प्राप्त इत्युच्यते । प्रतिशरणभूत इत्युच्यते । महापुण्य
इत्युच्यते । महाज्ञानीत्युच्यते । स्मृतिमतिगतिबुद्धिसंपन्न इत्युच्यते । स्मृत्युपस्थानसम्यक्प्रहाण-
ऋद्धिपादेन्द्रियबलबोध्यङ्गसमर्थविदर्शनालोकप्राप्त इत्युच्यते । उत्तीर्णसंसारार्णव इत्युच्यते ।
R 553 पारग इत्युच्यते । स्थलगत इत्युच्यते । क्षेमप्राप्त इत्युच्यते । अभयप्राप्त इत्युच्यते । [3]मर्दितक्लेश-
कण्टक इत्युच्यते । पुरुष इत्युच्यते । महापुरुष इत्युच्यते । पुरुषसिंह इत्युच्यते ।
विगतभयलोमहर्षण इत्युच्यते । नाग इत्युच्यते । निर्मल इत्युच्यते । त्रिमलमलै[4]प्रहीण इत्युच्यते ।
वेदक इत्युच्यते । त्रैविद्यानुप्राप्त इत्युच्यते । चतुरोघोत्तीर्ण इत्युच्यते । पारग इत्युच्यते । क्षत्रिय
इत्युच्यते । ब्राह्मण इत्युच्यते । एकरत्नछत्रधारीत्युच्यते । वाहितपा[5]रधर्म इत्युच्यते । भिक्षुरित्युच्यते ।
भिन्नाविद्याण्डकोश इत्युच्यते । श्रमण इत्युच्यते । [6]अर्थसङ्गपथसमतिक्रान्त इत्युच्यते । श्रोत्रिय
इत्युच्यते । निःसृतक्लेश इत्युच्यते । बलवानित्युच्यते । दशबलधारीत्युच्यते । भगवानित्यु-
च्यते । भावितकाय इत्युच्यते । राजातिराज इत्युच्यते । धर्मराज इत्युच्यते । वरप्रवरधर्मचक्र-
प्रवर्त्यनुशासक इत्युच्यते । अकोप्यधर्मदेशक इत्युच्यते । सर्वज्ञज्ञानाभिषिक्त इत्युच्यते । असङ्ग-
महाज्ञानविमलविरक्त[7]पट्टाबद्ध इत्युच्यते । सप्तबोध्यङ्गरत्नसमन्वागत इत्युच्यते । सर्वधर्मविशेषप्राप्त

---

१ R om. महासत्त्व इत्युच्यते. २ R अयानेयचित्त for आजानेय. ३ R मार° for मर्दित°. ४ R om. °मल°. ५ R पापधर्म for °पारधर्म. ६ R सर्वसङ्ग° for अर्थसङ्ग°. ७ R विमुक्ति° for °विरक्त°.

इत्युच्यते । सर्वार्यश्रावकामात्यावलोकितमुखमण्डल इत्युच्यते। बोधिसत्त्वमहासत्त्वपुत्रपरिवार L 427
इत्युच्यते । सुविनीतविनय इत्युच्यते। सुव्याकृतबोधिसत्त्व इत्युच्यते। वैश्रवणसदृश इत्युच्यते।
सप्तार्यधनविश्रीणित[1]कोश इत्युच्यते। त्यक्त[2]त्याग इत्युच्यते । सर्वसुखसंपत्तिसमन्वागत इत्युच्यते ।
सर्वाभिप्रायदातेत्युच्यते । सर्वलोकहितसुखानुपालक इत्युच्यते। इन्द्रसम इत्युच्यते । ज्ञानबल- R 554
वज्रधारी इत्युच्यते। समन्तनेत्र इत्युच्यते। सर्वधर्मानावरणज्ञानदर्शीत्युच्यते। समन्तज्ञानविकुर्वण
इत्युच्यते। विपुलधर्मनाटकदर्शनप्रविष्ट इत्युच्यते। चन्द्रसम इत्युच्यते । सर्वजगदतृप्तदर्शन
इत्युच्यते। समन्तविपुलविशुद्धप्रभ इत्युच्यते । प्रीतिप्रामोद्यकरप्रभ[3] इत्युच्यते । सर्वसत्त्वाभिमुख-
दर्शनाभास इत्युच्यते। सर्वजगच्चित्ताशयभाजनप्रतिभासप्राप्त इत्युच्यते। महाव्यूह इत्युच्यते।
शैक्षाशैक्षज्योतिर्गणपरिवार इत्युच्यते। आदित्यमण्डलसम इत्युच्यते। विधूतमोहान्धकार इत्युच्यते।
महाकेतुराज इत्युच्यते। अप्रमाणानन्तरश्मिरित्युच्यते। महावभाससंदर्शक इत्युच्यते । सर्वप्रश्न-
व्याकरणनिर्देशासंमूढ इत्युच्यते। महाविद्यान्धकारविध्वंसनकर इत्युच्यते। महाज्ञानालोकविलोकित-
बुद्धिर्निर्विकल्प इत्युच्यते । महामैत्रीकृपाकरुणासर्वजगत्समरश्मिप्रमुक्तप्रमाणविषय इत्युच्यते ।
प्रज्ञापारमितागम्भीरदुरासददुर्निरीक्षमण्डल इत्युच्यते। ब्रह्मसम इत्युच्यते। प्रशान्तेर्यापथ इत्युच्यते।
सर्वेर्यापथचर्याविशेषसमन्वागत इत्युच्यते। परमरूपधारी इत्युच्यते। असेचनकदर्शन इत्युच्यते ।
शान्तेन्द्रिय इत्युच्यते। शान्तमानस इत्युच्यते। शमथसंभारपरिपूर्ण इत्युच्यते। उत्तमशमथप्राप्त इत्युच्यते।
परमदमशमथप्राप्त इत्युच्यते । शमथविदर्शनापरिपूर्णसंभार इत्युच्यते। गुप्तो जितेन्द्रियो नाग इव L 428
सुदान्तो ह्रद इवाच्छोऽनाविलो विप्रसन्न इत्युच्यते। सर्वक्लेशवासनावरणसुप्रहीण इत्युच्यते ।
द्वात्रिंशन्महापुरुषलक्षणसमन्वागत इत्युच्यते । परमपुरुष इत्युच्यते । अशीत्यनुव्यञ्जनपरिवार- R 555
विचित्ररचितगात्र इत्युच्यते । पुरुषर्षभ इत्युच्यते। दशबलसमन्वागत इत्युच्यते। चतुर्वैशारद्य-
प्राप्तानुत्तरपुरुषदम्यसारथिरित्युच्यते। शास्तेत्युच्यते । अष्टादशावेणिकबुद्धधर्मपरिपूर्ण इत्युच्यते।
अनिन्दितकायवाङ्मनस्कर्मान्त इत्युच्यते । सर्वाकारवरोपेतसुपरिशोधितज्ञानदर्शनमण्डलत्वाच्छून्य-
ताविहारीत्युच्यते । प्रतीत्यसमुत्पादसमताभिसंबोधा[4]दानिमित्तविहारीत्युच्यते । परमार्थसत्यनय-
प्रतिवेधादप्रणिहितविहारीत्युच्यते। सर्वप्रस्थानालिप्तत्वादनभिसंस्कारगोचर इत्युच्यते। सर्वसंस्कार-
प्रतिप्रश्रब्धत्वा[5]द्भूतवादी[6]त्युच्यते । भूतकोट्यविकोपितज्ञानविषयत्वादवितथानन्यथावादीत्युच्यते ।
तथताधर्मधात्वाकाशलक्षणालक्षणविषयत्वा[7]दरण्यधर्मसुप्रतिलब्ध इत्युच्यते। मायामरीचिस्वप्नोदक-
चन्द्रप्रतिश्रुत्कप्रतिभाससमतासर्वधर्मविहारित्वादमोघदर्शनश्रवण इत्युच्यते । परिनिर्वाणहेतुजनक-
त्वादमोघपदविक्रमीत्युच्यते । सत्त्व[8]विनयपराक्रमविक्रान्तत्वादुत्क्षिप्तपरिखेद इत्युच्यते । अविद्या-
भवतृष्णासमुच्छिन्नत्वा[त्]त्स्थापितसंक्रम इत्युच्यते । नैर्याणिकप्रतिपत्सुदेशकत्वान्निर्जितमारक्लेश-
प्रत्यर्थिक इत्युच्यते । सर्वमारविषयचर्या[9]नुलिप्तत्वादुत्तीर्णकामपङ्क इत्युच्यते। कामधातुसमति-

---

१ R °विश्रामित° for °विश्राणित°. २ R मुक्तत्याग for त्यक्त°. ३ R om. °प्रभ.
४ R °संरोधा° for °संबोधा°. ५ R °प्रतिश्रद्ध° for °प्रतिप्रश्रब्ध°. ६ R अभूतवादी for भूतबादी.
७ R °लक्षणज्ञानविषय° for °लक्षणालक्षणविषय°. ८ R सत्य° for सत्त्व°. ९ °मारचर्याविषयानु°
for °मारविषमचर्यानु°.

क्रान्तत्वात्पातितमानध्वज इत्युच्यते । रूपधातुसमतिक्रान्तत्वादुच्छ्रितप्रज्ञाध्वज इत्युच्यते ।
आरूप्यधातुसमतिक्रान्तत्वात्सर्वलोकविषयसमतिक्रान्त इत्युच्यते । धर्मकायज्ञानशरीरत्वान्महाद्रुम
L 429 इत्युच्यते । अनन्तगुणरत्नज्ञानसंकुसुमितविमुक्तिफलसुसंपन्नत्वादुदुम्बरपुष्पसदृश इत्युच्यते । दुर्लभ-
R 556 प्रादुर्भावदर्शनत्वाच्चिन्तामणिरत्नमणिराजसम इत्युच्यते । यथानयनिर्वाणाभिप्रायसुप्रतिपूरणत्वा-[1]
त्सुप्रतिष्ठितपाद इत्युच्यते । दीर्घरात्रं त्यागशीलतपोव्रतब्रह्मचर्यदृढसमादानाचलाप्रकम्प्यत्वाद्विचित्र-
स्वस्तिकनन्द्यावर्तसहस्रारचक्राङ्कितपादतल इत्युच्यते । दीर्घरात्रं मातापितृश्रमणब्राह्मणगुरु-
दक्षिणीयधार्मिकरक्षापरिपालनतया शरणागतानां चापरित्यागत्वादायतपार्ष्णिरित्युच्यते ।
दीर्घरात्रं प्राणातिपातोपरतत्वाद्दीर्घाङ्गुलीत्युच्यते । दीर्घरात्रं प्राणातिपातवैरमण्यंपरसत्त्वसमादायन-
त्वाद्बहुजनत्रातेत्युच्यते । दीर्घरात्रं प्राणातिपातवैरमण्यंगुणवर्णसंप्रकाशनत्वान्मृदुतरुणहस्तपाद[2]
इत्युच्यते । दीर्घरात्रं मातापितृश्रमणब्राह्मणगुरुदक्षिणीयोपस्थानपरिचर्यास्नानानुलेपनसर्पितैलाभ्यङ्गस्व-
हस्तशरीरपरिकर्मपरिखेदत्वाज्जालाङ्गुलीहस्तपाद इत्युच्यते । दीर्घरात्रं दानप्रियवद्यतार्थक्रिया-
समानार्थतासंग्रहवस्तुजालेन सत्त्वसंग्रहकौशल्यंसुशिक्षितत्वादुच्छङ्खपाद[3] इत्युच्यते । दीर्घरात्रमुत्तरोत्तरि
विशिष्टतरकुशलमूलाध्यालम्बनत्वादूर्ध्वाङ्गदक्षिणावर्तरोमकूप इत्युचते । दीर्घरात्रं मातापितृश्रमण-
ब्राह्मणगुरुदक्षिणीयतथागतचैत्यप्रदक्षिणीकरणधर्मश्रवणचित्रीकाररोमहर्षणपरसत्त्वसंहर्षणधर्मदेशना-
प्रयोगत्वादेणेयजङ्घ इत्युच्यते । दीर्घरात्रं सत्कृत्य धर्मश्रवणग्रहणधारणवाचन-
R 557 विज्ञापनार्थपदनिश्चयनिस्तीरणकौशल्येन जराव्याधिमरणाभिमुखानां च सत्त्वानां शरण-
गमनानुप्रदानसत्कृत्यधर्मदेशनापरिभवबुद्धित्वात्कोशोपगतबस्तिगुह्य इत्युच्यते । दीर्घरात्रं
श्रमणब्राह्मणानां तदन्येषां च ब्रह्मचारिणां ब्रह्मचर्यानुग्रहसर्वपरिस्कारानुप्रदाननग्नबलानुप्रदान-
L 430 परदारागमनब्रह्मचर्यगुणवर्णसंप्रकाशनहूयपत्राप्यानुपालनदृढसमादानत्वात्प्रलम्बबाहुरित्युच्यते । दीर्घ-
रात्रं हस्तसंयतपादसंयतसत्त्वाविहेठनप्रयोगमैत्रकायकर्मवाक्कर्ममनस्कर्मसमन्वागतत्वान्न्यग्रोधपरि-
मण्डल इत्युच्यते । दीर्घरात्रं भोजनमात्रां ज्ञाता अल्पाहारतोदारसंयमग्लानभैषज्यानुप्रदानहीनजना-
परिभवानाथानवमर्दन[4]तथागतचैत्यविशीर्णप्रतिसंस्कारणस्तूपप्रतिष्ठापनत्वाद्भयार्दितेभ्यश्च सत्त्वेभ्योऽ-
भयप्रदानत्वान्मृदुतरुणसूक्ष्मच्छविरित्युच्यते । दीर्घरात्रं मातापितृश्रमणब्राह्मणगुरुदक्षिणीयानां
स्नानानुलेपनसर्पिस्तैलाभ्यङ्गशीते उष्णोदक[5]मुष्णे शीतोदकच्छाया[6]तपऋतुसुखपरिभोगानुप्रदानमृदु-
तरुणतूलसंस्पर्शसुकुमारवस्त्रास्तीर्ण[7]शयनासनानुप्रदानतथागतचैत्यगन्धतैलसेकसूक्ष्मपट्टध्वजपताका-
गुणप्रदानत्वात्सुवर्णच्छविरित्युच्यते । दीर्घरात्रं सर्वसत्त्वाप्रतिघातमैत्रीभावनायोगक्षान्तिसौरत्यपरसत्त्व-
समादापनावैरव्यापादगुणवर्णसंप्रकाशनतया तथागतचैत्यतथागतप्रतिमानां च सुवर्णखचनसुवर्ण-
पुष्पसुवर्णचूर्णाभिकिरणसुवर्णवर्णपट्टपताकाध्वजालंकारसुवर्णभाजनसुवर्णवस्त्रानुप्रदानत्वादेकैकनिचि-
R 558 तरोमकूप इत्युच्यते । दीर्घरात्रं पण्डितोपसंक्रमणकिंकुशलाकुशलपरिपृच्छनसावद्यानवद्यसेव्यहीन-
मध्यप्रणीतधर्मपरिपृच्छनार्थमीमांसनपरितुलनासंमोहतथागतचैत्यकीटद्धतालयाञ्जलियानिर्माल्यनाना-

---

१ R °पूरक° for °पूरण°. २ R °समादान° for °संप्रकाशन°. ३ R उत्तुङ्ग° for उच्छङ्ख°. ४ R °नाथाभवसंदर्शन° for °नाथानवमर्दन°. ५ R शीतलोष्णोदकान्° for शीते उष्णोदक उष्णे शीतोदक°. ६ R om. छायातपऋतुसुखपरिभोगा°. ७ R वस्त्रस्वाकीर्ण° for °वस्त्रास्तीर्ण°.

तृणशर्करासमुद्धरणसंप्रयोगत्वात्सप्तोत्सद इत्युच्यते । दीर्घरात्रं मातापितृज्येष्ठश्रेष्ठपूज्यश्रमणब्राह्मण-
कृपणवनीपकादिभ्य उपागतेभ्यः सत्कृत्य यथाभिप्रायमन्नपानासनवस्त्रापश्रयप्रदीपकल्पितजीविक-
परिस्कारसंप्रदानकूपपुष्करिणीशीतजलपरिपूर्णमहाजनोपभोगानुप्रदानत्वात्सिंहपूर्वार्धकाय इत्युच्यते ।
दीर्घरात्रं मातापितृश्रमणब्राह्मणगुरुदक्षिणीयावनमनप्रणमनाभिवादनाभयप्रदानदुर्बलापरिभवशरणा- L 431
गतापरित्यागदृढसर्गदानानुत्सर्ग[2]त्वाच्चितान्तरांस इत्युच्यते । दीर्घरात्रं स्वदोषपरितुलनप्रस्खलितपर-
छिद्रादोषदर्शनविवादमूलपरभेदकरमन्त्रपरिवर्जनसुप्रतिनिस्सर्गमन्त्रस्वारक्षितवाक्कर्मान्तत्वात्सुसंवृत्त –
स्कन्ध इत्युच्यते । दीर्घरात्रं मातापितृश्रमणब्राह्मणगुरुदक्षिणीयानां प्रत्युत्थानप्रत्युद्गमनाभिवादन-
कामानां च सर्वशास्त्रवैशारद्येन विवादकामसत्त्वनिग्रहस्वधर्मविनयानुलोमनसम्य[3]क्प्रवृत्तराजामात्य-
सम्यक्प्रवृत्तकुशलधर्मपथप्रतिष्ठापनप्रभावनतथागतशासनपरिग्रहसंधारणसर्वकुशलचर्यासमादापन –
पूर्वंगमत्वात्सिंहहनुरित्युच्यते । दीर्घरात्रं सर्ववस्तुपरित्यागयथाभिप्राययाचनकप्रिया[4]भिधानमुपसंक्रान्तानां
चाविमाननाजिह्मीकरणाविक्षेपं सर्वेषां यथाभिप्रायपरिपूरणदानपरित्यागदृढसमादानानुत्सर्गत्वाच्चत्वा-
रिंशत्समदन्त इत्युच्यते । दीर्घरात्रं पिशुनवचनपरिवर्जनभेदमन्त्राग्रहणसंधि[5]सामग्रीरोचनसमग्राणां R 559
चेदाचित्तेन पिशुनवचनविगर्हणसंधिसामग्रीगुणवर्णप्रकाशनप्रयोगत्वात्सुशुक्लदन्त इत्युच्यते । दीर्घरात्रं
कृष्णपक्षपरिवर्जनशुक्लपक्षकुशलोपचयकृष्णकर्मकृष्णविपाकपरिवर्जनशुक्लकर्मशुक्लविपाकसंवर्णनक्षीर-
भोजनशुक्लवस्त्रप्रदानतथागतचैत्येषु सुधाकृतकक्षीरमिश्रसंप्रदानसुमनावार्षिकीधानुस्कारिमालगुण-
पुष्पदामशुक्लवर्णकुसुमानुप्रदानत्वादविरलदन्त इत्युच्यते । दीर्घरात्रं हास्योच्चटयनविवर्जनानन्दकरण-
वागनुरक्षणानन्दकरणवागुदीरणपरस्खलितापरछिद्रापरिमार्गणसर्वसत्त्वसमचित्तसमादापनसमप्रयोग –
समधर्मदेशनदृढसमा[6]र्दानापरित्यागत्वाद्रसँरसाग्रवानित्युच्यते । दीर्घरात्रं सर्वसत्त्वाविहेठनाविहिंसन-
विविधव्याधिस्पृष्टोपस्थानग्लानभैषज्यानुप्रदानत्वात्सर्वरसार्थिकेभ्यश्च सर्वरसप्रदानापरिखेदत्वाद्ब्रह्मस्वर L 432
इत्युच्यते । दीर्घरात्रमनृतपरुषकर्कशशाठ्यपरकटुकपराभिषङ्गिन्यप्रियपरमर्मघट्टनवाक्परिवर्जनमैत्री-
करुणाप्रयोगमुदिताप्रामोद्यकरणीस्निग्धममधुरश्लक्ष्णहृदयंगमसर्वेन्द्रियप्रह्लादकरणीसम्यग्वाक्यसम्यक्प्र-
योगत्वादभिनीलनेत्र इत्युच्यते । दीर्घरात्रं मातापितृवत्सर्वसत्त्वाप्रतिहतचक्षुप्रयो-
गैकपुत्रवद्याचनकमैत्रीकारुण्यपूर्वंगमसंप्रेक्षणाजिह्मीकरणप्रसन्नेन्द्रियतथागतचैत्यानिमिषनयनसंप्रेक्षण -
परसत्त्वतथागतदर्शनसमादापनदृढसमादानत्वाद्गोनेत्र इत्युच्यते । दीर्घरात्रं हीनचेतो-
विवर्जनोदारविपुलाधिमुक्तिपरिपूरणानुत्तरधर्मछन्दसत्त्वसमादापनभृकुटीमुखविवर्जनस्मितमुखसर्व–
कल्याणमित्रोपसंक्रमणाभिमुखपूर्वंगमसर्वकुशलोपचयावैवर्तिकत्वाप्रभूतजिह्व इत्युच्यते । दीर्घ- R 560
रात्रं सर्ववाग्दोषविवर्जनसर्वश्रावकप्रत्येकबुद्धधर्मभाणकाप्रमाणगुणवर्णसंप्रकाशनतथागतसूत्रान्त-
लिखनवाचनपठनाविज्ञापनं तेषां च धर्माणामर्थपदप्रभेदपरसत्त्वसंप्रापणकौशल्यत्वादुष्णीषानवलोकि-
तमूर्ध इत्युच्यते । दीर्घरात्रं मातापितृश्रमणब्राह्मणगुरुदक्षिणीयानां मूर्ध्ना चरणतलप्रणिपतनप्रव्रजित-
वन्दनाभिवादनकेशावरोपणसुगन्धतैलमूर्ध्निपरिषिञ्चनं सर्वयाचनकेभ्यश्चूर्णमाल्यमालागुणमूर्धा-

---

१ R सप्तच्छद for सप्तोत्सद. २ R °नुत्सङ्ग° for नुत्सर्ग°. ३ R °सम्यक्संवृत्त° for °क्प्रवृत्त°. ४ R °क्रियाभिधान° for °प्रिया°. ५ R om. °संधिसामग्रीरोचनसमग्राणां चेदाचित्तेन पिशुनवचनविगर्हण°. ६ R °दानपरित्याग° for °दानापरि°. ७ R रसरसाग्रवान्. ८ R अनृतापरुष° for अनृतपरुष° ९ R °सर्वसत्त्वेन्द्रिय° for °सर्वेन्द्रिय°. १० R om. रसरसाग्रवान् for °नयन°.

भरणानुप्रदानत्वाद् भ्रूमध्ये सुजातप्रदक्षिणावर्तोत्तप्तविशुद्धवर्णाभासोर्ण इत्युच्यते। दीर्घरात्रं निरर्गल-
सर्वयज्ञयजनसमादपनसर्वकल्याणमित्रानुशासन्यनुद्धरधर्मभाणकानां दौत्यप्रेक्षणे दिग्गमनागमना-
परिखेदनसर्वबुद्धबोधिसत्त्वप्रत्येकबुद्धार्यश्रावकधर्मभाणकमातापितृगुरुदक्षिणीयतमोन्धकारविधमनतैल-
घृततृणोल्काप्रदीपनानागन्धतैलप्रदीपसर्वाकारवरोपेतप्रासादिकतथागतप्रतिमाकारणक्षीरप्रतिभासरत्नो-
L 433 त्तीर्णकोशप्रतिमण्डन[1]परसत्त्वबोधचित्तामुखीकरणकुशलसंभारविशेषत्वान्[2]महास्थामप्राप्त इत्युच्यते। महा-
नारायणबलोपेतत्वान्महानारायण इत्युच्यते। कोटीशतमारधर्षणबलोपेतत्वात्सर्वपरप्रमर्दक इत्युच्यते।
दशतथागतबलोपेतत्वाद्दशतथागतबलोपेत इत्युच्यते। स्थानास्थानज्ञानकुशलहीनप्रादेशिकयान[3]-
R 561 विवर्जनमहायानगुणसमुदानयनबलोपेतातृप्तबलप्रयोगत्वात्स्थानज्ञानबलोपेत इत्युच्यते। अतीताना-
गतप्रत्युत्पन्नकर्मसमादानहेतुशो[4]विपाकशोज्ञानबलोपेतत्वादतीतानागतप्रत्युत्पन्नसर्वकर्मसमादानहेतुवि-
पाकज्ञानबलोपेत इत्युच्यते। सर्वसत्त्वेन्द्रियवीर्यविमात्रताज्ञानबलोपेतत्वात्सर्वसत्त्वेन्द्रियवीर्यविमात्रता-
ज्ञानबलोपेत इत्युच्यते। अनेकधातुनानाधातुलोकप्रवेशज्ञानबलोपेतत्वादनेक[5]धातुनानाधातु-
लोकप्रवेशज्ञानबलोपेत इत्युच्यते। अनेकाधिमुक्तिनानाधिमुक्तिनिरवशेषाधिमुक्तिविमुक्तिज्ञानबलो-
पेतत्वादनेकाधिमुक्तिनानाधिमुक्तिसर्वनिरवशेषाधिमुक्तिज्ञानबलोपेत इत्युच्यते। सर्वत्रगामिनीप्रतिप-
ज्ज्ञानबलोपेतत्वात्सर्वत्रगामिनीप्रतिपज्ज्ञानबलोपेत इत्युच्यते। सर्वध्यानविमोक्षसमाधिसमापत्तिसंक्लेश-
व्यवदानव्यवस्थापनज्ञानबलोपेतत्वात्सर्वध्यानविमोक्षसमाधिसमापत्तिसंक्लेशव्यवदानव्यवस्थापनज्ञान-
बलोपेत इत्युच्यते। अनेकविधपूर्वनिवासानुस्मृत्यासङ्गज्ञानबलोपेतत्वादनेकविधपूर्वनिवासानुस्मृत्या-
सङ्गज्ञानबलोपेत इत्युच्यते। निरवशेषसर्वरूपानावरणदर्शनदिव्यचक्षुर्ज्ञानबलोपेतत्वान्निरवशेषसर्व-
रूपानावरणदर्शनदिव्यचक्षुर्ज्ञानबलोपेत इत्युच्यते। सर्ववासनानुसंधिगतनिरवशेषसर्वाश्रवक्षयज्ञान-
बलोपेतत्वात्सर्ववासनानुसंधिगतनिरवशेषसर्वाश्रवक्षयज्ञानबलोपेत इत्युच्यते। निरवशेषसर्वधर्माभिसंबु-
L 434 द्धप्रतिज्ञारोहणसदेवलोकानभिभूतप्रतिज्ञावैशारद्यप्राप्तत्वान्निरवशेषसर्वधर्माभिसंप्रबुद्धप्रतिज्ञारोहणसदेव-
R 562 लोकेऽनभिभूतप्रतिज्ञावैशारद्यप्राप्त इत्युच्यते। सर्वसांक्लेशिकान्तरायिकधर्मान्तरायकरणानिर्वाणस्येति-
तत्प्रतिज्ञारोहणसदेवके लोकेऽनाछेद्यप्रतिज्ञावैशारद्यप्राप्तत्वात्सर्वसांक्लेशिकान्तरायिकधर्मान्तरायकरणा-
निर्वाणस्येति तत्प्रतिज्ञारोहणसदेवके लोकेऽनाछेद्यप्रतिज्ञावैशारद्यप्राप्त इत्युच्यते। नैर्याणिकीं प्रतिपदं
प्रतिपद्यमानो निर्वाणमारागयिष्यतीति प्रतिज्ञारोहणसदेवके लोकेऽप्रतिचोद्यप्रतिज्ञावैशारद्यप्राप्तत्वान्नै-
र्याणिकीं प्रतिपदं प्रतिपद्यमानो निर्वाणमारागयिष्यतीति प्रतिज्ञारोहणसदेवके लोकेऽप्रतिचोद्यप्रतिज्ञा-
वैशारद्यप्राप्त इत्युच्यते। सर्वाश्रवक्षयज्ञानप्रहाणज्ञानप्रतिज्ञारोहणसदेवके लोकेऽविवर्त्यप्रतिज्ञावैशारद्य-
प्राप्तत्वात्सर्वाश्रवक्षयज्ञानप्रहाणज्ञानप्रतिज्ञारोहणसदेवके लोकेऽविवर्त्यप्रतिज्ञावैशारद्यप्राप्त इत्युच्यते।
अस्खलितपदधर्मदेशकत्वादस्खलितपदधर्मदेशक इत्युच्यते। अरुतानभिलाप्यधर्मस्वभावानुबुद्ध-
त्वादरुतानभिलाप्यधर्मस्वभावानुबुद्ध इत्युच्यते। अविरतत्वादविरत इत्युच्यते। सर्वसत्त्वरुता-
प्रमाणबुद्धधर्मरुतनिर्घोषाधिष्ठानसमर्थत्वात्सर्वसत्त्वरुताप्रमाणबुद्धधर्मरुतनिर्घोषाधिष्ठानसमर्थ इत्युच्यते।

---

१ R °मण्डल° for °मण्डन°. २ R °विषयित्वात् for °विशेषत्वात्. ३ R °ज्ञान° for °यान°.
४ R °हेतुविपाकज्ञान° for °हेतुशो विपाकशो ज्ञान°. ५ R अनेकलोकधातुनानालोकधातु° for अनेक-
धातुना धातु°.

अमुषितस्मृतित्वादमुषितस्मृतिरित्युच्यते। नानात्वसंज्ञाविगतत्वान्नानात्वसंज्ञाविगत इत्युच्यते।
सर्वचित्तसमाहितसुमाहितसत्त्वात्सर्वचित्तसमाहितसुसमाहित इत्युच्यते। अप्रतिसंख्यासमुपेक्षक-
त्वादप्रतिसंख्यासमुपेक्षक इत्युच्यते। छन्दसंस्कारसमाध्यपरिहीनत्वाच्छन्दसंस्कारसमाध्यपरिहीन
इत्युच्यते। वीर्यसंस्कारसमाध्यनाछेद्यापरिहीनवीर्यत्वाद्वीर्यसंस्कारसमाध्यपरिहीनवीर्य इत्युच्यते।
स्मृत्यपरिहीनत्वादपरिहीनस्मृतिरित्युच्यते। अपरिहीनप्रज्ञत्वादपरिहीनप्रज्ञ इत्युच्यते। विमुक्त्यपरि- R 563
हीनत्वादपरिहीनविमुक्तिरित्युच्यते। विमुक्तिज्ञानदर्शना[1]प्रहीनत्वादपरिहीनविमुक्तिज्ञानदर्शन इत्युच्यते। L 435
सर्वकायकर्मवाक्कर्ममनस्कर्मज्ञानपूर्वंगमज्ञानानुपरिवर्तिसमन्वागतत्वात्सर्वकायवाङ्मनस्कर्मज्ञानपूर्वंगम-
ज्ञानानुपरिवर्तिज्ञानसमन्वागत इत्युच्यते। अतीतानागतप्रत्युत्पन्नेष्वध्वस्वसङ्गाप्रतिहतज्ञानदर्शनसमन्वा-
गतत्वात् त्र्यध्वासङ्गाप्रतिहतज्ञानदर्शनसमन्वागत इत्युच्यते। अनावरणविमोक्षप्रतिलब्धत्वादनावरण-
विमोक्षप्रतिलब्ध[2] इत्युच्यते। अधिष्ठितसर्वसत्त्वचरितप्रवेशकौशल्यावस्थितत्वोदधिष्ठितसर्वसत्त्वचरित-
प्रवेशकौशल्यावस्थित इत्युच्यते। यथा[3]प्रत्यर्हधर्मदेशनाकुशलत्वाद्यथाप्रत्यर्हधर्मदेशनाकुशल इत्युच्यते।
सर्वस्वराङ्गमण्डलपरमपारमिताप्राप्तत्वात्सर्वस्वराङ्गमण्डलपरमपारमिताप्राप्त इत्युच्यते। सर्वरुतप्रतिरुत-
निश्चारणकौशल्यप्राप्तत्वादेवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगरुत इत्युच्यते। ब्रह्मस्वररुतरवितनिर्घोष
इत्युच्यते। कलविङ्करुतस्वर इत्युच्यते। दुन्दुभिसंगीतिरुतस्वर इत्युच्यते। धरणीतलनिर्नादनिर्घोषस्वर
इत्युच्यते। सागरनागेन्द्रमेघस्तनितगर्जितघोषस्वर इत्युच्यते। सिंहवृषभिताभिगार्जितनिर्घोषस्वर इत्युच्यते।
सर्वसत्त्वरुतरवितानुचरणसंतोषणस्वर इत्युच्यते। असङ्गानावरणसर्वपर्षन्मण्डलाभिराधनस्वर इत्युच्यते। R 564
एकरुतात्सर्वरुतसंप्रापनस्वर इत्युच्यते। ब्रह्मेन्द्रपूजित इत्युच्यते। देवेन्द्रसत्कृत इत्युच्यते। नागेन्द्रनमस्कृत
इत्युच्यते। यक्षेन्द्रावलोकितमुखमण्डल इत्युच्यते। गन्धर्वेन्द्रोपगीत इत्युच्यते। राक्षसेन्द्रप्रसन्नेन्द्रियानि-
निमिषनयनसंप्रेक्षित इत्युच्यते। असुरेन्द्राभिप्रणत इत्युच्यते। गरुडेन्द्राविहिंसाप्रेक्षित इत्युच्यते।
किन्नरेन्द्राभिष्टुत इत्युच्यते। महोरगेन्द्राभिलषितदर्शन इत्युच्यते। मनुजेन्द्राभिसंपूजित इत्युच्यते।
अर्हद्गण[4]सेवित इत्युच्यते। सर्वबोधिसत्त्वसमादायकसमुत्तेजकसंहर्षक इत्युच्यते। निरामिषधर्म- L 436
देशक इत्युच्यते। अक्षुण्णपदव्यञ्जनावन्ध्यधर्मदेशक इत्युच्यते। कालानतिक्रमणधर्मदेशक इत्युच्यते।
इदं तन्मैत्रेय धर्मचक्रप्रवर्तनं तथागतगुणवर्णप्रदेशस्य यत्किंचिदवतारमात्रं संक्षेपेण निर्देशितः।
विस्तरेण पुनर्मैत्रेय तथागतः कल्पं वा कल्पावशेषं वा निर्दिशेत्। न चास्य निर्दिश्यमानस्य
पर्यन्तो भवेत्॥

अथ खलु भगवांस्तस्यां वेलायामिमां गाथामभाषत—

गम्भीरं दुर्दृशं सूक्ष्मं धर्मचक्रं प्रवर्तितम्।
यत्र मारा[5] न गाहन्ते सर्वे च परतीर्थिकाः॥ ५२॥

अनालयं निष्प्रपञ्चं अनुत्पादमसंभवम्।
विविक्तं प्रकृतीशून्यं धर्मचक्रं प्रवर्तितम्॥ ५३॥

---

१ R °दर्शनप्रहीन° for °दर्शनाप्रहीन°. २ R °विमोक्षप्राप्त for °प्रतिलब्ध. ३ R यथा प्रत्यहं for यथाप्रत्यर्ह°. ४ R अर्हद्गणसंघसेवित for अर्हद्गणसेवित. ५ R मार्गा for मारा.

अनायूहमनिर्यूहमनिमित्तमलक्षणम् ।
R 565 समताधर्मनिर्देशं चक्रं बुद्धेन वर्णितम् ॥ ५४ ॥

मायामरीचि स्वप्नं[1] च दकचन्द्र प्रतिश्रुत्का ।
यथैते तथा तच्चक्रं लोकनाथेन वर्तितम् ॥ ५५ ॥

प्रतीत्यधर्मओतारमनुच्छेदमशाश्वतम् ।
सर्वदृष्टिसमुच्छेदो धर्मचक्रमिति स्मृतम् ॥ ५६ ॥

आकाशेन सदा तुल्यं निर्विकल्पं प्रभास्वरम् ।
अनन्तमध्यनिर्देशं धर्मचक्रमिहोच्यते ॥ ५७ ॥

अस्तिनास्तिविनिर्मुक्तमात्म्यनैरात्म्यवार्जितम् ।
प्रकृत्याजाति[2]निर्देशं धर्मचक्रमिहोच्यते ॥ ५८ ॥

L 437 भूतकोटीमकोटीं च तथतायां तथत्वतः ।
अद्वयो धर्मनिर्देशो धर्मचक्रं निरुच्यते ॥ ५९ ॥

चक्षुः स्वभावतः शून्यं श्रोतं घ्राणं तथैव च ।
जिह्वा कायं च चित्तं च शून्यात्मानो निरीहकः ॥ ६० ॥

इदं तदीदृशं चक्रं धर्मचक्रं प्रवर्तितम् ।
बोधयत्यबुधान् सत्त्वांस्तेन बुद्धो निरुच्यते ॥ ६१ ॥

स्वयं मयानुबुद्धोऽयं स्वभावो धर्मलक्षणम् ।
ऋते परोपदेशेन स्वयंभूस्तथ[3] चक्षुमान् ॥ ६२ ॥

सर्वधर्मवशिप्राप्तो धर्मस्वामी निरुच्यते ।
नयानयज्ञो धर्मेषु नायकस्तेन चोच्यते ॥ ६३ ॥

R 566 यथा भवन्ति वैनेया विनयाम्यमितां जनां ।
विनेयपारमिप्राप्तस्तेन प्रोक्तो विनायकः ॥ ६४ ॥

नष्टमार्गा हि ये सत्त्वा मार्गं देशेमि उत्तमम् ।
नयामि पारिमं तीरं तस्मादस्मि विनायकः ॥ ६५ ॥

संग्रहावस्तुज्ञानेन संगृह्य जनतामहम् ।
संसाराटविनिस्तीर्णः सार्थवाहस्ततो ह्यहम् ॥ ६६ ॥

वशवर्ती सर्वधर्मेषु तेन धर्मेश्वरो जिनः ।
धर्मचक्रं प्रवर्तित्वा धर्मराजो निरुच्यते ॥ ६७ ॥

---

१ R स्वप्नोदक for स्वप्नं च दक. २ R जातनिर्देशं for जाति. ३ R तेन for तथ.

धर्मदानपतिः शास्ता धर्मस्वामी नि[1]रुत्तरः ।
सुयष्टयज्ञसिद्धार्थः पूर्णाशः सिद्धमङ्गलः ॥ ६८ ॥

आश्वासकः क्षेमदर्शी शूरो महारणंजहः ।
उत्तीर्णस[2]र्वसंग्रामो मुक्तो मोचयिता प्रजाः ॥ ६९ ॥

आलोकभूतो लोकस्य प्रज्ञाज्ञानप्रभंकरः । L 438
अज्ञानतमसो हन्ता उल्काधारि महाप्रभः ॥ ७० ॥

महावैद्यो महाज्ञानी म[3]हाक्लेशचिकित्सकः ।
सत्वानां क्लेशविद्धानां शल्यहर्ता निरुत्तरः ॥ ७१ ॥

सर्वलक्षणसंपन्नः सर्वव्यञ्जनशोभितः । R 567
समन्तभद्रकायेन हीनानां चानुवर्तकः ॥ ७२ ॥

दशभिर्बलभिर्बलवान् वैशारद्यविशारदः ।
आवेणिकैरष्टदशै अग्रयानी महामुनिः ॥ ७३ ॥

एष संक्षेपनिर्देशो ध[4]र्मचक्रप्रवर्तने ।
तथागतगुणवर्णः परीत्तोऽयं प्रकाशितः ॥ ७४ ॥
बुद्धज्ञानमनन्तं हि आकाशविपुलं समम् ।
क्षपयेत्कल्प भाषन्तो न च बुद्धगुणक्षयः ॥ ७५ ॥ इति ॥

॥ इति श्रीललितविस्तरे धर्मचक्रप्रवर्तनपरिवर्तो नाम षड्विंशतितमोऽध्यायः ॥

---

१ R निरुच्यते for निरुत्तरः. २ R °भवसंग्रामो for °सर्व°. ३ R सर्वक्लेश° for महाक्लेश°.
४ R धर्मचक्रं प्रवर्तते for चक्रप्रवर्तने.

# निगमपरिवर्तः सप्तविंशः ।

अथ खलु देवपुत्रा यैस्तथागतोऽधीष्टो[1]ऽभूदस्य धर्मपर्यायस्य संप्रकाशनाय[2] सह महेश्वर-
नन्द[3]सुनन्दचन्दनमहितशान्त[4]प्रशान्तविनीतेश्वरप्रमुखा अष्टादश शुद्धावासकायिका देवपुत्र-
सहस्राणि ये तथागतस्य धर्मचक्रप्रवर्तनेऽपि संनिपतिता अभूवन् । तत्र भगवांस्तान् महेश्वरदेव-
पुत्रप्रमुखान् शुद्धावासकायिकान् देवपुत्रानामन्त्रयते स्म—अयं स मार्षा ललितविस्तरो नाम धर्मपर्याय-
L 439 सूत्रान्तो महावैपुल्यबोधिसत्त्वविक्रीडितः बुद्धविषये ललितप्रवेश आत्मोपनायिकस्तथागतेन भाषितः।
R 568 तं यूयमुद्गृह्णीध्वं धारयत वाचयत च । एवमियं धर्मनेत्री वैस्तारिकी भविष्यति । बोधिसत्त्व-
यानिकाश्च पुद्गला इमं धर्मपर्यायं श्रुत्वा दृढतरं वीर्यमालप्स्यन्ते । अनुत्तरायां सम्यक्संबोधा-
वुदाराधिमुक्तिकाश्च सत्त्वा महाधर्मवर्ष[5]वेगं संजानयिष्यन्ति। मारपक्षश्च निगृहीतो भविष्यति। सर्वपर-
प्रवादिनश्चावतारं न लप्स्यन्ते । युष्माकं च तद्धर्मदेशनाध्येषणा कुशलमूलं महार्थिकं भविष्यति
महाफलं महानुशंसम् ॥

यः कश्चिन्मार्षा अस्य ललितविस्तरस्य धर्मपर्यायस्याञ्जलिं संप्रगृहीतं करिष्यति, सोऽष्टा-
वुत्कृष्टान् धर्मान् प्रतिलप्स्यते । कतमानष्टौ? तद्यथा—उत्कृष्टं रूपं प्रतिलप्स्यते । उत्कृष्टबलं
प्रतिलप्स्यते। उत्कृष्टपरिवारं प्रतिलप्स्यते । उत्कृष्टप्रतिभानं प्रतिलप्स्यते। उत्कृष्टनैष्क्रम्यं[6] प्रतिलप्स्यते।
उत्कृष्टचित्तपरिशुद्धिं प्रतिलप्स्यते । उत्कृष्टसमाधिपदं प्रतिलप्स्यते । उत्कृष्टप्रज्ञावभासं प्रतिलप्स्यते।
इमान्यष्टावुत्कृष्टान् धर्मान् प्रतिलप्स्यते ॥

यः कश्चिन्मार्षा इमं ललितविस्तरं धर्मपर्यायं भाषितुकामस्य धर्मभाणकस्य धर्मासनं प्रज्ञापयिष्यति, तस्याष्टावासनप्रतिलम्भाः प्रतिकाङ्क्षितव्याः सहप्रज्ञप्ते आसने । कतमेऽष्टौ? तद्यथा—श्रेष्ठ्यासनप्रतिलम्भः । गृहपत्यासनप्रतिलम्भः । चक्रवर्त्यासनप्रतिलम्भः । लोकपालासनप्रतिलम्भः । शक्रासनप्रतिलम्भः । वशवर्त्यासनप्रतिलम्भः । ब्रह्मासनप्रतिलम्भः । बोधिमण्डवराग्रगतस्य बोधिसत्त्वभूतस्याप्रत्युदावर्त्यनिहतमारप्रत्यर्थिकसिंहासनप्रतिलम्भः । अनुत्तरासम्यक्संबोधिमभिसंबुद्धस्य अतोऽनुत्तरधर्मचक्रप्रवर्तनासनप्रतिलम्भश्च प्रतिकाङ्क्षितव्यः । इमेऽष्टावासन-
R 569 प्रतिलम्भाः प्रतिकाङ्क्षितव्याः ॥

L 440 य कश्चिन्मार्षा इमं ललितविस्तरं धर्मपर्यायं भाषमाणाय साधुकारं दास्यति, सोऽष्टौ
वाक्परिशुद्धीः प्रतिलप्स्यते । कतमा अष्टौ ? तद्यथा—यथावादितथाकारितां सत्यानुपरिवर्तिवाक्कर्म-
परिशुद्ध्या । आदेयवचनतां पर्षद[7]मभिभवनतया । ग्राह्यवचनतां अनुद्धुरतया[8] । श्लक्ष्णमधुरवचनतां
अपाकृष्यसत्त्वसंग्रहणतया । कलविङ्करुतस्वरतां कायचित्तोद्बिल्यकरणतया । तदुक्त[9]वचनतां
सर्वसत्त्वैर[10]नभिभवनतया । ब्रह्मस्वरतां सर्वस्वराभिभवनतया । सिंहघोषाभिगर्जितस्वरतां सर्वपर-

---

१ R अधिष्ठितो for अधीष्टो. २ R संप्रकाशनतायै. ३ R नन्दनसुनन्दन for नन्दसुनन्द.° ४ R om. °शान्त°. ५ R °हर्ष° for °वर्ष°. ६ R °नैष्क्रम्यं for °नैष्कर्म्यं. ७ R om. पर्षद्. ८ R अनुद्धरणतया for अनुद्धुरतया. ९ R मधुर° for तदुक्त°. १० R अपाकृष्यसत्त्वसंग्रहणतया for सर्वसत्त्वैरनभिभवनतया.

प्रवादिभिरनभिभवनतया । बुद्धस्वरतां सर्वसत्त्वेन्द्रियपरितोषणतया । इमा अष्टौ वाक्कर्मपरिशुद्धीः
प्रतिलप्स्यते ॥

यः कश्चिन्मार्षा इमं ललितविस्तरं धर्मपर्यायं पुस्तकलिखितं कृत्वा धारयिष्यति सत्करिष्यति
गुरुकरिष्यति मानयिष्यति पूजयिष्यति, अमात्सर्यचित्ततया चतुर्दिशमस्य धर्मपर्यायस्य वर्णनां
भाषिष्यते वर्णनां[1] चोच्चारयिष्यति—आगच्छतेमं धर्मपर्यायं लिखितं धारयत वाचयत चिन्तयत
स्वाध्यायतेति, सो अष्टौ महानिधानानि प्रतिलप्स्यते । कतमान्यष्टौ महानिधानानि ? यदुत
स्मृतिनिधानं असंमोषणतया[2] । मतिनिधानं बुद्धिप्रभेदनतया । गतिनिधानं सर्वसूत्रान्तार्थगत्यनुराग-
तया । धारणीनिधानं सर्वश्रुताधारणतया । प्रतिभाननिधानं प्रतिलभते सर्वसत्त्वसुभाषित- R 570
संभाषणतया । धर्मनिधानं प्रतिलभते सद्धर्मप्रतिलक्षणतया । बोधिचित्तनिधानं त्रिरत्नवंशानुपच्छेदन-
तया । प्रतिपत्तिनिधानं चानुत्पत्तिकधर्मक्षान्तिप्रतिलम्भतया । इमान्यष्टौ निधानानि प्रतिलप्स्यते ॥

यः कश्चिन्मार्षा इमं ललितविस्तरं धर्मपर्यायं सुप्रवर्तितं कृत्वा धारयिष्यति, सोऽष्टौ L 441
संभारान् परिपूरयिष्यति । कतमानष्टौ ? तद्यथा[3]—यदुत दानसंभारं परिपूरयिष्यति अमात्सर्यचित्ततया ।
शीलसंभारं परिपूरयिष्यति सर्वकल्याणाभिप्रायपरिपूरणतया । श्रुतसंभारं परिपूरयिष्यति असङ्ग-
प्रज्ञासमुदानयनतया[4] । शमथसंभारं परिपूरयिष्यति सर्वसमाधिसमापत्त्यामुखीकरणतया । विदर्शना-
संभारं परिपूरयिष्यति त्रैविद्यविद्याप्रतिपूर्या[5] । पुण्यसंभारं परिपूरयिष्यति लक्षणानुव्यञ्जनबुद्धक्षेत्रालं-
कारविशुद्ध्या । ज्ञानसंभारं परिपूरयिष्यति सर्वसत्त्वयथाधिमुक्तिसंतोषणतया । महाकरुणा संभारं
परिपूरयिष्यति सर्वसत्त्वपरिपाचनापरिखेदतया । इमानष्टौ संभारान् परिपूरयिष्यति ॥

यः कश्चिन्मार्षा इमं ललितविस्तरं धर्मपर्यायं परेभ्यश्च विस्तरेण संप्रकाशयिष्यति, एवं-
चित्तो यदुत कथममी सत्त्वा एषामेवरूपाणां धर्माणां लाभिनो भवेयुरिति, स तेन कुशलमूलेनाष्टौ
महापुण्यताः प्रतिलप्स्यते । कतमा अष्टौ ? तद्यथा—राजा भवति चक्रवर्ती, इयं प्रथमा महापुण्यता । R 571
चतुर्महाराजकायिकानां देवानामाधिपत्यं कारयिष्यति, इयं द्वितीया महापुण्यता । शक्रो भविष्यति
देवेन्द्रः, इयं तृतीया महापुण्यता । सुयामो भविष्यति देवपुत्रः, इयं चतुर्थी महापुण्यता । संतुषितो
भविष्यति, इयं पञ्चमी महापुण्यता । सुनिर्मितो भविष्यति, इयं षष्ठी महापुण्यता । वशवर्ती
भविष्यति देवराजः, इयं सप्तमी महापुण्यता । ब्रह्मा भविष्यति महाब्रह्मा, इयं अष्टमी महापुण्यता ।
अन्ते च तथागतो भविष्यति अर्हन् सम्यक्संबुद्धः सर्वाकुशलधर्मप्रहीनः सर्वकुशलधर्मसमन्वागतः ।
इमा अष्टौ महापुण्यताः प्रतिलप्स्यते ॥

यः कश्चिन्मार्षा इमं ललितविस्तरं धर्मपर्यायं भाष्यमाणमवहितश्रोतैः[6] श्रोष्यति, सोऽष्टौ L 442
चित्तनिर्मलताः प्रतिलप्स्यते । कतमा अष्टौ ? तद्यथा[7]—यदुत मैत्रीं प्रतिलप्स्यते सर्वदोषनिर्घाताय ।
करुणां प्रतिलप्स्यते सर्वविहिंसोत्सर्गाय । मुदितां प्रतिलप्स्यते सर्वारत्यपकर्षणतायै[8] । उपेक्षां प्रति-
लप्स्यते अनुनयप्रतिघोत्सर्गाय । चत्वारि ध्यानानि प्रतिलप्स्यते सर्वरूपधातुवशवर्तितायै । चतस्र

१ R वर्णे for वर्णनां. २ R सममतमोषणतया for असंमोषणतया. ३ R om. तद्यथा.
४ R असंज्ञप्रज्ञा° for असङ्गप्रज्ञा°. ५ R त्रैविद्याशुद्धिप्रति° for त्रैविद्यविद्याप्रति°. ६ R श्रोता for श्रोतैः.
७ R om. तद्यथा. ८ R सर्वाकारात्ययाप° for सर्वारत्यप°.

आरूप्यसमापत्तीः प्रतिलप्स्यते चित्तवशवर्तितायै । पञ्चाभिज्ञाः प्रतिलप्स्यते अन्यबुद्धक्षेत्रगमनतायै । सर्ववासनानुसंधिसमुद्घातं प्रतिलप्स्यते शूरंगमसमाधिप्रतिलम्भाय । इमा अष्टौ चित्तनिर्मलताः प्रतिलप्स्यते ॥

यस्मिंश्च मार्षा ग्रामे वा नगरे वा निगमे वा जनपदे वा जनपदप्रदेशे वा चंक्रमे वा विहारे
वा अयं ललितविस्तरो धर्मपर्यायः प्रचरिष्यति, तत्राष्टौ भयानि न प्रभविष्यन्ति स्थापयित्वा पूर्व-
कर्मविपाकम् । कतमान्यष्टौ ? तद्यथा—यदुत राजसंक्षोभभयं न भविष्यति । चौरसंक्षोभभयं
R 572 न भविष्यति । व्यालसंक्षोभभयं न भविष्यति । दुर्भिक्षकान्तारसंक्षोभभयं न भविष्यति ।
अन्योन्यकलहविवादविग्रहसंक्षोभभयं न भविष्यति । देवसंक्षोभभयं न भविष्यति । नाग[1]संक्षोभ-
भयं न भविष्यति । यक्षसंक्षोभभयं न भविष्यति । सर्वोपद्रवसंक्षोभभयं न भविष्यति । इमानि
मार्षास्तत्राष्टौ भयानि न भविष्यन्ति [स्थापयित्वा पूर्वकर्मविपाकम्]॥

संक्षेपान्मार्षा यदि तथागतः कल्पस्थितिकेनायुष्प्रमाणेन रात्रिंदिवमधिष्ठमानोऽस्य धर्मपर्या-
L 443 यस्य वर्णं भाषते, नैवास्य धर्मपर्यायस्य वर्णपर्यन्तो भवेन्न च तथागतप्रतिभानस्य क्षयो भवेत् ।
अपि तु खलु पुनर्मार्षा यथैव तथागतस्य शीलसमाधिप्रज्ञाविमुक्तिज्ञानदर्शनमप्रमाणमपर्यन्तम्,
एवमेव मार्षा य इमं धर्मपर्यायमुद्ग्रहीष्यति धारयिष्यति वाचयिष्यति लिखिष्यति लेखयिष्यति
पर्यवाप्स्यति प्रवर्तयिष्यति, पर्षन्मध्ये च विस्तरेण संप्रकाशयिष्यति—अनेन चित्तेन कथममी सत्त्वा
एवमुदारस्य धर्मस्य लाभिनः स्युरिति, तेषामपि नास्ति पुण्यपर्यन्तः ॥

ततः खलु भगवानायुष्मन्तं महाकाश्यपमामन्त्रयते स्म आयुष्मन्तं चानन्दं मैत्रेयं च
बोधिसत्त्वं महासत्त्वम्—इमामहं मार्षा असंख्येयकल्पकोटिनयुतशतसहस्रसमुदानीतामनुत्तरां
R 573 सम्यक्संबोधिं युष्माकं हस्ते परिदाम्यनु[2]परिन्दामि परमया परिन्दनया, स्वयं चैवमिमं धर्मपर्यायं
धारयत, परेभ्यश्च विस्तरेण संप्रकाशयत ॥

इत्युक्त्वा[3] च भगवानस्यैव धर्मपर्यायस्य भूयस्या मात्रयानु[4]परिन्दनार्थं तस्यां वेलायामिमां गाथामभाषत—

सत्त्वा दृष्टा ये मया बुद्धदृष्ट्या
स्युस्तेऽर्हन्तः शारिपुत्रेण तुल्याः ।
तांश्चेत्कश्चित्पूजयेत्कल्पकोटी
तुल्यां गङ्गावालिकाभिर्यथैव ॥ १ ॥

प्रत्येकबुद्धाय तु यश्च पूजां
कुर्यादहोरात्रमपि प्रहृष्टः ।
माल्यैः प्रकारैश्च तथापरैश्च
तस्मादयं पुण्यकृतो विशिष्यते ॥ २ ॥

---

१ R नागयक्षसंक्षोभ° for नागसंक्षोभ°. २ R अनुपरिन्दयामि for अनुपरिन्दामि. ३ R अथ खलु for इत्युक्त्वा च. ४ R अनुपरिनन्द° for अनुपरिन्द°.

[1]स्युः सर्वसत्त्वा यदि प्रत्ययैर्जिना
तां पूजयेत्कश्चिदिहाप्रमत्तः ।
पुष्पैश्च गन्धैश्च विलेपनैश्च
[2]कल्पाननेकां सततं हि तत्परम् ॥ ३ ॥
एकस्य यश्चैव तथागतस्य
कुर्यात्प्रणामं अपि चैकशोऽपि ।
प्रसन्नचित्तोऽथ वदेन्नमोऽर्हते
तस्मादिदं श्रेष्ठतरं च पुण्यम् ॥ ४ ॥
बुद्धा भवेयुर्यदि सर्वसत्त्वा R 574
तां पूजयेद्यश्च यथैव पूर्वम् ।
दिव्यैश्च पुष्पैरथ मानुषैर्वरैः
[2]कल्पाननेकां बहुभिः प्रकारैः ॥ ५ ॥
यश्चैव सद्धर्मविलोपकाले L 444
त्यक्त्वा स्वकाये च तथैव जीवितम् ।
[3]वद्यादहोरात्रमिदं हि सूत्रं
विशिष्यते पुण्यमिदं हि तस्मात् ॥ ६ ॥
यस्येप्सितं पूजयितुं विनायकां
प्रत्येकबुद्धांश्च तथैव श्रावकां ।
दृढं समुत्पाद्य स बोधिचित्त
इदं सदा सूत्रवरं दधातु ॥ ७ ॥
राजा ह्ययं सर्वसुभाषितानां
योऽभ्युद्गतः सर्वतथागतानाम् ।
गृहे स्थितस्तस्य तथागतः सदा
तिष्ठेदिदं यत्र हि सूत्ररत्नम् ॥ ८ ॥
[4]प्रतिभां स प्राप्नोति शुभामनन्तां
एकं पदं वक्ष्यति कल्पकोटी ।
न व्यञ्जना भ्रश्यति नापि चार्था
[5]दद्याच्च यः सूत्रमिदं परेभ्यः ॥ ९ ॥
अनुत्तरोऽसौ नरनायकानां
सत्त्वो न कश्चित्सदृशोऽस्य विद्यते ।

१ R om. स्युः सर्व॰. २ R कल्याणलोका for कल्पाननेकां. ३ R दद्याद् for वद्याद्. ४ R प्रतिभाःसमाप्नोति for प्रतिभा स प्राप्नोति. ६ R ददाति यः for दद्याच्च यः.

R 575 भवेत्समुद्रेण समश्च सोऽक्षयः
श्रुत्वा हि यो धर्ममिमं प्रपद्यते ॥ १० ॥ इति ॥

इदमवोचद्भगवानात्तमनाः । ते महेश्वरदेवपुत्रपूर्वंगमाः शुद्धावासकायिका देवपुत्रा मैत्रेयपूर्वंगमाश्च सर्वबोधिसत्त्वा महासत्त्वा महाकाश्यपपूर्वंगमाश्च सर्वमहाश्रावकाः सदेवमानुषासुरगन्धर्वश्च[1] लोको भगवतो भाषितमभ्यनन्दन् ॥ इति ॥

॥ इति श्रीललितविस्तरे निगमपरिवर्तो नाम सप्तविंशतितमोऽध्यायः ॥

समाप्तं चेदं सर्वबोधिसत्त्वचर्याप्रस्थानम् ॥

॥ श्रीललितविस्तरो नाम महायानसूत्रं रत्नराजं परिसमाप्तम् ॥

* * * * *

ये धर्म हेतुप्रभवा[2] हेतुं[3] तेषां तथागतो ह्यवदत् ।
तेषां च यो निरोध एवं वादी महाश्रमणः ॥



१ R °गन्धर्वगरुडाश्च for °गन्धर्वश्च. २ R प्रभावा for प्रभवा. ३ R हेतुः for हेतुं.

# श्लोकसूची ।

# बौद्धसंस्कृतग्रन्थावल्यां प्रकाश्यत्वेन संकलिपता ग्रन्थाः ।



## १ नव धर्माः–

१ ललितविस्तरः

२ समाधिराजसूत्रम्

३ लङ्कावतारसूत्रम्

४ अष्टसाहस्रिका ( प्रज्ञापारमिता )

५ गण्डव्यूहसूत्रम्

६ सद्धर्मपुण्डरीकसूत्रम्

७ दशभूमिकसूत्रम्

८ सुवर्णप्रभाससूत्रम्

९ तथागतगुह्यकम्

## २ माध्यमिकमते:–

१० मध्यमकशास्त्रं नागार्जुनीयम्, आचार्यचन्द्रकीर्तिविरचितया प्रसन्नपदाख्य-व्याख्यया संवलितम्

११ शिक्षासमुच्चयः शान्तिदेवविरचितः

१२ बोधिचर्यावतारः शान्तिदेवविरचितः प्रज्ञाकरमतिविरचितया पञ्जिकाख्य-व्याख्यया संवलितः

## ३ योगाचारमते:–

१३ सूत्रालंकारः आचार्यासङ्गविरचितः

## ४ विनयाः–

१४–१५ महावस्तु–लोकोत्तरवादिनां वितयः

१६ मूलसर्वास्तिवादिनां विनयः ( Gilgit Mss. )

## ५ महायानसूत्रसंग्रहः–

१७ प्रथमः खण्डः—वज्रच्छेदिका, सुखावतीव्यूहः, कारण्डव्यूहः, राष्ट्रपालपरिपृच्छा, शालिस्तम्बसूत्रम्, प्रतीत्यसमुत्पादसूत्रम्

१८ द्वितीयः खण्डः—अन्येषां सूत्राणां संग्रहः

६ अवदानसंग्रहः–

१९ अवदानशतकम्

२० दिव्यावदानम्

२१ जातकमाला ( बोधिसत्त्वावदानमाला ) सुभाषितरत्नकरण्डककथा च आर्य शूरविरचिता

२२–२३ अवदानकल्पलता क्षेमेन्द्रविरचिता

७ प्रकीर्णग्रन्थाः–

२४ महायानस्तोत्रसंग्रहः

२५ अश्वघोषग्रन्थाः– बुद्धचरितम्, सौन्दरनन्दम् शारिपुत्रप्रकरणम्

*Copies of this Volume, postage paid, can be had from your usual Book-seller or from the Director, Mithila Institute, Darbhanga, on prepayment of Rs. 10.00 for Ordinary edition and Rs. 12.50 for Library edition either in cash, Postal Order or M. O.*

---

